गौडपादीयम्

# आगमशास्त्रम्

भट्टाचार्येण विधुशेखरेण

रचितया वृत्त्या

सहितम्




कलिकाताविश्वविद्यालयतः

प्रकाशितम्

*Rs. 8/8/-*

# सूचोपत्रम्

# निवेदनम्

तदेतद्वृत्तिपूर्वम्[१] प्राक् त्रिंशतोऽपि वत्सरेभ्यः। तदाहं किञ्चित्परिचितसौगतमतः। तस्य मे कदाचिद्भगवद्गौडपादाचार्यकृतेरागमशास्त्र[१]स्यैतश्च ततश्च कानिचित्पत्राणि स्वैरमुद्वर्तयतोऽचित्रीयत चित्तमतिमात्रम्। अतर्कितमेव हि तत्र किञ्चिदचिन्तितचरं प्रत्यभासत मे चेतसि। किं तदिति स्तोकं व्याकृतं मया प्राक्केषुचिल्लघुषु निबन्धेषु वङ्गवाच्याङ्गलवाचि च। तत्र ते यद्यपि केषाञ्चिदभिनवानां विचक्षणानामरञ्जयंश्चेतांसि सर्वथापि तु प्राचीनां पद्धतिमनुसरतां केषाञ्चित्स्वयूथ्यानामुदपादयंस्ते क्षोभं मन्युं चातिमहान्तम्। प्रायेण हि पुरुषा न मृष्यन्ति मतानि परकीयाणि।

न खलु न सन्ति व्याख्यानान्यागमशास्त्रस्य। नैकमपि तु तेषां मनोरमं म इत्यभिनवो ममायं परिकरः। न पुनस्तावता कश्चिन्मन्तुमर्हति ममैवेयं वृत्तिर्वृत्तिः। इयमेव व्याकरोत्यभिप्रायमविकलमाचार्यस्येति। न खल्वत्रभवानाविरभून्मे प्रबोधे स्वप्ने वा। न वावोचत्कर्णेऽयं करुणया वत्स तवैवेयं वृत्तिर्मदभिप्रेतेति। न चेश्वरः पुरः प्रादुर्भूय तथा किञ्चिन्मामकथयत्। न चास्मि सर्वज्ञः। तत्कथं नु जानीयां ब्रूयां वा सर्वोत्तमेयं वृत्तिर्मदीयेति।

भूयानिह दृश्यते मतभेदः। किं क्रियताम्। नेदं न विदितं लोके भिद्यन्ते मतानि पुंसामिति। प्रकृतिरेवेयं हि तेषाम्। न च प्रकृतेरन्यथाभावो भवतीत्याह स्वयमाचार्योऽप्यस्माकमसकृत् (३.२१; ४.७,२९)—

"प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यतीति।"

अस्यागमशास्त्रस्य भाष्यं विरचितं शङ्करेण। सोऽयं शङ्करस्तत्रभवतो ब्रह्मसूत्राणां शारीरकभाष्यकर्तुरन्यो न वेति न तावदिह चिन्त्यते। इष्यते तु चिन्तयितुमुपरिष्टादवतरणिकायाम्। यः कोऽप्येषोऽस्तु नाहमनया वृत्त्या तस्मादात्मनो मनागप्युत्कर्षमाविश्चि-

---

१। माण्डूक्यकारिकेति माण्डूक्योपनिषत्कारिकेति गौडपादकारिकेति चास्यैव नामान्तराणि।

कीर्षामि। न चार्हामि शक्नोमि वाविष्कर्तुं स्वप्नेऽपि वा भ्रमेऽपि वा। न खल्वहं तथा मूढो मत्तः प्रमत्तो वा यथाहं नेयदपि वेद्मि। यथा वा भवतु। कृता मयेयं वृत्तिर्यथामति। यः पुनरिह प्रदर्शितो नयः किं स युज्यते न वेति विवेक्तुमर्हन्ति सन्तः। अवगन्तुं चात्र यदुक्तं य शा-मि त्रे ण स्फु टा र्था यां (पृ. २) नामा भि ध र्म को श व्या ख्या या म्—

"युक्ता चेद् ग्राह्येयं न चेदन्यथा विधातव्या।
न हि विषमेऽर्थे स्खलितुं न सम्भवेन्मादृशां बुद्धिः॥" इति।

इह खलु वृत्तौ विषयाणां परिष्काराय धृतान्यनेकानि सौगतमत-वचनानि। तेषां च कानिचित्संस्कृते कानिचित्पालौ कानिचिच्च भोटवाचि। तत्र सुगमत्वसिद्धये क्वचित्क्वचित् पालिवचनानां प्रदर्शिता संस्कृतच्छायापि। एवं भोटपाठानां क्वचिच्च चीनपाठानामपि संस्कृत-च्छायैव प्रदर्शिता न पुनर्मूलपाठोऽपि। अपरिचिततद्वाचां वाचकानां नोपकाराय स भवेदिति।

संस्कृतं नामाद्यत्वे न केवलं भारतभूमावेव प्रचरति अपितु सर्वस्यां वसुमत्याम्। न चेदमस्ति भारतीया एव संस्कृतं बुध्यन्ते नान्य इति। किमिह विवादेन। नहि प्रत्यक्षे किञ्चिदनुपपन्नं नाम। अतो नैतेऽप्युपेक्ष्याः प्रेक्षावताम्। एवमपि न मयैषां विदुषां प्रदर्शितास्तत्र तत्र वाचः। केवलं तु मतमात्रमुक्तं भूयस्त्वभिया।

किञ्च। किं न वयं स्मरेम यदुक्तं चा ण क्येन स्वकीयेऽर्थ शा स्त्रे (१.१५)—

"न कश्चिदवमन्येत परस्य शृणुयान्मतम्।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः॥" इति।

पूर्वं किल मयेयं वृत्तिराङ्गलभाषायामुपनिबद्धा। प्रकाशिता च सानु-ग्रहबुद्ध्यात्रत्येन विश्वविद्यालयेन। अथ साम्प्रतमुपचिकीर्षया स्वयूथ्याना-मेतस्या मया संस्कृतरूपमप्युपन्यस्यते। आङ्गलवृत्तिं च विरचयता मया-ग म शा स्त्र मपि संस्कृतं परीक्ष्यानेकानि दिग्देशसंगृहीतानि पुस्तकानि हस्तलिखितानि संस्करणानि च बहूनि। प्रदर्शितश्च तत्र सविस्तरः पाठविवेकः। इह पुनः केचिदेवावश्यकाः पाठाः प्रदर्शिताः। विस्तरस्तु बुभुत्सुभिराङ्गलवृत्तौ द्रष्टव्यः।

चिन्तिता बहवोऽर्था अ व त र णि का यां यत्र विवदन्ते प्रायेण वादिनः। अतो नूनमत्रानेकानि विमतानि चानभिमतानि च वचनान्यधिगम्येरन्। तत्र यद्युक्तमुक्तं तदुपादातुं हातुं चान्यदर्हन्ति मनीषिणः।

स खलु सुविश्रुतो विद्वद्धौरेयो महामहोपाध्यायः श्री सी ता रा म-शा स्त्री य आसीन्मे सयुक् सखा कतिचिद्वत्सराणि कलिकाता-विश्वविद्यालये। स मेऽनुकम्पमानो यत्नादशोधयत्प्रायेण सर्वाणि मुद्रणपत्राणि। तच्च कुर्वता तेनेतश्च ततश्च युक्तायुक्तत्वं वृत्तेर्मे करुणया किञ्चिच्चिन्तितं यदभवन्म उपकारायातिमहत इत्यवश्यं वक्तव्यं मया कृतवेदिना। न पुनरत्र सर्वत्राप्यावयोः सर्वथा संवादः। न वा पुनः सर्वत्र सर्वथा विसंवादः। दृश्यते चेद्दोषस्तदर्थं वृत्तिकार एव सर्वत्र वाच्यो न पुनर्जातु स मे वरेण्यः सखा।

येनेयं संस्कृतवृत्तिरप्यस्या ग म शा स्त्र स्य प्रकाश्यते स जीयादनारत-मत्यो विश्वविद्यालयो जीयासुश्च शश्वन्निर्मत्सरा दोषज्ञाश्च परीक्षका इति शिवम्।

ब्र ह्म वि हा रे।
शक. १८७१। आश्विने। } भट्टाचार्यो विधुशेखरः।

# साङ्केतिकान्यक्षराणि

| | |
|---|---|
| अ. अ. आ. | अभिसमयालङ्कारालोकः ( गा. ओ. ग्रन्थमाला, ६७ )। |
| अ. को[१]. | अभिधर्मकोशः पोषणेन संस्कृतो विवृतः परिवर्तितश्च फ्रान्सवाचि। |
| अ. को[२]. | अभिधर्मकोशः राहुलसाङ्कृत्यायन-संस्कृतः। |
| अ. को. भा. | अभिधर्मकोशभाष्यम्। भोटपाठः। बिब्लिओथेका बुद्धिका। |
| अ. को. व्या[१] | अभिधर्मकोशव्याख्या यशोमित्रकृता। |
| अ. को. व्या[२] | सैव ओगिहारा-संस्कृता। |
| अ. चि. | अभिधानचिन्तामणिः। |
| अ. नि. | अङ्गुत्तरनिकायो ( पालिटेक्स्ट् सोसाइटी )। |
| अ. प. | अभिधानप्पदीपिका ( गुजरात-पुरातत्त्वमन्दिरम् )। |
| अम. को. | अमरकोशः। |
| अ. वे. | अथर्ववेदः। |
| अ. श. | अष्टोत्तरशतोपनिषदः ( निर्णयसागरः )। |
| अ. सा. | अट्ठसालिनी ( पालिटेक्स्ट् सोसाइटी )। |
| अ. सा. प्र. | अष्टसाहस्रिका प्रज्ञापारमिता। |
| आ. उ. | आत्मोपनिषद्। |
| आ. शा. | आगमशास्त्रम् ( एतदेव )। |
| आ. सू. | आचाराङ्गसूत्रम् ( पालिटेक्स्ट् सोसाइटी ) |
| ई. उ. | ईशोपनिषद्। |
| उ. / उप. | उपनिषद्। |
| उ. स. | उपदेशसाहस्री। |
| ऋ. सं. | ऋग्वेदसंहिता। |
| औ. सू. | औपपातिकसूत्रम् लयमान-संस्कृतम्। |
| क. उ. | कठोपनिषत्। |
| क. व. | कथावत्थु ( पालिटेक्स्ट् सोसाइटी )। |
| क. व. अ. | कथावत्थु-अट्ठकथा ,, |
| क. व्या. | कलापव्याकरणम्। |
| का. प. | काश्यपपरिवर्तः हलस्टाइन्-संस्कृतः। |

| | |
|---|---|
| का. मी. | काव्यमीमांसा । |
| कि. अ. | किरातार्जुनीयम् । |
| के. उ. | केनोपनिषद् । |
| कै. उ. | कैवल्योपनिषद् । |
| कौ. उ. | कौषीतक्युपनिषद् । |
| ग. म. | गणरत्नमहोदधिः, प्रयागे भीमसेनशर्मणा संस्कृतः । |
| गी. | गोरक्षपुरे गीतायन्त्रे संस्कृता माण्डूक्योपनिषद् । |
| च. | चतुःशतिका हरप्रसादशास्त्रि-संस्कृता । |
| च. श. | चतुःशतकम् भोटपाठसहितं विधुशेखर-संस्कृतम् । विश्वभारती । |
| चा. नी. द. | चाणक्यनीतिदर्पणः ( बोम्बाई ) । |
| चि. वि. प्र. | चित्तविशुद्धिप्रकरणम् प्रभुभाइपाटेल-संस्कृतम् । विश्वभारती । |
| ची. व. | चीवरवस्तु नलिनाक्षदत्त-संस्कृतम् । |
| ज. र. | जगद्गुरुरत्नमालास्तवः सदाशिवब्रह्मेन्द्रकृतः आत्मबोधेन्द्रसरस्वतीकृतटीकासहितो वेदान्तपञ्चप्रकरणान्तर्गतः । श्रीविद्यायन्त्रालयः । कुम्भकोणम् । |
| जा. | जाबालोपनिषद् । |
| ज्ञा. स. | ज्ञानसारसमुच्चयः ( भोटपाठः ) । |
| त. आ. | तत्त्वरत्नावली ( अद्वयवज्रसंग्रहे, गा. ओ. सी. ) । |
| त. क. | तत्त्वमुक्ताकलापः सर्वार्थसिद्धिश्च वेङ्कटनाथदेशिकस्य । |
| त. ज्वा. | तर्कज्वाला ( = म. हृ. का. ) । |
| त. दी. (प्र) | तत्त्वदीपिका प्रवचनसारटीका । |
| त. दी. (पञ्च). | तत्त्वदीपिका ( पञ्चास्तिकायसमयसारः ) । |
| त. प. | तत्त्वसंग्रहपञ्जिका कमलशीलकृता ( गा. ओ. सी. ) । |
| त. प्र. | तत्त्वप्रकाशः ( त्रिवेन्द्राम-संस्कृतग्रन्थमाला ) । |
| त. वा. | तन्त्रवार्त्तिकम् शाबरभाष्यसहितम् ( आनन्दाश्रमः ) । |
| त. स. | तत्त्वसंग्रहः शान्तिरक्षितकृतः सटीकः ( गा. ओ. सी. ) । |
| त. सू. | तत्त्वार्थाधिगमसूत्रम् । |
| ता. टी. प. | तात्पर्यटीकापरिशुद्धिः । |
| तै. आ. | तैत्तिरीयारण्यकम् । |

| | |
|---|---|
| तै. उ. | तैत्तिरीयोपनिषद् । |
| त्रि. | त्रिंशिका स्त्रीवनलाभि-संस्कृता । |
| त्रि. उ. | त्रिपुरातापन्युपनिषद् । |
| त्रि. नि. | त्रिस्वभावनिर्देशो वसुबन्धुकृतः सुजितकुमार-संस्कृतः । विश्वभारती । |
| थे. गा. | थेरगाथा ( पा. टे. सो. ) । |
| द. वै. सू. | दशवैकालिकसूत्रम् ( देवचन्द-लालभाइ पुस्तकोद्धारः ) । |
| द. सू. | दशभूमिकसूत्रम् राडर-संस्कृतम् । |
| दि. अ. | दिव्यावदानम् । |
| दी. नि. | दीघनिकायो ( पा. टे. सो. ) । |
| ध. प. | धम्मपदं । |
| ध. प. अ. | धम्मपद-अट्ठकथा ( पा. टे. सो. ) । |
| ध. स. | धर्मसंग्रहः ( आर्यान सीरिज, अक्सफोर्ड ) । |
| ध. सणि. | धम्मसङ्गणि ( पा. टे. सो. ) । |
| न. उ. | नयोपदेशः । |
| नि. | निरुक्तम् । |
| नि. स्तो. | निरुपमस्तोत्रम् तुच्चि-संस्कृतम् । जे. आर. ए. एस । |
| नृ. उ. उ. | नृसिंहोत्तरतापन्युपनिषद् । |
| ने. प. | नेत्तिप्पकरणं ( पा. टे. सो. ) । |
| नै. सि. | नैष्कर्म्यसिद्धिः चन्द्रिकासहिता जेकब-संस्कृता । |
| न्या. क. | न्यायकन्दली प्रशस्तपादभाष्यटीका (वि. सं. ग्रन्थमाला) । |
| न्या. त. | न्यायामृततरङ्गिणी रामाचार्यकृता ( निर्णयसागरः ) । |
| प. द. | पञ्चदशी । |
| प. पु. | पद्मपुराणम् ( आनन्दाश्रमः ) । |
| प. सा[1]. | परमार्थसारम् आदिशेषकृतम् ( त्रि. सं. ग्रन्थमाला ) । |
| प. सा[2] | ,, अभिनवगुप्तकृतम् बार्नेट-संस्कृतम् ( जे. आर. ए. एस, १९१०, पृ. ७०७ ) । |
| प. सा[3] | ,, आदिशेषकृतम् सूर्यनारायण-संस्कृतम् ( कर्णाटकप्रकाशनगेहम् ) । |
| प. प्र. पा. | पञ्चविंशतिसाहस्रिका प्रज्ञापारमिता । |

| | |
|---|---|
| पा. लो. व. | पाण्डुलोहितवस्तु नलिनाक्षदत्त-संस्कृतम् । |
| पा. सू. | पाणिनिसूत्रम् । |
| प्र. उ. | प्रश्नोपनिषद् । |
| प्र. भा. | प्रशस्तपादभाष्यम् ( विजयनगरग्रन्थमाला ) । |
| प्र. वि. | प्रमाणविनिश्चयः धर्मकीर्त्तिकृतः ( भोटपाठः ) । |
| प्र. वा[१] | प्रमाणवार्त्तिकं धर्मकीर्त्तिकृतम् । राहुलसांकृत्यायन-संस्कृतम् । |
| प्र. वा[२] | प्रमाणवार्त्तिकम् धर्मकीर्त्तिकृतम् । मनोरथनन्दिकृत-वृत्तिसहितम् । राहुलसांकृत्यायनसंस्कृतम् । |
| बु. च. | बुद्धचरितम् , अश्वघोषकृतम् , जनस्टन-संस्कृतम् । |
| बृ. उ. | बृहदारण्यकोपनिषद् ( आनन्दाश्रमः ) । |
| बृ. भा. वा. | बृहदारण्यकभाष्यवार्त्तिकम् ( आनन्दाश्रमः ) । |
| बो. अ. | बोधिचर्यावतारः शान्तिदेवकृतः ( बि. इण्डिका ) । |
| बो. अ. प. | बोधिचर्यावतारपञ्जिका प्रज्ञाकरमतिकृता ,, |
| बो. भू. | बोधिसत्त्वभूमिः ओगिहारा-संस्कृता ( जापान ) । |
| बौ. ल. | बौद्धन्यायलघुलेखसंग्रहः ( सिक्स् बुड्ढिस्ट् न्याय-ट्रयाकट्स् , बिब्लिओथेका इण्डिका ) । |
| ब्र. उ. | ब्रह्मबिन्दूपनिषद् । |
| ब्र. सू. | ब्रह्मसूत्रं, ब्रह्मजालसुत्तं ( पालि ) वा । |
| भ. गी. | श्रीभद्भगवद्गीता । |
| भा. पु. | श्रीमद्भागवतपुराणम् । |
| म. अ. | मध्यमकावतारः चन्द्रकीर्त्ति-कृतः ( भोटपाठः ) । फ्रन्सपाठस्तु पोषण-संस्कृतः (मिउसिओं, १९०७) । |
| म. अ. का. | मध्यमकालङ्कारकारिका शान्तिरक्षितकृता (भोटपाठः) । |
| म. ना. उ. | महानारदीयोपनिषद् । |
| म. नि. | मज्झिमनिकायो ( पा. टे. सो. ) । |
| म. नी. | महासद्दनीति ( पालिः ) सिंहले मुद्रिता । |
| म. टी. | मध्यान्तविभङ्गटीका यमगुचि-संस्कृता ( जापान ) । |
| म. प. सू. | महापरिनिब्बाणसुत्तं । |
| म. पू. | मनोरथपूरणी ( पालिः ) । श्यामराष्ट्रे महामुकुटराज-विद्यालयः । श्यामराष्ट्रम् । २४६३ । |

| | |
|---|---|
| म. ब्रा. | मण्डलब्राह्मणोपनिषद् । |
| म. म. | महार्थमञ्जरी ( त्रिवेन्द्राम संस्कृतग्रन्थमाला ) । |
| म. व. | महावग्गो ( विनयपिटके ) ओल्डेनबार्ग-संस्कृतः । |
| म. व्यु[1] | महाव्युत्पत्तिः सकाकि-संस्कृता ( जापान ) । |
| म. व्यु[2] | महाव्युत्पत्तिः मिनायेफ-संस्कृता ( राशिआ ) । |
| म. वृ. | मध्यमकवृत्तिः पोषण-संस्कृता ( राशिआ ) । |
| मस. | माण्डूक्योपनिषद् महेशचन्द्रपालेन संस्कृता । |
| म. सू. अ. | महायान-सूत्रालङ्कारः श्लीवनलाभिना संस्कृतः (पारिस) |
| म. सू. टी. | मध्यान्तविभङ्गसूत्रभाष्यटीका विधुशेखरेण तुच्चिना च संस्कृता । |
| महा. व. | महावस्तु सेनार्त-संस्कृतम् ( पारिस ) । |
| म. हृ. का. | मध्यमकहृदयकारिका भव्यकृता ( भोटपाठः ) । |
| म. हृ. का. वृ. | मध्यमकहृदयकारिकावृत्तिस्तर्कज्वाला ( भोटपाठः ) । |
| मा. उ. | माण्डूक्योपनिषद् । |
| मान. उ. | मानसोल्लासः सुरेश्वरकृतः ( निर्णयसागरः ) । |
| मा. भा. | माण्डूक्योपनिषद्भाष्यम् श्रीनिवासभाष्यसहितम् ( कुम्भकोणम् ) । |
| मि. प. | मिलिन्दपञ्हो ट्रेङ्कनार-संस्कृतः । |
| मुक्ति. उ. | मुक्तिकोपनिषद् । |
| मी. द. | मीमांसादर्शनम् । |
| मी. श्लो. वा. | मीमांसाश्लोकवार्त्तिकम् (चौखाम्बा-संस्कृतग्रन्थमाला ) । |
| यो. भू. | योगाचारभूमिः असङ्गकृता ( संस्क्रियमाणानेन वृत्तिकृता) । |
| यो. वा. | योगवासिष्ठरामायणम् ( निर्णयसागरः ) । |
| यो. शा. | योगशास्त्रं हेमचन्द्रकृतम ( बिब्लिओथेका, इण्डिका ) । |
| यो. सू. | योगसूत्रम् । |
| रा. उ. ता. उ. | रामोत्तरतापन्युपनिषद् । |
| ल. च. | लघुचन्द्रिका ( श्रीविद्यायन्त्रालयः, कुम्भकोणम् ) । |
| ल. वि. | ललितविस्तरः ( लेफमान-संस्कृतः ) । |
| ल. सू. | लङ्कावतारसूत्रम् बुनिओ नाञ्जिओ-संस्कृतम् ( काइटो ) । |

| | |
|---|---|
| ल. सू. पाठः | लङ्कावतारसूत्रपाठः ( आङ्गलवाङ्मयः ) सुजुकि-कृतः । |
| व. छे. | वज्रच्छेदिका मोक्षमूलर-संस्कृता । |
| वा. पु. | वायुपुराणम् । |
| वा. भा. | न्यायसूत्रस्य वात्स्यायनभाष्यम् । |
| वा. वृ. | श्रीवातुलसूत्रवृत्तिः ( काश्मीरग्रन्थमाला ) । |
| वा. स. | वाजसनेयिसंहिता । |
| वि. | विंशिका वसुबन्धुकृता श्रीवनलाभि-संस्कृता । |
| वि. पु. | विष्णुपुराणम् । |
| वि. सि. | विज्ञप्तिमात्रतासिद्धिः फ्रान्सवृत्तिः पोवणकृता । |
| वि. पि. | विनयपिटिकम् । |
| बि. म. | विसुद्धिमग्गो |
| वि. स. | विष्णुसहस्रनाम ( महीशूर ) । |
| वि. व्या. | विग्रहव्यावर्त्तनी नागार्जुनकृता जयशयालेन राहुलसाङ्कृत्यायनेन च संस्कृता । |
| वे. सा. | वेदान्तसारः ज्याकब-संस्कृतः । |
| बै. सू. | बैशेषिकसूत्रम् । |
| श. ब्रा. | शतपथब्राह्मणम् । |
| शा. वा. | शारीरकमीमांसाभाष्यवार्त्तिकम् ( आशुतोषसंस्कृत-ग्रन्थमाला ) । |
| शि. व. | शिशुपालवधम् । |
| शि. वि. | शिवसूत्रविमर्शिनी ( काश्मीरग्रन्थमाला ) । |
| शि. स. | शिक्षासमुच्चयः बेण्डाल-संस्कृतः ( राशिआ ) । |
| श्वे. उ. | श्वेताश्वतरोपनिषद् । |
| ष. स. | षड्दर्शनसमुच्चयः गुणरत्नटीकासहितः ( बिब्लियोथेका इण्डिका ) । |
| स. त. | सन्मतितर्कः ( गुजरात-पुरातत्त्वमन्दिरम् ) । |
| स. द. सं. | सर्वदर्शनसंग्रहः । |
| स. प्र. पा. | सप्तशतिका प्रज्ञापारमिता तुच्चि-संस्कृता । |
| स. नि. सू. | सन्धिनिर्मोचनसूत्रम् ( भोटपाठः ) लामोत्ते-संस्कृतः । |

| | |
|---|---|
| स. पु[1]. | सद्धर्मपुण्डरीकम्, बिब्लिओथेका बुद्धिका। |
| स. पु[2]. | ओगिहारासंस्कृतम्। |
| स. सा. | संक्षिप्तसारव्याकरणम्। |
| सि. सि. स. | सर्वसिद्धान्तसंग्रहः प्रेमसुन्दर-संस्कृतः। |
| स. रा. सू. | समाधिराजसूत्रम् ( बुद्धिस्ट्-टेक्स्ट्-सोसाइटी )। |
| सा. का. | साङ्ख्यकारिका। |
| सा. सू. | साङ्ख्यसूत्रम्। |
| सु. निपा. | सुत्तनिपातो। |
| सु. स. | सुभाषितसंग्रहः बेण्डाल संस्कृतः। |
| सू. सू. | सूत्रकृताङ्गसूत्रम्। |
| ह. व. | हरिवंशम्। |

———

| | |
|---|---|
| आ. | आनन्दगिरिः। |
| कू. | कूरनारायणः। |
| तुल. | तुलनीयम्। |
| द्र. | द्रष्टव्यम्। |
| द्र. | द्रष्टव्यम्। |
| ना. | नागार्जुनः। |
| पा. | पाणिनिः। |
| पु. | पुरुषोत्तमः। |
| श. | शङ्कराचार्यः। |
| शक | शकाब्दः |

———

# अवतरणिका

§ १। का नाम माण्डूक्योपनिषत् कियती चेयम्।

का नाम माण्डूक्योपनिषत् कियती चेयमिति विवदन्ते वादिनः। तत्र तावद् "ओमित्येतदक्षरम्" इत्यादीनि "आत्मानं य एवं वेद" इत्यन्तानि द्वादश गद्यवाक्यान्येव[1] सेति प्रसिद्धम्। इदं च मन्यते गौडपादकारिका नाम तस्यैव ग्रन्थस्य व्याख्यानमिति। भिद्येते चैतौ ग्रन्थौ मिथो यद्यप्यन्योन्यमतिसम्बद्धौ मूलमिति व्याख्यानमिति च यथाक्रमम्। 5

नैतत्पुनरन्ये सम्मन्यन्ते। ते ह्याहुर्नैवेयमुपनिषत्केवलमुक्तपूर्वाणि द्वादश गद्यान्येव अपि तु गौडपादकारिका याः प्रथमे प्रकरणे पठिताः सर्वाः(२९)कारिका अपि। एवं चैतेषां मते तानि गद्यवाक्यानि कारिकाश्च ता इत्येतदुभयमप्युपनिषदिति। ततश्च तयोर्द्वयोरपि श्रुतित्वमिति।[2] 10 एवमेवाह मध्वाचार्यः समर्थितः स्वानुगामिभ्यां व्यासतीर्थश्रीनिवासाभ्याम्। तत्र कारिकास्तन्मते ब्रह्मणा दृष्टाः। अन्यत्तु मण्डूकरूपी वरुणः प्रकाशयामास। यथोक्तं तेन स्वकीये माण्डूक्यभाष्ये—

"ध्यायन्नारायणं देवं प्रणवेन समाहितः।

मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम्॥" इति। 15

"इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम्।"

इति च।[3] इदं चोक्तं तेन तत्रैव (पृ. २)

"मण्डूकरूपिणा वरुणेन वतूरूपो नारायणोऽत्र स्तूयत इति।"

अत्रोपन्यस्तं तेन प्रमाणम्—

"ब्रह्मदृष्टानतो मन्त्रान् प्रमाणं सलिलेश्वरः। 20

अत्र श्लोका भवन्तीति चकारैवं पुनः पुनः॥" इति[4]

---

१। एषां वाक्यानामाद्यानि सह स्तोकेन पाठभेदेनान्यास्वप्युपनिषत्सु पठ्यन्ते। यथा नृ. पू. ता. उ. ४. १-२; नृ. उ. ता. उ. २; रा. उ. ता. उ. ८. ९।

२। गृहीतं मतमिदं मध्वाचार्येण। चिन्तितचरं च मयेदं सविस्तरमन्यत्राङ्गलवाचि। 25

३। अत्रैतयोर्वचनयोरादिमं पद्मपुराणादन्तिमं तु हरिवंशादुद्धृतमित्युच्यते। मया त्वन्विष्यापि मुद्रिते ग्रन्थे नानयोरन्यतरदप्यधिगतम्।

४। कुत्रत्यमिदमित्यद्यापि नावगम्यते।

व्यासतीर्थोऽपि मन्त्रत्वेनैव कारिका इमा उद्धरति। यः स नृ. पू. ता. उपनिषदो भाष्यकारो। यः खलु सुविश्रुतो नाम्ना शङ्कराचार्येण। अनन्यश्च प्रपञ्चसारकारात्सोऽप्येतदेव मतं समर्थयते। न पुनः स विशेषमाह किमस्या उपनिषद ऋषिर्वरुणः। कारिका वा दृष्टा वरुणेनेति। अस्ति रामानुजानुगामी कूरनारायणो नाम कश्चिट्टीकाकारो माण्डूक्योपनिषदः। सोऽपि मन्यते तानि द्वादश गद्यवाक्यानि प्रथमप्रकरणे पठितास्ताश्च कारिका माण्डूक्योपनिषदिति। अप्पयदीक्षितोऽपि (यः खलु भिद्यते सुप्रथितात् सिद्धान्तलेशकारात्) तन्मतमेव पुष्णातीति प्रतीयते। स ह्यस्या उपनिषदस्तानि गद्यवाक्यानि ताश्च प्रथमप्रकरणोक्ताः कारिका एव व्याचष्टे नाधिकं किञ्चिदिति।

अस्ति माण्डूक्योपनिषदो भाष्यकारः श्रीशङ्कराचार्यः। स खल्वाह स्वभाष्योपोद्घाते ' "ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्।" वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्यारभ्यत' इति। एतेन प्रतीयते सह गद्यवाक्यैः कारिका अपि प्रकरणचतुष्टयोक्ता उपनिषदन्तर्गता एवेति। इदं चातिस्पष्टमिदं प्रकरणचतुष्टयम् "ओमित्येतदक्षरमित्याद्यारभ्यत" ' इति वचनेन। यद्यप्येतन्न वस्तुतत्त्वम्। न चेदं चिन्तितं भाष्यकारेण किं प्रथममेव प्रकरणमाहोस्विदन्यान्यपि प्रकरणानि श्रुतिर्न वेति। अयं च भाष्यकारः सुप्रथिताद्ब्रह्मसूत्रशारीरकभाष्यकाराच्छङ्कराचार्यादनन्य इति दुष्करं वक्तुम्।[५]

आस्तां वा तावदेतत्। प्रकृतमेवानुसराम। प्रथमप्रकरणोक्ताः कारिका गद्यवचनानि च तानि माण्डूक्योपनिषदिति श्रीभाष्यकारो रामानुजाचार्योऽपि मन्यत इति प्रतीयते। तेन हि श्रीभाष्ये (१. १. १.) "अनादिमायया सुप्त" इत्यागमशास्त्रकारिका (१. १६) श्रुतिरिति गृहीता। उक्तं खलु तेन तत्र जीवस्यैव

५। ये पुनर्मन्यन्ते शारीरकभाष्यकार आगमशास्त्रभाष्यकारश्चानन्यौ न तावत्ते समासेनागमशास्त्रभाष्ये मङ्गलाचरणम्। तत्रत्यानां श्लोकानामत्यपकृष्टत्वम्। छन्दोदोषं(आनन्दगिरेर्दोषोद्धरणप्रयासो न पेशलः)। च्युतसंस्कृतिं चैव केवलं चिन्तयितुमर्हन्ति। अपि तु तत्र तत्र (१. १० ; २. २७ ; ३-२९ ; ४. ८३) व्याख्यानमपि। अप्येतद्युज्यते शारीरकभाष्यकारस्य। दृश्यतामत्र वृत्तिकृतो व्याख्यानं ३. २३, ४. ३ ; ३. २९। ई. उ. १२।

निरोधः श्रूयते "अनादिमायया सुप्तो यदा जीवः प्रबुध्यत" इति। अत्र श्रूयत इति पदेन तद्वचनस्य श्रुतित्वं सुव्यक्तम्।

[६]कश्चित्त्वाह मतमेतत्ततोऽपि प्रागधिगम्यते। किं बहुना बृ. भा. वा. कारस्य सु रे श्व र स्य। तस्मादपि प्राचीनस्य शा री र क भा ष्य-का र स्य श ङ्क र स्यापि च समये मतमिदं दृश्यत इति। काममिदं ५ वदत्वेष कोविदः। न पुनरयमेवं मन्तुमर्हति। तयोरेवाचार्ययोर्वचन-विरोधात्। तथा हि। सु रे श्व र स्ताव न्नै ष्क र्म्य सि द्धौ (४. ४१) "कार्यकारणबद्धौ ता"वित्याद्या ग म शा स्त्र कारिकाम् (१. ११) उद्धरन् ब्रवीत्ययमर्थोऽस्मत्पूज्यैर्गौडैरुक्त इति। अत्र गौ डा [७]गौ ड पा दा-चा र्याः। यच्च गौ ड पा दा चा र्यै रुक्तं न सा श्रुतिर्भवतीति कृतं १० कथनेन। श ङ्क रो ऽपि स्वभाष्यस्यैकत्र (ब्र. सू. २ १.९) "अनादिमायये"-त्यादिम् (आ. शा. १. १६) अन्यत्र च (ब्र. सू. १. ४. १४) "मृल्लोहविस्फु-लिङ्गाद्यै" (आ. शा. ३ १५) रित्यादिं कारिकामवतारयन्नाह यथाक्रमम् "अत्रोक्तं वेदान्तसम्प्रदायविद्भिराचार्यै"रिति। "तथा च सम्प्रदायविदो वदन्ती"ति च। ततश्च यत्खलु सम्प्रदायविदो वदन्ति न तस्य १५ श्रुतित्वं स्वप्नेऽपि सिध्यति। अतो न श ङ्क रो नतरां च सु रे श्व र आ ग म शा स्त्रं श्रुतिं मन्यत इति निर्णयः।

एवं च स्थिते श्री कृ ष्ण मू र्त्ति श र्म णा स्वमतपोषणाय शा री र क-भा ष्य कारस्य श ङ्क र स्यैवेति यानि द्वित्राणि वचनान्युपन्यस्तानि न तानि तदर्थप्रतिपादनसमर्थानि। न खल्वस्यैव श ङ्क र स्य तानीति निःसंशयं २० दर्शयितुं शक्यते। यच्चोक्तं तेन सु रे श्व रः किल (बृ. भा. वा. १. ४. ६१५, ७४४) गौ ड पा द का रि कां (१. १४) "वेदान्तोक्ति"रिति "आगमशासन"मिति (१. १४) च ब्रवीति। तेन च प्रतीयते तन्मते श्रुतित्व-मा ग म शा स्त्र स्येति। तदपि न युज्यते। न ह्यत्र किमप्युपलभ्यते येनास्य श्रुतित्वमवश्यमधिगम्येत। प्रदर्शितं च प्राग्यथा सु रे श्व र २५

---

६। ब. न. श्री कृ ष्ण मू र्त्ति श र्मा।

७। "एवं गौडैर्द्राविडैर्नः पूज्यैरयमर्थः प्रभाषितः।" स्पष्टोऽत्र छन्दोदोषः। द्राविडाः श ङ्क रा चा र्याः।

आगमशास्त्रं गौडपादीकमिति जानातीति। "वेदान्तोक्तिरिति" "आगमशासन"मिति चेदृशं वचनं वेदान्तमागमं वाधिकृत्य येन केनाप्यद्यत्वेऽपि रचिते ग्रन्थे न खलु न युज्यते प्रयुज्यते वा। स चायं प्रयोगो गौणो न तु मुख्यः।

५ अयं च विवादो न साम्प्रतिकः। न्यायामृततरङ्गिणीकारो रामाचार्योऽपि हि स्वकीये ग्रन्थे ( पृ. २२३ ) आगमशास्त्रस्य द्वे कारिके ( १. १७, १८ ) अधिकृत्य तयोः श्रुतित्वमस्ति न वेति विचार्य अस्त्येवेति मीमांसते[८]।

तदयं निष्कर्षः। आसन्केचनानुपेक्षणीयवचनाः पुमांसः समये

१० रामानुजाचार्यस्यापि ये प्रथमप्रकरणोक्ताः कारिका गद्यवचनानि च तानि माण्डूक्योपनिषदिति मेनिरे। न पुनरेषु शारीरकभाष्यकारः शङ्करस्तदनुगामिनो वेति। प्राञ्चः किलास्माकमीदृशेषु संस्कृतग्रन्थानां विचारेष्वनेकत्र श्रद्धादेवा इव ( श. ब्रा. १. १. ४. १५ ) प्रतिभान्ति कुर्वन्ति चात्युक्तिं गौणोक्तिं वा। उपनिषदाद्यर्थमवलम्ब्य

१५ कृतोऽपि ग्रन्थस्तैस्तत्तन्नाम्ना गृह्यते[९]। प्रथितमिदं न खलु भगवद्गीतोपनिषदिति। अस्ति त्वस्यास्तद्गौरवम्। अत एव प्रत्यध्यायमधीमहे वयमन्ते "इति श्रीमद्भगवद्गीतासूपनिषत्स्विति।" अनुपनिषदप्युपनिषदिव क्रियत इत्याहाचार्यः सत्यव्रतः पाणिनिसूत्रप्रमाणेन[१०]। सैव गतिः पुराणानामपि। "पुराणं पञ्चलक्षण"मिति वदन्ति।

२० न पुनः सर्वेषु पुराणेषु तानि लक्षणानि दृश्यन्ते। एवमपि तु तानि पुराणान्येवेति प्रसिद्धं लोके। उपनिषदामपि सैव कथा। कैश्चित्त्वागमशास्त्रस्यैकैकमपि प्रकरणं स्वतन्त्रोपनिषत्तया गण्यते।[११]

---

८। इदमवगन्तव्यम्। प्रथमप्रकरणोक्ता गौडपादकारिकाः कदाचिद् ( ल च, पृ ९८० ) गौडपादीयोक्तश्रुतिरिति। कदाचिच्च ( न्या अ. त., २५ पृ. १२३ ख ) माण्डूक्योपनिषद्विवरणगौडपादीयवार्त्तिकमिति चोच्यते। यदिदमुभयमपि नातिनिपुणं विचार्योक्तमिति स्पष्टम्।

९। शङ्करेण भगवद्गीताया द्वौ श्लोकौ ( २. १९, २० ) ऋगिति मन्त्र इति च गृहीतौ।

१०। "जीविकोपनिषदावौपम्य ( १. ४. ७ ) इति।"

३० ११। एवमन्यत्रापि। यथा तैत्तिरीयोपनिषदि शिक्षावल्ली

उक्तपूर्वमिदं मध्वाचार्यादीनां मते गौडपादकारिकाणां प्रथममेव प्रकरणं श्रुतिरिति। ततश्च केवलं तदेव माण्डूक्योपनिषदन्तर्गतम्। अन्यानि तु प्रकरणान्येकोऽनेको वा ग्रन्थ इति न ते किञ्चिदाहुर्न वा परे। अतो न तेषां प्रश्नोऽपि श्रुतित्वस्य।

---

§२। माण्डूक्योपनिषदः प्रथमे प्रकरणे पठितानां कारिकाणां तत्रोक्तेन गद्यग्रन्थेन सम्बन्धः। ५

इदमिह केचन मन्यन्ते। यानि तानि माण्डूक्योपनिषदो द्वादश गद्यवाक्यानि तानि चतुर्धा विभज्यन्ते[१]। एकैकस्य भागस्यान्ते च तेषाम् "अत्रैते श्लोका भवन्तीति"[२] केऽपि श्लोकाः पठ्यन्ते। ईदृशाश्च श्लोका[३] अन्यास्वप्युपनिषत्सूद्धृता अवगमयन्ति यदेते तत्तदर्थसमर्थनायैवोद्धृता इति। इदं च व्यक्तं यद्यस्मिन्नुद्ध्रियते तत्तस्मात्पूर्वमिति। यथा शारीरकभाष्ये (ब्र. सू. २. २, २८) उद्धृतालम्बनपरीक्षा तस्मात्प्राचीनेति। प्रकृतेऽपि गद्यबन्धेषु धृताः कारिकास्तेभ्यः प्राचीना इति वक्तव्यम्। १०

किञ्च। प्रथमप्रकरणपठिताः कारिका नाम माण्डूक्योपनिषदर्थाविष्करणपरा इत्याहुः। एवमेवेदं चेन्नूनं गद्यबन्धेषु यद्यद्दुरूहमपेक्षितं वा नितान्तं न तत्कथमप्युपेक्ष्येत कारिकासु। प्रत्युतातिस्फुटं विव्रियेत। न पुनरेतत्तासु तथावेक्ष्यते।[४] विमृशतश्चैवं प्रतिभासते कारिका एव प्रथमं ततश्च ते गद्यबन्धा निबद्धा इति। १५

---

ब्रह्मवल्ली भृगुवल्लीति च तिस्र उपनिषदः। नृ. पू. ता. उपनिषदश्च पञ्चाध्यायाः पञ्चोपनिषदः। २०

१। यथा प्रथमे भागे प्रथमतः षड्वाक्यानि (१-६)। द्वितीये सप्तमं वाक्यम्। तृतीये अष्टमादीनि चत्वारि वाक्यानि (८-११)। चतुर्थे तु द्वादशं वाक्यम्।

२। एताश्च पङ्क्तयः शाङ्करभाष्येऽप्युद्ध्रियन्ते।

३। यथा "तदेते श्लोका भवन्ति" (बृ. उ. ४. ३. ११, ४. ४. ८, इत्यादि)। "तदेष श्लोकः" (छा. उ. ३. ११. १)। "तदप्येष श्लोको भवति" (तै. उ. २. १. १)। इत्यादि। २५

४। यथा प्रथमयोर्द्वयोर्गद्यबन्धयोर्नास्ति किञ्चित्कस्याञ्चित्कारिकायाम्।

किञ्च। इदं प्रतीयते प्रथमाः पञ्च कारिका (१-५) द्वितीयस्य तृतीयस्य चतुर्थस्य च गद्यबन्धस्य व्याख्यानभूताः। अत्र तृतीये चतुर्थे च गद्यबन्धे सप्ताङ्ग इति एकोनविंशतिमुखश्चेति पदद्वयं दुरूहं विवृतं च बहुभिर्बहुधा[५]। कारिकासु तु नेषदपि तदुक्तिः। कोऽत्र हेतुः।

५ अन्यच्च। तृतीये नवमे च गद्यबन्धे वैश्वानरशब्द एक एव दृश्यते न तु विश्वशब्दोऽपि। कारिकासु (१. १-४, १६, २३) पुनर्विश्व एव न तु वैश्वानरः। किंनिमित्तकोऽयं भेदः। व्याख्याकारः खलु यथोपलब्धं शब्दं व्याचक्षीत न पुनस्तं स्वैरं परावर्तयेत्।[६] न च विश्ववैश्वानरशब्दौ पर्यायौ। दुर्विवरणमिदम्। छन्दोऽनुरोधात्तथेत्यश्रद्धेयम्।

१० सन्त्यत्र त्रयः शब्दा गद्यबन्धेषु (३-५) जागरितस्थान इति स्वप्नस्थान इति सुषुप्तस्थान इति च। सर्वथापि तु ते तिरोहिताः कारिकासु। कः पुनरस्य हेतुः। नेदमुचितमवज्ञातुम्। अत्र हि प्रतिपित्सितस्यार्थस्य प्रतिपत्तये एतास्तिस्रोऽवस्था अवश्यमधिगन्तव्याः।

तत्त्वं त्विदेत्थं प्रतिभाति। पूर्वं किल कारिका एवाभूवन्[७]। १५ पश्चात्तु ताभ्यस्ताभ्य उपनिषद्भ्यो गद्यबन्धरूपेयं माण्डूक्योपनिषत्सङ्कलिता[८]। एतस्मिंश्च सङ्कलने तासां कारिकाणां क्वचित्किञ्चित्त्यक्तं क्वचित्किञ्चिदाहितं क्वचिद्वा किञ्चित्संस्कृतं विवृतं वा। दुर्गमं वा कृतं किञ्चित्सुगमम्। प्रकृते तु कर्ता गद्यबन्धानां विश्वशब्दं कथं कथमपि वैश्वानरार्थं मेने महीयस्त्वात्तस्य मन्त्रब्राह्मणयो[९]रन्यस्माद्वा कस्माच्चिन्मदनवगताद्धेतोः। किंकारणोऽयमन्योन्यं विसंवाद इति चिन्तयितुमर्हन्ति २० सन्तः।

---

५। द्रष्टव्योऽत्रान्यत्र च (नृ. पू. ता. उ. ४) शङ्करः, मध्वाचार्यः, कूरनारायणः, पुरुषोत्तमः, विद्यारण्यः (नृ. उ. ता. उ. १), नारायणश्च (रा. उ. ता. उ. ३)।

२५ ६। पञ्चमे गद्यबन्धे प्रज्ञानघन इति पठ्यते। कारिकायां तु (१. १) घनप्रज्ञ इति।

७। यथा मन्यन्ते मध्वाचार्यादयः।

८। द्र. पृ २००—२१०।

९। ऋ वे १. ५९. ६; छा. उ. ५ ११. १२; बृ. उ. ५ ९. १।

अन्यच्च। प्रणेता किल नृ. उ. ता. उपनिषदः[१०] कारिकासु विश्व-शब्दमुपनिषत्सु तु प्राचीनासु वैश्वानरशब्दमवेक्षमाण उभयमपि गृह्णाति[११] करोति च तेन तमर्थं कियत्यापि मात्रया सुगमम्।[१२] किं पुनरिह द्वावपि शब्दौ विश्ववैश्वानरौ गृहीतौ नृ. उ. ता. उपनिषदि। कश्च तयोर्विशेषार्थ इति प्रदर्शितं विद्यारण्येन पञ्चदश्याम् (१. १८-१९) वेदान्तसारे च (§ १७) सदानन्देन। ५

एवमेव गद्यबन्धेषु (३-४) जागरितस्वप्नसुषुप्तरूपास्तिस्रोऽवस्था-श्छान्दोग्यतो वा बृहदारण्यकतो वा उभाभ्यामेव वा पश्चात्सङ्कलिताः। तच्च "बहिष्प्रज्ञ" इति "अन्तःप्रज्ञ" इति "घनप्रज्ञ" इति (कारिका १) चैषां शब्दानां परिष्काराय। १०

येयं गद्यबन्धरूपा माण्डूक्योपनिषत् सा खलु कारिकाभ्य उपनिषद्भ्यश्च काभ्यश्चित्संकलितेत्युभयग्रन्थपर्यालोचनयैव प्रकाशते। तथाहि। कारिकासु तावद् "घनप्रज्ञ"इति (१) "आनन्दभुगि"ति (३) "आनन्द" इति च (४) पठ्यते। गद्यबन्धस्त्वेषः (५, पृ. २०६) "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति (= बृ. उ. ४. ३. १९) तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन (= बृ. उ. ४. ५. १३) एवानन्दमयो (तै. उ. २. ५. १) ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः।" इति। १५

अत्र द्वयोः कतरन्मूलं कतरद्वा विवरणमिति न दुरवगमम्। इह कारिकायां (१) "घनप्रज्ञ"इति "प्रज्ञानघन" इत्यस्माद्‌ीषद्भिद्यमानमपि नार्थतस्तथा भिद्यते। अत एवेह प्रयुक्त"मेकीभूत"' 'इति। २०

इयं च कारिका चिन्तनीयात्र (१. १६)—

---

१०। अत्र खलु निखिलापि माण्डूक्योपनिषदकिञ्चित्करेण पाठभेदेन पठिता।

११। "स्थूलभुक्चतुरात्मा विश्वो वैश्वानरः प्रथमः पाद" इति। २५

१२। अयमर्थो नृ. पू. ता. उपनिषद्यपि। तथाहि। यत्कारिकायां "प्रविविक्त"मिति तदिह "सूक्ष्म"मिति। नूनमिह "सूक्ष्मं" शब्दः सुगमतरः "प्रविविक्तात्।" विस्तरार्थं तु सैवोपनिषद्द्रष्टव्या।

१३। बृ. उ. ४. ४. २; प्र. उ. ४. २; नृ. पू. ता. उ. ४. १; नृ. उ. ता. ३. १। ३०

"विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥" इति ।

अयं चैतत्संसृष्टो गद्यबन्धः (६)—

"जाग्रत्स्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै
५ सर्वान्कामानादिश्च भवति य एवं वेद ।" इति ।

अत्रैतयोर्द्वयोर्वाक्ययोर्विचारणया प्रतीयते ब्राह्मणाभासाभिर्वचन-
भङ्गीभिर्द्वितीयेन प्रथमं न पुनः प्रथमेन द्वितीयं विव्रियत इति ।

अत्रेदमवगन्तव्यम् । इह प्रथमे वचने विश्वस्याकारत्वविवक्षायां
हेतुरुपन्यस्तः । स चोभयोर्विश्वाकारयोः सामान्यधर्मः । तत्र यथा
१० विश्वतैजसप्राज्ञानामादौ विश्व एवमोङ्कारघटकानामकारोकारमका-
राणामाद्यावकारः । अनेन सामान्यधर्मेण विश्वाकारयोरभेदः ।
यथा शूरत्वलक्षणेन सामान्यधर्मेण माणवकः सिंहो भवति । आप्ति-
र्द्वितीयः सामान्यधर्मः । आप्तिर्व्याप्तिः । यथा विश्वो जगद्व्याप्नोत्येव-
मकारोऽपि सर्वां वाचम् । अनेन सामान्येन तयोरैक्यम् ।[१४] इह तु
१५ द्वितीये वचने विश्वाकारयोरभेदे युक्तिः स्तोकं भिद्यते । तथा हि । आद्ये
तावदादिसमान्यमाप्तिसामान्यं चेति द्वयमप्युक्तम् । अन्त्ये "त्वाप्तेरादि-
मत्त्वाद्वे"ति कथनात्स्पष्टं विकल्पो दर्शितः ।[१५] अत एवेदं पश्चात्सङ्क-
लितमिति प्रतिभासते । इयमेव गतिरनन्तरयोः कारिकयोः (१. २०-२१)
गद्यबन्धयोश्च तत्संसृष्टयो ( १०, ११ ) रिति ।

२० इदं चान्यदवेक्षणीयमेकविंश्यां कारिकायां (२१) गद्यबन्धे च तत्स-
म्बद्धे (११) । अत्र द्वयोः सामान्ययोरेकं तावदेकत्र ( कारिकायां) मानम्
( √मा ) । अन्यत्र ( गद्यबन्धे ) तु मितिः ( √मि ) । अत्राभेदेऽप्यर्थतः
स्पष्टो भेदः शब्दतः । एवमेव कारिकायां ( २१ ) लयः ( √ली ) ।
गद्यबन्धे त्वपीतिः ( अपि√इ ) । अत्रायं मूलव्याख्यानयोरीदृग्भेदः
२५ कियत्संगच्छत इत्युदेति चेतसि विमृशतः ।

---

१४ । "एकीभवति" बृ. उ. ४. ४. २ ( बहुकृत्वः ); प्र. उ. ४. २
( द्विकृत्वः ) ।

१५ । "तस्माद्वा सामान्यादकारत्वं वैश्वानरस्येति विवृण्वानो भाष्यकारस्त-
मेवार्थं मनुते । अत एव वाशब्दोऽत्र न खल्वप्यर्थो न वा चार्थ इति निश्चेतव्यम् ।

अन्यच्च। आत्मनश्चतुष्पात्त्वं न तथातिस्पष्टं कारिकासु यथा गद्यबन्धेषु।[१६] अत्रैव हि चिन्त्यत एतद्विशेषेण न पुनः कारिकासु। गद्यबन्धे ह्येतदतिस्फुटम्। सूचयति चैतत्कारिकाणां प्रवृत्तिं प्रथमां ततश्च गद्यबन्धानाम्।

दर्शितस्तुर्याद्विश्वतैजसप्राज्ञानां भेदः कारिकासु (१. १०–१५)। न पुनस्तत्र किञ्चिदपि यत्संवदेत्तेन गद्यबन्धे। तुर्यं पुन"र्द्वैतस्योपशमः शिवः" (१. २९) इत्यनेनोक्तम्। तदेव तु वर्णितं द्वाभ्यां गद्यबन्धाभ्याम् (७, १२)। एतद्द्वयं च यत्प्राक्समासेन (१. २९) तदेव पश्चाद्व्यासेन भाषितम्। अत एव पश्चादपुष्यदिदं मतमिति प्रतिभाति। वागपि चात्र प्रयुक्ता तमेवार्थं सूचयतीति प्रतिभासते।

किञ्च। गद्यबन्धे तावद्द्वितीये (२) ब्रह्मण आत्मनो वा चतुष्पात्त्वमुद्दिष्टं विवृतं च तत्पश्चात् (३-६)। न पुनरेतल्लेशतोऽपि दृश्यते कारिकासु यद्यप्येता गद्यबन्धानामर्थाविष्करणपरा इति मन्यते।

चिन्त्यतां च चतुर्विंशी कारिका (१. २४) सहाष्टमेन (८) गद्यबन्धेन। ततश्च प्रकाशेत कारिकैवेयं विवृता गद्यबन्धेन न पुनर्गद्यबन्धैः कारिकेति।

अन्यच्च। "प्रभवः सर्वभूताना"मिति (१. ६) कारिका षष्ठेन (६) गद्यबन्धेन सम्बद्धेति दृश्यते "प्रभवाप्ययौ हि भूतानामिति"[१७]दर्शनात्। अत्र प्रभवस्तावद्विवृतः कारिकासु (१. ६–९)। अप्ययस्तु मनागपि न स्पृष्टः। कारिकाणां तु व्याख्यानग्रन्थत्वे नेदं कथमपि सम्भवेत्।

तदयं निष्कर्षः—

(१)। प्रथमप्रकरणोक्ताः कारिका न गद्यबन्धरूपाया माण्डूक्योपनिषदो व्याख्यानम्।

(२)। मुख्यतया कारिकार्थमेवावलम्ब्य गद्यबन्धरूपा माण्डूक्योपनिषदुत्पन्ना। न पुनर्द्वितीयं ग्रन्थमाश्रित्य प्रथमः।

(३)। ततश्च प्राक्कारिकाः पश्चात्तु गद्यबन्धरूपा माण्डूक्योपनिषदुद्बभूवेति।[१८]

---

१६। द्र. १. १—१९, २४—२९।

१७। क. उ. २. ६. ११।

१८। अन्योऽपि कश्चिच्छार्मण्यो बुधो मो क्ष व ल स र नामा मन्यते न तस्किञ्चित्कारिकासु यच्छक्नुयात्प्रदर्शयितुं गद्यबन्धरूपाया उपनिषदः पूर्वप्रवृत्तिम् (प्राचीनवेदान्तः, पृ. ९)।

इह यदुक्तं मध्वाचार्येण तदवश्यं स्मरणीयम्। कामं तावदारोप्यन्तां केचिन्महान्तोऽपराधास्तं प्रति। यथा स किल प्रायेणाभूतमपि प्रमाणमुद्भावयति परिकल्पयति वा। तानि च प्रमाणान्युपन्यस्यति यानि न कदाचिद्विद्यन्त विद्यन्ते वा।[१९] अप्पयदीक्षितो वात्मीये ५ मध्वमतविध्वंसने कांश्चिदीदृशान्ग्रन्थान्कीर्तयेद् ब्रूयाद्वा—

"तथाप्यानन्दतीर्थीयं मतमग्राह्यमेव नः।
यत्र वैदिकमर्यादा भूयस्थाकुलतां गता"॥ इति।

प्रचुराणि वा तेनोपन्यस्तानि प्रमाणानि स्वीये माण्डूक्योपनिषद्भाष्ये नाप्युपलभ्येरन्। न वा कश्चित्ताः किल माण्डूक्यकारिका १० ब्रह्मणा दृष्टा वरुणेन च मन्त्रत्वेन लब्धा इति प्रतीयात्। एतत्पुनरवश्यमभ्युपगन्तव्यं कारिका एव पूर्वमभूवंस्ततश्च गद्यबन्धरूपा माण्डूक्योपनिषदिति यथा वयमवोचाम।[२०]

---

§३। आगमशास्त्रे चतुर्णां प्रकरणानां मिथः सम्पर्कः।

एवं किलाहुः। आगमशास्त्रस्य चत्वारि प्रकरणानि। १५ आगमो वैतथ्यमद्वैतमलातशान्तिश्चेति। अत्रैते प्रश्नाः। अप्येतानि प्रकरणान्येकस्यैव ग्रन्थस्य चत्वारोऽंशा आहोस्विदन्योन्यं स्वतन्त्रास्ते निबद्धास्त्वेकत्र प्रचरन्तीति। किञ्च। किमेकेनानेकेन वा प्रकरणेन कश्चिदेको ग्रन्थः शिष्टेन च प्रकरणेन प्रकरणैर्वा कश्चिदपरो ग्रन्थः। तत्र भाष्यकारः शङ्करस्तावन्मन्यते चतुर्भिः प्रकरणैरागमशास्त्रं २० नामैक एव ग्रन्थ इति। अत एवाद्ययोः प्रकरणयोरन्योन्यं सम्बन्धं दिदर्शयिषुः स द्वितीयप्रकरणारम्भ आह ' "ज्ञाते द्वैतं न विद्यत"

१९। यथाह अ. श्री वेङ्कटसुब्बियो नाम बुधः ( इण्डियन् एण्टिकयारी, १९३३, पृ. १८९ )।

२०। विस्तर आङ्ग्लवृत्तौ।

(आ. शा. १. १८)[1] इत्युक्तम्। "एकमेवाद्वितीय"मित्यादि (छा.उ.६.२.१) श्रुतिभ्यः। आगममात्रं तत्। तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयप्रकरणमारभ्यते "वैतथ्य"मित्यादिना' इति।

अथ द्वितीयतृतीययोः प्रकरणयोः सम्बन्धं विवृण्वन् भाष्यकार आह। "ओङ्कारनिर्णय उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण। "ज्ञाते द्वैतं न विद्यत" (१. २६) इति च। तत्र द्वैताभावस्तु वैतथ्य प्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तै(२. ३१)-र्दृश्यत्वा[2]द्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापीत्यत आह। शक्यते तर्केणापि ज्ञातुम्। तत्कथमित्यद्वैतप्रकरणमारभ्यत' इति।

चतुर्थं तु प्रकरणं स भाष्यकार एवमवतारयति "ओङ्कारनिर्णयद्वारेणागमतः प्रतिज्ञातस्याद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारित"स्यैतत्तदुत्तमं सत्यम् (३. ४८) इत्युपसंहारः कृतः। अन्ते[3] तस्यैतस्यागमार्थस्या-

---

१। अत्र भाष्यकारेणान्यदपि वचनम् (१. १६, १७, २९) अशक्यतोदाहर्तुम्। किञ्च। येन तावत्प्रकारेण स प्रथमयोः प्रकरणयोः सम्बन्धमदर्शयद्वक्ष्यमाणोऽपि स तेन तथैव स्वानुकूलतयोपन्यस्येत। तन्मत आगमप्रकरणम् "ओमित्येदक्षर"मित्यादिनारभ्यते। ततश्च माण्डूक्योपनिषदत्रैवान्तर्गच्छति। अन्तिमायां च कारिकायां प्रथमप्रकरणस्य (१. २९) "द्वैतस्योपशमः शिव" इति पठ्यते। एतच्चार्थतः "प्रपञ्चोपशमं शान्तं शिव"मिति (मा. उ. ७) "प्रपञ्चोपशमोऽद्वैत" इति (मा उ १२) च। अयमेव चार्थः पुनरुपरिष्टात् (२. ३९) कीर्तयिष्यते "प्रपञ्चोपशमोऽद्वैत" इति। अन्यच्च। पठ्यते प्रथमेऽध्याये (१. १०) "अद्वैतः सर्वभावाना"मिति। स एव चार्थो द्वितीयेऽध्यायेऽभ्यस्यते। यथा "तस्मादद्वयता शिवेति" (२-३३)। "अद्वैते योजयेत्स्मृति"मिति (३. ३६)। "अद्वैतं समनुप्राप्ये"ति च। (२.३६)। उपमीयता "अद्वैतं परमार्थो हीति" (३. १८)। अयं चार्थो बलीयसा न्यायेन प्रतिष्ठापितस्तत्र (२. १) स्वप्न इव प्रदर्शयता वैतथ्यं सर्वभावानाम्। एवं चानयोर्द्वयोः प्रकरणयोरन्योन्यं नेदीयान्संसर्गो यस्य कस्यापि स्पष्टः।

२। कुत्र नु खल्वयं दृश्यत्वहेतुर्दृष्टो भाष्यकारेण द्वितीये प्रकरण इति चिन्त्यम्। लभ्यतेऽयं हेतुरद्वैतसिद्धौ (दृश्यत्वनिरुक्तिः पृ. १०)। न ततः पूर्वम्।

३। चतुर्थे प्रकरण इति प्रतीयते।

द्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च (३. १७)। तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम्। क्लेशानास्पदत्वात्सम्यग्दर्शनमित्यद्वैतदर्शनं स्तूयते। तदिह विस्तरेणान्योन्यविरुद्धतयाऽसम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्तव्याऽवीतन्यायेनेत्यलातशान्तिरारभ्यते" इति।

अत्रेदं परीक्षामहे। भाष्यकारस्तावत्प्रथमद्वितीययोः प्रकरणयोः सङ्गतिं विमृशन्नाह प्रथमे प्रकरणे यद् "द्वैतं न विद्यत" (१. १८) इत्युक्तं तदागमादेव। न पुनरुपपत्तितोऽपि। द्वितीये तु प्रकरणे सैवोपपत्तिः प्रदर्श्यत इति। अत्रायं प्रश्नः। अप्येतदेवम्। अपि नामेदमवितथं यत्प्रथमे प्रकरणे नोपपत्तिरुपन्यस्तेति यथा तूपन्यस्ता सा द्वितीये प्रकरण इति। नेदं तथेति शक्यं प्रतिवक्तुम्। नूनं भूयस्य उपपत्तयः प्रदर्शिताः प्रकरणे द्वितीये। न पुनरेतदस्ति प्रथमं प्रकरणं सर्वथैव विनाकृतमुपपत्त्येति। स्पष्टा हि सा कासुचित्कारिकासु (१. १६-१८)। यद्यपि न तावत्यधिकमात्रया। अयं चात्र प्रश्नः। यदीयमेवागमवैतथ्ययोः सङ्गति[4]र्भवेदभिमतागमशास्त्रकारस्य किमितीयं न तेनैवोक्ता कण्ठतो वैतथ्यस्यारम्भ एव। सुवचं खल्विदमासीत्तेन। एतच्च किञ्चिदकृत्वागमस्य सर्वथाननुषङ्गादेव तेनारब्धं वैतथ्यमुदाहृत्य मतं मनीषिणां स्वप्ने। न पुनरिदं युज्यते। न चोङ्कारनिर्णयस्य सह वैतथ्येन काचिदपि सङ्गतिः प्रदर्शितात्र भाष्यकारेण।

अन्यच्च। इदमधस्तान्मध्वाचार्यादयः केचिन्मन्यन्ते ताः किल द्वादश गद्यबन्धाः कारिकाश्च प्रथमप्रकरणोक्ता माण्डूक्योपनिषदिति। स्फुटमिदमेतस्मात्तन्मते प्रथमप्रकरणस्य न कश्चन सम्पर्कः शिष्टैस्त्रिभिः प्रकरणैरागमशास्त्रस्य। प्रतिपिपादयिषितश्चार्थोऽस्मिन् प्रथमप्रकरण ओङ्कारनिर्णयो नाम। स च सर्वथात्र प्रतिपादितः कामं द्रढयतीवं मतम्।[5] अत एव प्रतीयते प्रथमं प्रकरणं सर्वथैवासम्बद्धं शिष्टैस्त्रिभिरपि प्रकरणैः। एतच्च केषाञ्चिदस्मदीयानामेव मतं न शक्यमपह्नोतुम्।

४। यथा प्रदर्शिता शङ्करेण।

५। यथातिस्पष्टमन्तिमयोः कारिकयोरस्य प्रकरणस्य (१. २८—२९)। न खलु कश्चित्तदध्ययनात्परमन्यत्किञ्चिदवश्यं बुभुत्सते तद्गतं। विनिवृत्तेः सर्वाकाङ्क्षायाः।

किञ्च। वैतथ्यं चेदागमस्यैव प्रबन्धेन भवेद्' यद्वा तद्वा भवतु' वैतथ्यस्य तावदत्यल्पकमपि किञ्चिदुपलभ्येतागमे। न पुनरुपलभ्यते। अन्यच्च। वैतथ्यं चेत्सर्वथा स्वतन्त्रमेव स्यात् किं नु तस्य तेन हीयेत। किमसम्बद्धमापद्येत। किं वा जायेतासमञ्जसम्। किं वानुपपन्नम्। आगमेन सर्वथाप्यसम्बन्धे किं वास्य छिद्येत। आगमस्य सर्वथाप्यभावे च किं वैतथ्यमसकलमिव प्रतिभाति। तथा चेत्कुत्र वा किं वा। यत्पुनरेतत्सर्वथापि सकलमेवेति साभिनिवेशमनुशीलयतां ताः खलु कारिका विशेषेण त्वन्तिमाश्चतस्रः (३. ३४—३८) स्पष्टं प्रकाशयन्ति[६]।

अथ वैतथ्याद्वैतयोः सङ्गतिः। अत्राह भाष्यकारः समासेनाद्वैतं नागममात्रेण प्रतिपत्तव्यमपि तु तर्केणापीति। अतस्तदर्थमद्वैतं प्रकरणमारब्धव्यमिति। यद्येवमेवेदं भवेत्तर्हि वक्तव्यं तन्मते द्वितीयतृतीययोः प्रकरणयोरभिन्नं प्रयोजनमिति। उभयत्र हि तर्केणाद्वैतस्य प्रतिपत्तिस्तेनोच्यते। किञ्च यद्येतदेवेष्यते कथयतु भवान्किमिहास्मिन्न द्वैते प्रकरणे चिकीर्ष्यते। एकेनैव हि नः प्रकरणेनासेत्स्यत्स्यत् प्रयोजनम्। अतस्तृतीयस्यापि प्रकरणस्य नूनं केनाप्यभिनवेन प्रयोजनेन भवितव्यम्। तच्च निपुणं परीक्षमाणेन पुंसा नातिदुरवगमम्। इह ग्रन्थकार आदा-(३. १-२) वजातिं कीर्तयित्वा स्थापयित्वा च "एतत्तदुत्तमं सत्यमिति"(३. ४८) वेदान्तविचारणया जीवब्रह्मणोरभेदं दर्शयति समाधिं चास्पर्शयोगाख्यम् (३. ३९)। तच्च सत्यावगमाय। इति तदेव प्रयोजनम्।

नैतदस्ति नास्मिन्प्रकरणेऽद्वैतमिति। अस्त्येवैतदिह (३. १८)।[७] किं पुनस्तावतैव युक्तमिदं वक्तुं द्वितीयतृतीययोः प्रकरणयोरस्ति कश्चित् सम्बन्धः साक्षात्। तथा चेद्ययोः कयोरप्येकविषययोर्ग्रन्थयोर्न दुर्लभः सम्बन्ध एतादृशः। स पुनर्न कथञ्चिदेकस्मिन्ग्रन्थे प्रकरणानामध्यायादीनां वा परस्परम्। न च भाष्यकारेणाप्युत्प्रेक्षितः कश्चिदीदृशः सम्बन्धः। अतोऽद्वैतप्रकरणमिदमद्वैतवेदान्ते कश्चित्स्वतन्त्र एव ग्रन्थ इति युक्तं प्रतिभाति।

---

६। उत्तरयोरपि प्रकरणयोः सङ्गतिविचारणायां प्रष्टव्या अन्येऽप्येतादृशाः प्रश्नाः।

७। "अद्वैतं परमार्थो ही"ति (३. १८)। "अद्वैतं परमार्थत"इति (१. १७)।

अथा ला त शा न्ति श्चतुर्थं प्रकरणम्। अत्र भा ष्य का र सम्मतः सम्बन्धः प्रागेव प्रदर्शितः। स खलु मन्यते द्वैतिनां वैनाशिकानां च दर्शनमन्योन्यविरुद्धतया मिथ्यादर्शनम्। तदिह विस्तरेण प्रदर्श्याद्वैत-दर्शनसिद्धिरुपसंहर्तव्येति। कियदेतत्तूपादेयमिति विमर्शनीयम्। इह
५ वादीति पदं द्विः (४. ३, ६) प्रयुक्तम्। तेन च द्वैतिन उद्दिष्टा इत्याहुः। अत्र तेषां मिथो विवादस्योक्तावपि न कश्चित्तद्विस्तरो दर्शितः। वैनाशिकानां तूद्देशोऽपि नास्ति। अथ वैनाशिकपदेनाविशेषाद्बौद्धा एवाभिप्रेता इति चेन्न। न खलु तेषां द्वैतिभिरन्योन्य विरोधस्तत्र दृश्यते। आ ग म शा स्त्र का रे ण पुन कण्ठतस्तन्मतमेवानुमोदित-
१० मस्मिन्प्रकरणे यथा प्रदर्शितमनेन वृत्तिकारेण तत्र तत्र। एवं च सति कथं नु खलु कश्चिद्भा ष्य का र मनुरुन्धानो जानीयादस्मात्प्रकरणाद् वैनाशिकानां दर्शनं मिथ्यादर्शनमद्वैतदर्शनं तु सम्यग्दर्शनमिति। इत्थमनेना ला त शा न्ति प्र क र णे न पूर्वस्य पूर्वेषां वा प्रकरणानां कश्चन विशेषसम्बन्धो दुरवगम एव। स्मरणीयं चेह यदुक्तं प्राक्
१५ प्रथमद्वितीययोः प्रकरणयोरन्योन्यसंसर्गविचारणायाम्

तत्किं ना ला त शा न्तेः कश्चन सम्पर्कः पूर्वैः प्रकरणैः। कथमेवं भविष्यति। नूनमस्त्येव कश्चित्। स च निविड एव। अवगच्छेच्च कश्चिदवहितोऽध्येता सन्ति ता बह्व्य उक्तयः प्रथमेषु त्रिषु प्रकरणेषु या उपलभ्यन्ते चतुर्थेऽपि प्रकरण इति। चिन्तितचराश्च केचित्पदार्था पुनश्चिन्त्यन्ते चतुर्थे। यथा। १. १६ग = ३. ३६क = ४. ८१क ; २.६-
२५ ७ = ४. ३१-३२[८] ; (तुल. २. १, ४ सह ४. ३३ ; २. २ सह ४. ३४[९]) ; ३. २०-२२ = ४. ६-८[१०] ; ३. २९-३० = ४. ६१-६२[११] ; ३. ४८ = ४. ७१। अन्यच्च। "ज्ञेयाभिन्नं ज्ञान"मिति

८। द्र. ३. २, ४८ ; ४. ४, ५।

"वेदान्तसम्प्रदायविद्भिराचार्यै"रिति। "तथा च सम्प्रदायविदो वदन्ती"ति च
२५ श ङ्क रा चा र्य वचनं ब्र ह्म सू त्र भा ष्ये (२. १. ९, १. ४. १४) ११।

९। द्वितीयार्धस्त्वभिन्न एव।

१०। अत्राभिप्रायिकः स्तोकः पाठभेदः। स च पूर्वत्र भावशब्द उत्तरत्र तु धर्मशब्दः। अर्थे तु तयोर्न कश्चिद्भेदः।

११। अत्राप्यल्पकः पाठभेदः। तथा हि। तृतीये प्रकरणे "स्पन्दते
३० मायया मन" इत्यत्र "चित्तं चलति मायये"ति चतुर्थे। एवं तृतीये "मन"इति चतुर्थे तु "चित्त"मिति।

(३. ३३ ; ४. १) "अजाति"वाद इति (३. २ प्रभृतिषु ४. ३ प्रभृतिषु च) अनेकत्र लभ्यते च चिन्त्यते च। ततश्च स्फुटमिदं स खलु सम्पर्कश्चतुर्थस्य प्रकरणस्य सहान्यैः प्रकरणैर्निविड इति।

स च सम्पर्को न तथा कश्चिद् यथा कस्यापि ग्रन्थस्य सह स्वकीयैरध्यायादिभिः। तत्रैता युक्तयो भवन्ति।

संस्कृते ग्रन्थादौ नमस्कारादिरूपं मङ्गलाचरणं सुप्रसिद्धम्। अस्ति च चतुर्थस्य प्रकरणस्य प्रारम्भ एव नमस्काररूपं मङ्गलाचरणम्।[१२] एतच्च व्यञ्जयति नायं कस्यापि ग्रन्थस्यांशविशेषः। अपि तु स्वयमेव कश्चित् स्वतन्त्रो ग्रन्थ इति।

स्यादेतदेवम्। मङ्गलाचरणं नाम न केवलं ग्रन्थानामादावेव भवत्यपि त्वन्यत्रापि। यथा प्रशस्तपादभाष्ये श्रीधरकृतायां न्यायकन्दल्यां द्रव्यादिषु ग्रन्थेषु। यथा वा मल्लिनाथस्य सञ्जीवन्यां प्रतिसर्गम्। इदं त्विहावेक्षणीयम्। ईदृशेषु स्थानेषु प्रतिपरिच्छेदादिकमेवेदं क्रियते न पुनरारम्भ एव यथेहालातशान्ताविति।[१३] अत्र कश्चिद्बौद्धो ग्रन्थः स्मर्यते। प्रज्ञाकरमतेर्बोधिचर्यावतारो नामायम्। अत्र नमस्कारात्मकं मङ्गलाचरणमादिम उपान्तिमे च परिच्छेदे न पुनः सर्वत्र। व्यक्तमिह मङ्गलाचरणमिदं नवमपरिच्छेदारम्भे कृतमपि न खलु सूचयति परिच्छेदोयं कश्चिदभिनवो ग्रन्थ इति। अस्ति ह्यत्र दशमोऽपि परिच्छेदः। बोधिचर्यावतारपञ्जिकां च तदीयामालोचयतो मे प्रतिभाति मङ्गलाचरणमिदमस्य परिच्छेदस्य गौरवविशेषमेव व्यनक्ति न पुनरन्यत्किञ्चित्। प्रज्ञापारमिता ह्यत्र प्रतिपाद्यते। न च ताथागतसिद्धान्ते प्रज्ञापारमितायाः परं किञ्चिदस्ति महत्तरम्। अतो नैतन्मङ्गलाचरणं शक्नोति निःशङ्कं दर्शयितुमलातशान्तिप्रकरणं नाम स्वतन्त्रो ग्रन्थो। ननु प्रबन्धः पूर्वेषां प्रकरणानामिति। एवमप्यत्र चिन्तयितव्यमवश्यम् आदावन्ते चोभयत्राप्यलातशान्ते नमस्कारात्मकं मङ्गलमधिगम्यते। अप्येतन्न दीपयति प्रकरणमिदं सर्वथापि स्वतन्त्रं सम्पूर्णं च स्वेनैवेति।

---

१२। "ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान्" इत्यादि। ४. १।

१३। एवमेवागमशास्त्रस्य दिग्देशाहृतानि हस्तलिखितानि पुस्तकानि संस्करणानि च प्रकटयन्ति।

अन्यच्च । दृष्टमिदमधस्तात् वै त थ्ये वा द्वै ते चोभयत्रापि कतिचित्कारिका असकृत्पठिता इति । किमित्येवं कृतम् । को नु लाभोऽनेन । केचिद्विषयाश्चिन्तितचरा अपि पुन र ला त शा न्तौ चिन्त्यन्ते । यथाऽजातिवादो विमृष्टोऽ प्य द्वै ते पुन र ला त शा न्तौ विमृश्यते । निर्णीतपूर्वं किञ्चित्परिग्रहात्पुनरुद्दिश्येत सौकर्याय विचारस्य न पुनर्भूयो निर्णीयेत । अभावात्प्रयोजनस्य । अत एवेदं प्रवर्तयेत्कश्चिच्चिन्तयितुम ला त शा न्ति प्रकरणमिदं सर्वथा स्वतन्त्रं सम्पूर्णं च स्वात्मना । अत्र च प्रकरणकारेण प्रयोजनवशादन्यत्र चिन्तितं तत्तत्किमपि गृहीतं विवेचितं वा भूयसे वैशद्याय प्रदर्शितं वा भङ्ग्यन्तरेण । अत्राजातिवादः स्फुटमेतदवगमयति ।

तदयमत्र निर्णयः । एतानि चत्वारि प्रकरणान्यन्योन्यं स्वतन्त्राणि । निबद्धानि त्वेकस्मिन्ग्रन्थ आ ग म शा स्त्र नाम्नेति ।[१४]

---

## §४ । आ ग म शा स्त्र स्य मूलम् ।

इह मया ग म शा स्त्र स्य विविधानि संस्करणानि पुस्तकानि च दिगन्तरेभ्यः समासादितानि परीक्षितानि च । अत्रैतन्मूलगतं किञ्चिच्चिन्तयितव्यम् । तत्र तावदयं प्रथमः प्रश्नः । अपीदमुपलभ्यमानं मूल मा ग म शा स्त्र स्य सकलं नवेति । नैतत्तथेति मे प्रतिभाति । तथा हि । आ ग म प्र क र णे प्रथमां कारिकां पठतश्चेतस्युदियात्सर्वथाकस्मादेवेयमापतितात्रेति । गद्यबन्धोक्तस्य जाग्रत्स्वप्नसुषुप्तरूपस्य स्थानत्रयस्य सर्वथाप्यनुद्देशे नेयं कारिका कथमपि

---

१४ । यद्यपीयमेव मे मतिस्तथापि प्रसिद्धिमनुरुन्धानेन मया प्रकरणचतुष्टयमिदमेकग्रन्थतयैव पूर्वैरिव विवरीतुं प्रयतितम् । द्र. पृ. ८३ ।

शक्यावगन्तुम् ।[१] अत एव प्रतीयते नूनमादावेकापि तावत्कारिका कुतोऽपि प्रभ्रष्टेति ।[२]

इदमपरं विमृश्यम् । यथा चतुर्थे[३] तथा प्रथमेऽपि प्रकरणे भवितव्यं केनापि मङ्गलाचरणेन । न त्वेतदधिगम्यते । अतः प्रतिभाति पूर्वमिदमासीत्साम्प्रतं तु कुतोऽपि न विद्यते । अस्मादपि प्रतिभाति काप्येकानेका वा कारिका लुप्तेति । ५

मङ्गलाचरणे तु नातिनिर्बन्धो युज्यते । न खल्वा ग म शा स्त्र काले मङ्गलाचरणपद्धतिस्तथाद्रियत यथा पश्चात् । न च शा री र क भा ष्य- का रः श ङ्क रो ऽ पि तदाचरदिति शक्यं वक्तुं निर्विचिकित्सम् ।[४] अतो मङ्गलाचरणाचरणाभ्यां न तथा किञ्चिदुपचीयतेऽपचीयते वा प्रकृतस्यार्थस्य । १०

किञ्च । अधीतां कश्चित्कारिकां पञ्चमीं षष्ठीं च । कथयतु च स कस्तयोरन्योन्यं सम्बन्ध इति । अकाण्ड एवेयमापतिता षष्ठी कारिकेति कस्य नाम न प्रतिभायात् । भा ष्य का रो ऽप्यत्र सर्वथापि तूष्णीं स्थितः । एतच्च प्रवर्तयेत्पुरुषं चिन्तनाय यदिहाप्येकानेका वा कारिका साम्प्रतं नाधिगम्यत इति । इमाश्च कारिकाः प्राक्कदाचिदासन्नभूवंश्च वा कृतभाष्या अपि । एवमप्यलुप्तपदेनाः काल इति कश्चिन्मन्वीत । १५

चतुष्पात्त्वमिवात्मन ओङ्कारोऽपि प्रतिपिपादयिषितोऽस्मिन्प्रकरणे यत्रेदानीं साकल्येनोनत्रिंशत्कारिकाः । तत्र यावदूनविंशीं नेषदपि किञ्चिदो- ङ्कारस्य । नेदं युक्तमिव प्रतिभासते । अन्यच्च । अकारोकारमकारयोगा- दोङ्कारो भवतीति ज्ञाने सत्येवोनविंशी कारिका शक्यावबोद्धुं नान्यथा । २०

---

१ । गद्यबन्धरूपा मा ण्डू क्यो प नि ष त्पूर्वा पश्चात्तु कारिकेति न काचिद्विप्रतिपत्तिरिति न कश्चिन्मन्तुमर्हति । निराकृतत्वादस्य पक्षस्यान्यत्र युक्तिभिः प्रबलाभिः ।

२ । ये पुनर्मन्यन्ते गौ ड पा द का रि का नाम मा ण्डू क्यो प नि ष दो व्याख्यानमिति तेषामपि मते निसर्गादेव प्रारम्भे तथा किञ्चिदपक्ष्यते यथा सा प्रथमा कारिका नाकस्मिकी प्रतीयेत । न तु तथोपलभ्यते । अतोऽपि वक्तव्यं लुप्तैकानेका वा कारिकादाविति । २५

३ । सा ङ्ख्य का रि का भा ष्य मपि कश्चिदिह निर्दिदिक्षेत् । न त्वेष निश्चयो गौ ड पा द नाम्ना प्रसिद्धोऽप्यनयोर्द्वयोर्ग्रन्थयोः कर्ता परस्परमभिन्न इति ।

४ । तै. उ. भाष्यस्यारम्भश्लोकाः श ङ्क र कृता न वेति विवदन्ते । ३०

अतोऽत्र मा. उ प नि ष दोऽष्टमो (८)गद्यबन्ध इव किमप्यवश्यमपेक्ष्यते। न पुनस्तदधिगम्यते। तस्मादिहापि कारिका किञ्चिद्विकलेति प्रतिभाति।

अपरश्च। काश्चित्कारिकाः कथं कथमपि व्युत्क्रमं पठिता इव प्रतिभासन्ते। अतो दुष्करमर्थाविष्करणम्। युक्तस्य तु क्रमस्योपादाने ५ भवति तत्सुकरम्। दृश्यतामिह कारिका २. ३३। नेयमिह युज्यते। अन्यत्र तु (२. ३१) श्लिष्यतेऽस्याः पाठः। एवमेवापराः काश्चित्कारिकाः (४. ३८, ३९, ४०, ४१) अन्येनैव क्रमेण (४. ४०, ३८, ४१, ३९) पठ्येरन्निति युक्तमुत्पश्यामः। चिन्तितं चेदं यथास्थानम्।

अन्यत्रापि च (४. ७७) कश्चिन्महदसामञ्जस्यम्। इहैतस्याः १० कारिकायाः पूर्वोत्तरार्धयोर्मध्येऽपरमप्यर्धद्वयमवश्यं पठनीयमन्यथान्वयानुपपत्तिः। प्रदर्शितं चैतत्तत्रैव। तदिदं विलुप्तं साम्प्रतम्। सेयं विचारणा पाठभेदविचारश्च प्रकाशयति विस्पष्टं भा ष्य का र कालेऽपि दशामस्याग म शा स्त्र मूलस्य।

---

## § ५। आ ग म शा स्त्र स्य पाठभेदाः।

१५ परीक्षितः सविस्तरं पाठभेद आङ्गलवृत्तौ। इहापि स्तोकमुच्यते। विविधानां संस्करणानां ग्रन्थानां चासादितानां तत्तेभ्यो जनपदेभ्यः परीक्षया बहवः खलु साधीयांसोऽविकलाश्च पाठा अधिगताः सूचिता वा। भूयांस एवैतेषां तासु तासु कारिकासु दर्शिताः। उपन्यस्ताश्च तत्र तत्र तदनुकूला उपपत्तयः। याः पुनरुपपत्तयः सुगमा २० न ताः प्रदर्शिताः। दृष्टान्तत्वेन तूपरिष्टात्केचन पाठाः प्रदर्श्यन्ते।

१। १. ११घ "द्वौ तु" इत्यत्र "द्वे तु"।

२। २. ४घ "संवृतत्वेन" इत्यत्र "संवृतत्वं न"।

३। २. ७घ "विप्रतिपद्यते" इत्यत्र "ऽपि प्रतिपद्यते।" द्र. ४. ३२ख।

४। २. ११ख "व्यवस्थितान्" इत्यत्र "ऽव्यवस्थितान्।

२५ ५। २. ३४क "नात्मभावेन" इत्यत्र "नान्यभावेन।"

६। ३. ११घ "खं यथा" इत्यत्र "स-यथा"।

७। ४. १२क "यद्य" इत्यत्र "यद०। इहास्ति यदिशब्दो द्वितीये पादे।

अतो नायं पुनरप्यपेक्ष्यते प्रथमे पाद इति स्पष्टम्। न चायं शक्योऽत्र सुष्ठु व्याख्यातुम्। कस्मिंश्चित्तु ग्रन्थे (विश्वभारतीस्थिते ग्रन्थान्तरलिखिते) "यद्°"पाठ एव लभ्यते।

| | | |
|---|---|---|
| ८। ४. २३क | "ऽनादेः" इत्यत्र "ऽनादिः"। "ह्यादि"(घ)रित्यत्र च "जाति"रिति। अयमन्तिमः पाठो ग्रन्थान्तरेऽपि (पञ्चनदविश्वविद्यालयस्थिते) लभ्यते। | ५ |
| ९। ४. ५६घ | "संसारं न प्रपद्यते"इत्यत्र "संसारो नोपलभ्यते"। समर्थितोऽयं पाठो द्वाभ्यां ग्रन्थाभ्याम्। | |
| १०। ४. ५७क | "सद्भावेन" इत्यत्र "स्वभावेन"। | १० |
| ११। ४. ५८ख | "जायन्ते" इत्यत्र "संवृत्या"। | |
| १२। ४. ७३ग | "परतन्त्राभि०" इत्यत्र "परतन्त्रोऽभि०। | |
| १३। ४. ७४ग | "परतन्त्राभि°" इत्यत्र "परतन्त्रोऽभि०। | |
| १४। ४. ८१ख | "धर्मो धातुस्व०" इत्यत्र "धर्मधातुः स्वभावतः°। | |

---

## § ६। आगमशास्त्रस्य नाम। १५

लोके किलायं निबन्धो माण्डूक्यकारिकेति (°कारिका इति वा) गौडपादकारिकेति (°कारिका इति वा) प्रसिध्यति। सम्प्रदायात्पुन आगमशास्त्रमित्ययं प्रथते। अत एव शङ्कर-कृतमस्य भाष्यमागमशास्त्रविवरणं[1] मित्युच्यते। कदाचित्त्वय-मागमग्रन्थ इत्युपदेशग्रन्थ इति च कथ्यते[2]। माण्डूक्य- २० वार्त्तिक[3]मिति माण्डूक्योपनिषद्गौडपादव्याख्यानमिति

---

१। यथा सुप्रसिद्धं भाष्यान्तपङ्क्तिषु पुष्पिकासु वा।

२। यथा तास्वेव भाष्यान्तपङ्क्तिषु पुष्पिकासु वा।

३। अत्र वार्त्तिकशब्दस्य प्रयोगो न युक्तः। न ह्यत्र तल्लक्षणमस्ति। "उक्तानुक्तदुरुक्तचिन्ता वार्त्तिक" मिति ह्याह काव्यमीमांसायां राजशेखरः (द्वितीयेऽध्याये)। २५

गौडपादीयकारिकेति गौडपादीयमित्यपि वा स एव ग्रन्थः प्रसिद्धो लोके यथा दृश्यते केषुचिद्धस्तलिखितेषु पुस्तकेषु। माण्डूक्यशाखे त्यपि तन्नामोपलभ्यते[४]। [५]क्वचिच्चायं ग्रन्थो वेदान्तमूलमित्युच्यते। अर्थश्चास्य सविशेषं चिन्तनीयः।

५ किमिदमागमशास्त्रमिति विमर्शनीयम्। आगम आम्नाय इत्यनर्थान्तरम्।[६] आम्नायश्चेदृशेषु स्थानेषु सम्प्रदायः।[७] सम्प्रदायश्च गुरुपरम्परा तदधिगत उपदेशो वा। ततश्चैतादृशादागमादधिगतं शास्त्रम्[८] आगमशास्त्रम्। यदेतदर्थतोऽपि तथेति स्पष्टमेतस्य विषयानुशीलनात्।

१० किञ्च। प्रसिद्धः स्मरणार्थकः स्मृधातुः। शास्त्रे स्मृतमित्यादिषु स्थानेषु सम्प्रदायात्परम्परातो वाधिगतार्थकथनेऽपि प्रसिद्धोऽस्य प्रयोगः। इह चागमशास्त्रे दशकृत्वः[९] प्रयुक्तः स्मृतशब्दः। स्पष्टमेवायमस्यागमलब्धत्वं दर्शयति। सन्ति चैतस्मिन्नर्थे परेऽपि बहवः प्रयोगाः। यथा। (१) "सतामिति विनिश्चयः" (१. ६)। (२) "स्वप्न आहुर्मनीषिणः" १५ (२. २)। (३) "स्वप्न आहुः प्रकाशितम्" (३. ३)। (४) "एवमाहुर्मनीषिणः" (२. ५)। (५) "दृष्टं वेदान्तेषु विचक्षणैः" (२. ३१)। (६) "इति तत्वविदो विदुः" (२. २४)। (७) "मुनिभिर्वेदपारगैः। निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः" (२. ३५)। (८) "वादिनः केचित्" (४. ३)। (९) "विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते" (४.४)। (१०) ख्याप्य-

---

२० ४। यथा सायणः (तै. आ. ७. १ ; पृ. ४८३ ; ७. २. ; पृ. ५७० )—
"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।
इति माण्डूक्यशाखायां श्रुतिवाक्यमुदाहृतम्॥" इति।
इयं चोद्दिष्टा कारिकास्मद्ग्रन्थस्य १. १७।

५। दयानन्दाङ्गलवैदिकविद्यालयसंगृहीतयोर्द्वयोर्ग्रन्थयोः (द[१], द[२])।

२५ ६। यथोक्तमभिधानरत्नमालायाम् (१. ९)"वेदः श्रुतिस्तथाम्नायः स्वाध्यायश्छन्द आगम"इति।

७। "अथाम्नायः सम्प्रदाय" इत्यमरः (३. २. ७)।

८। शास्त्रविषये तु द्रष्टव्या काव्यमीमांसा ( द्वितीयाध्यायः ) ; म. बृ., पृ ३, २६८-९ ; म. सू. टी. पृ. ४।

९। १. १०, २६ ; २. ४, ७ ; ३. १; ४. ३२, ४६, ८८, ९०, ९४।
३०

मानामजातिं तैः" (४ ५)। (११) "जातिमिच्छन्ति वादिनः" (४. ६)।[१०]
एतच्च सर्वं द्रढयति "अत्रोक्तं वेदान्तसम्प्रदायविद्भिराचार्यैः"रिति।
"तथा च सम्प्रदायविदो वदन्ती"ति च शङ्कराचार्य वचनं ब्रह्मसूत्रभाष्ये (२. १. ६, २. ४. १४)।[११]

---

## ७। ग्रन्थकारः। ५

[१]दृष्टमेतदधस्तादसकृ"न्मृल्लोहविस्फुलिङ्गाद्यै"रितीयं कारिका (आ. शा. ३. १५) "सम्प्रदायविदा"मुक्तिरित्याह शारीरकभाष्ये (ब्र. सू. १, ४. १४) शङ्करः। स एव च तत्रैव (ब्र. सू, २. १. ६) "अनादिमायये"त्यादिकारिकां (आ. शा. १. १६) परामृश्य कीर्त्तयति "अत्रोक्तं वेदान्तसम्प्रदायविद्भिराचार्यै"रिति। एतेन स्पष्टं प्रतीयतेऽनुमीयते १० वा निरवशेषमेवागमशास्त्रमिदं कैश्चिद्वेदान्तसम्प्रदायविद्भिराचार्यैः प्रणीतमिति। के पुनरमी आचार्या आचार्यो वा। स खलु गौडपाद[२]

---

१०। एते च शब्दाश्चिन्तयितव्या इह—

(१) "अन्ये" (१. ७); (२) "अपरे" (२. २६); (३) "आश्रमविदः" (२. २७); (४) "कालचिन्तकाः" (१. ८); (५) "कालविदः" (२. २४); १५ (६) "गुणविदः" (२. २०); (७) "चित्तविदः" (२.२९); (८) "दिग्-विदः" (२. २४); (९) "पादविदः" (२. २१); (१०) "प्राणविदः" (२. २०); (११) "बुद्धि-विदः" (२. २९); (१२) "भुवन-विदः" (२. २४); (१३) "भूत-विदः" (२. २०); (१४) "भोक्तृविदः" (२. २२); (१५) "भोज्यविदः" (२. २२); (१६) "मनोविदः" (२. २९); (१७) "मूर्तविदः" २० (२.२३); (१८) "लय-विदः" (२.२८); (१९) "लोकविदः" (२.२१); (२०) "सूक्ष्मविदः" (२. २३); (२१) "सृष्टिविदः" (२ २८); (२२) "स्थितिविदश्च" (२. २८)।

११। एतच्च वचनद्वयं यथाक्रम मागमशास्त्रस्य कारिकाद्वयं (१. १६, ३. १९) परामृशति। २५

१। पृ. १८।

२। क्वचित् (ज. र. १०) गौडपदः क्वचिच्च (शा. वा. १. २३, पृ. ९) गौडचरण इत्यपि दृश्यते। तदेतत्केवलं छन्दोऽनुरोधात्।

इति सुप्रसिद्धं सर्वत्रागमात्। अधिगम्यते चान्तिमासु भणितिषु पुष्पिकासु वा तावतामतिमहतां लिखितानामेषां ग्रन्थानाम्। अयं च कदाचिद् गौडपादाचार्य[3] इति। कदाचिद् गोडाचार्य[4] इति। कदाचिद्वा गौड[5] इति च प्रसिध्यति। इह कश्चिन्मन्वीत गौड इत्येतावदेवास्य नाम आचार्यादिपदन्तु केवलं गौरवद्योतनायेति।[6] यत्तस्य गौड इत्येव नामेति कण्ठत एवाह स्वग्रन्थे[7] बालकृष्णानन्दसरस्वती।

इहायं प्रश्नः। किमयं गौडपाद शब्दः संज्ञापदं विशेषणपदं वा। किमेष तस्याचार्यस्य नाममात्रं सूचयत्याहोस्विद्गौड[8]देशभवत्वात्स तथोच्यत इति। सुरेश्वरस्य नैष्कर्म्यसिद्धौ (४. ४४) तावद् गौडा इति द्राविडा इति च द्वया आचार्याः कीर्त्यन्ते। तत्र प्रथमेन पदेनागमशास्त्रकारा गौडपादाचार्या द्वितीयेन तु उपदेशसाहस्र्यादिकाराः शङ्कराचार्या अभिप्रेताः।[9] इदमिह कश्चिद्ब्रूयाद्यथात्र शङ्करो द्राविड इत्यनेनात्मनो देशसम्बद्धेन नाम्ना निर्दिष्टो गौडपादो ऽपि तथैव देशसम्बद्धेनैव नाम्ना गौड इति प्रथितः।

शार्मण्यो बुधो मोत्त वलसरो नाम स्वकीये प्राचीन वेदान्ते (देर एलटेर वेदान्त, पृ. ३) मन्यते सुरेश्वरस्य गौडा इत्यनेन द्राविडा इत्यनेन च पदेन द्वौ प्रथितौ वैदान्तिकसम्प्रदायौ बोद्धव्यौ। यदि तावदिह द्राविडपदेनावाच्यां केरलेषु (मालाबार-जनपदे) शङ्कर-

३। श्वे. उ (आनन्दाश्रमे) भाष्ये शङ्करः (पृ. ३०)।

४। प. द. २. २३ ; सायणभाष्यम् (तै. आ. ७. २ आनन्दाश्रमस्य)।

५। नै. सि. ४. ४४।

६। वेङ्कटसुब्बियो ऽपि तथैव मन्यते।

७। शा. वा. पृ. ६ ; २. ९-१२।

८। गौडदेशः किल प्राक् ८२° ८८° द्राघिम्णोः २९°-२८° विस्तारयोश्च मध्ये बभूवेत्यस्ति प्रमाणम्। द्र. मत्स्यपुराणम्, २१. ३० ; कूर्मपुराणम्, १. २०. ९ ; लिङ्गपुराणम्, १. ६९. ३४। विस्तरः पुनराङ्गलवृत्तौ।

९। एवमेव व्याचष्टे टीकायां ज्ञानोत्तमः। अत्र ज्याकोब संस्कृते ग्रन्थे भ्रमात्केरला इति पठितव्ये केवला इति पठित्वा व्यर्थमेव विचिन्तितम्। अयं च भ्रमो द्वितीयेऽपि संस्करणे (१९२६, पृ. १९३) दृश्यते।

सम्प्रदायोऽवगम्यते गौडपदेनाप्युदीच्यां गौडमण्डलस्थो वेदान्तसम्प्रदायोऽवगन्तव्यः। अयं च गौडदेशस्तत्र प्रचुरगुडोत्पत्तेस्तथा प्रथित इति स एव विद्वांश्चिन्तयति।[१०]

इह गौड़ द्राविड़ पदाभ्यां किं कौचिदाचार्यावाहोस्विद् द्वौ वेदान्तसम्प्रदायावित्युभयथापि शक्यते व्याख्यातुम्। तत्र सन्त एव निश्चिन्वन्तु तत्त्वम्।

इदमत्र मन्तव्यम्। न खलु गौड़पदमात्रमेकान्तेन कमपि गौड़वासिनं शक्नोत्यवधारयितुम्। अगौड़वास्यपि गौड़ो भवति। योगवासिष्ठसारस्य लघुवासिष्ठस्य वा कर्ताऽभिनन्दो नाम काश्मीरोऽपि गौड़ इति प्रथितः। एवमेव लघुचन्द्रिकायाः कर्ता ब्रह्मानन्दोऽगौड़ोऽपि गौड़ इत्युच्यते। भवेदेतदेवं स किल परमनैयायिकस्य गदाधरभट्टाचार्यस्य सतीर्थ्यभूतो विद्यामधीयानो गौड़ेष्वासीदिति गौड़ इति प्रसिद्धिं लेभे। आत्मनः पूर्वपुरुषाणां वा भूतेन भवता भविष्यता वा गौड़देशसम्बन्धेन पुरुषो गौड़ो भवतीति यः कोऽप्येतद्वेत्ति। पश्यत्विह कश्चित्सह शाबरभाष्येण मीमांसादर्शनम् (१. ३. २१)। प्रयुञ्जन्ति हि लोके मथुरामभिप्रस्थितो माथुर इति। मथुरायां वसन्माथुर इति। मथुराया निर्गतश्च माथुर इति।

इहेदं स्मरेम यदुक्तं बालकृष्णानन्देन (शा. वा., पृ. ६) गौड़पाद मधिकृत्य (शा. वा. पृ. ५)। "गौड़चरणाः कुरुक्षेत्रदेशगत हिररावती नदी[११] तीरभवगौड़जातिश्रेष्ठा देशविशेषभवजातिनाम्नैव प्रसिद्धा द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेनाधुनिकैर्जनैरपरिज्ञातविशेषाभिधानाः सामान्यनाम्नैव लोकविख्याता" इति। गौडब्राह्मणेषूत्पन्नत्वात्सोऽस्मदाचार्यो गौड इत्यत्राप्यपेक्ष्यते बलीयः प्रमाणम्।

श्रूयतामत्र यन्मन्यते स बुधो मोत्तबलसरस्तस्मिन्नेव ग्रन्थे (पृ. ६)। आगमशास्त्रस्य कर्त्ता गौडपादो नाम न कश्चिदासीत्पुरुषः। गौड़पादशब्देन त्वस्माभि गौंडपादकारिकाणां

---

१०। उदीच्यो गौडजनपदः पुण्ड्रनाम्ना प्रथते। पुण्ड्रशब्दश्च लोहितेक्षुं बोधयतीति ज्ञेयम्।

११। केयं नदी हिररावतीति नाद्याप्यनन्यतया निर्णीता। नामापि चेदमविकलतयास्माभिरधिगतं न वेति सन्दिह्यते।

प्रकरणरूपाश्चत्वारः पादा एव बोद्धव्याः। गौडपादीयकारिकेति स एव समग्रो ग्रन्थो यथोपलभ्यते मातृकास्विति। इदं च मन्यते। ग्रन्थोऽयं कदाचिद् गौडपादीति जनपदसम्बद्धेन नाम्ना लोकेऽप्रथत यथा भद्रचर्या भद्रचरीति।[12] गौडपादीति आगमशास्त्रविवरणमिति चास्याधिगम्यते नाम।

अन्यच्चेदं मन्यते मोत्तबलसरः। उत्तरकालीनेषु ग्रन्थेषूद्धृतानि वचनानि तन्मतमेवोद्बलयन्ति। न हि प्रदर्शयन्ति तान्यासीत्कश्चित्तस्य ग्रन्थस्य कर्त्ता गौडपादो नामेति। स तु ग्रन्थस्तात्कालिकेषु जनेषु कस्यचित्सम्प्रदायस्य मौलो निबन्धोऽभवन्न पुनरासीत्तस्य कश्चिन्निर्दिष्टो निबन्धकः। उच्यते च तेन भोटवाङ्मयप्रामाण्यात्समर्थनाय स्वमतस्य यद्यप्ययं ग्रन्थो वेदान्तशास्त्रमित्यवगतो बौद्धैर्ग्रन्थकारैस्तथापि न ते किञ्चिदप्यवगच्छन्ति गौडपादस्य यः खलु तत्कर्त्तेतीष्यते।

यथा च प्राक्प्रदर्शितमसकृच्छारीरकभाष्ये (१.४.१४; २.१.९) गौडपादकारिकामधिकृत्य (१.१६, ३.१५) शङ्करस्य भगवतः "अत्रोक्तं वेदान्तसम्प्रदायविद्भिराचार्यै"रिति। "तथा च सम्प्रदायविदो वदन्तीति" चोक्तिद्वयमत्र मोत्तवलसरस्य मतमेव समर्थयते। शाङ्करभाष्यस्य व्याख्याकारो गोविन्दानन्दो रत्नप्रभायाम् आनन्दगिरिश्च न्यायनिर्णये "वृद्धसम्मति"-रिति (ब्र. सू. १.४.१४, २.१.९) तदेव शङ्करमतं द्रढयति। सुरेश्वरोऽपि नैष्कर्म्यसिद्धौ (४.४१, ४२) गौडैः[13] कृतमिति कारिकाद्वय[14]मुद्धरति। गौडाश्चात्र गौडपादाः।

---

१२। बह्वेवं लोके। यथा खण्डनखण्डखाद्यस्य आनन्दपूर्णविद्यासागरकृता टीका विद्यासागरीति। रामभद्रकृता न्यायकुसुमाञ्जलिटीका रामभद्रीति। एवं दिनकरी रामरुद्रीत्यादयः।

१३। नेदमवितथं सुरेश्वरो न कदापि गौडपादस्य नाम करोतीति। सकृदपि तावत्तेन प्रयुक्तमेतत् (बृ. भा. वा. ४.४.८८६, पृ. १८६६)। तस्मिन्नेव च ग्रन्थे (१.४.३८९, पृ, ९१०) स "गौडपादीयं वच" इति प्रयुनक्ति। "गौडाचार्या" इति च (२.१.३८६, पृ. ९९१)।

१४। १.११, १९। स्पष्टं चेदमाह नै. सि. टीकायां ज्ञानोत्तमो "गौडपादीयं वाक्य"मिति कथयन्।

शङ्कराचार्यास्त्वनेन द्राविडा इति गृहीताः। दृष्टमस्माभिः प्रागेव वचनं गौडाचार्याणाम्।[१५] अत्र तु टीकाकारो रामकृष्णो न गृह्णाति नाम तद्ग्रन्थकारस्य। स खल्वा"चार्यसम्मति"रित्येतन्मात्रं लिखति। सदानन्दो वेदान्तसारे (§ ३३) "तदुक्त"मिति कारिकाद्वयम् (३३. ४४-४५) उद्धरति। टीकाकारस्तु नृसिंहसरस्वती ग्रन्थकर्तुर्नामाप्रकाशयन् "वृद्धसम्मति"रित्येतन्मात्रं ब्रवीति। अपरो व्याख्याकारो रामतीर्थस्तु "सम्मति"मेव केवलमाह न पुनरेषां वा तेषां[१६] वेति कमपि विशेषम्।

अद्वैतब्रह्मसिद्धेः (पृ. २७७) कर्ता काश्मीरकयति जानन्नपि गौडपादकारिकां न तथा किमप्याह यथेयमेकस्यैव कस्यापि कृतिरित्यवगम्येत। विज्ञानभिक्षुः किल साङ्ख्यप्रवचनभाष्ये (१. ४५, ४७, १५३ ; ६. ५०) उदाहरत्यसकृद् गौडपादकारिकाम्। न पुनस्तत्रास्ति किञ्चिद्येनाधिगम्येत गौडपादस्तत्कर्तेति। पश्यन्नेवं मोक्षवलसर आह न किञ्चिदस्ति[१७]वचनं येनास्माभिः प्रतीयेत गौडपादी गौडपादेन विरचितेति। किञ्चेदमाख्यायते गौडपादस्य शिष्यो गोविन्दस्तस्य च शिष्यः शङ्कर इति। किञ्च शङ्करस्य गौडपादेन व्यासेन च साधं संलापं वर्णयतासङ्गतमेव किञ्चिदाख्यायते। तादृश्येवासङ्गतोक्तिर्गोविन्दस्य वासभूमिविषयेऽपि। सा किल नर्मदातीर इत्येके हिमालयेषु सेत्यन्ये। दुर्लभमितिवृत्तमुक्तिष्वेतादृशीषु। एवमालोच्य वलसरोऽवधारयति सम्प्रदायागतमिति यत्किमप्यधिगम्यते गौडपादस्य तदाख्यानमात्रम्। न तेन गौडपादी नाम केनापि गौडपादेन कृतेति सिध्यति। ततश्च केवलं गौडपादी शङ्करस्य सिद्धय एव कश्चिद् गौडपादः कल्पित इति।

१५। प. द. २. २८।

१६। तात्कालिकानां पुंसाम्।

१७। अन्तरेण तु कामपि भाष्यपङ्क्तिं (श्वे. उ, १. ८) शङ्करस्य यत्रेदमुक्तं "तथाच शुकशिष्यो गौडपादाचार्य" इति। एतदपि वलसरेणैव प्रदर्शितम्। वस्तुतस्त्वेतद्भाष्यं न शारीरकभाष्यकर्तुः शङ्करस्येति मतं न केवलं वलसरस्यैव अपि त्वन्येषां बहूनां येष्वयमपि वृत्तिकारो गणनीयः।

अथाह वेदान्तेतिवृत्तं विरचयितुकामो ब ल स र:। यदुक्तमधस्तात्तेनेदं शक्यमधिगन्तुं यदासीत्कश्चित्सम्प्रदायो गौड़ेषु दार्शनिकानां पूर्वं श ङ्क र तोऽपि। प्राभवच्च तत्र बुद्धधर्मोऽपि यावन्नवमं शकशतकम्। स च सम्प्रदायः क्रमप्राप्तं वेदोपनिषदुपदेशं शास्त्राकारेण निबबन्ध। तदेव शास्त्रं चतुर्भिः पादैर्गौ ड़ पा द का रि का। या खल्वभवत्पूर्वं श ङ्क रा त्। प्राचीनो वेदान्त इत्ययमेवैको ग्रन्थो लभ्यते। स्यादेतन्नैतादृशोऽपरः कश्चिद् ग्रन्थो विरचित इति।

इदमिह चिन्तयितव्यं विहायातिमात्रां सूक्ष्मेक्षिकाम्। अस्त्या ग मशा स्त्रं गौ ड़ पा द का रि का वा।[१८] अवश्यमस्य ग्रन्थस्य केनापि कर्त्रा भवितव्यम्। स च कर्त्रैकोऽपि भवेत्। सम्भूय वा बहवस्तं कुर्युः। भवेद्वोपन्यस्तं तत्र मतं केषाञ्चित्पुरुषपुङ्गवानाम्। किं पुनः शक्यमेतावतैव चिन्तयितुं ग्रन्थोऽयं कस्यापि समग्रस्यैव जनपदस्य कृतिरिति। कदाचित्केनाप्यतिविशिष्टेन पुरुषेणोत्कीर्त्तितोऽर्थो लोके समग्रस्यैव तदीयस्य देशस्य तन्मतमिति गृह्येत। न पुनस्तस्यैव विशिष्टस्य पुंसः। अनेनैव नयेन ग्रन्थोऽयमेकेनैव केनापि पुंसा विरचितोऽपि समग्रस्यैव कस्यचिज्जनपदस्य मतं प्रकाशयति। कः पुनस्तस्य कर्ता। स खलु कश्चिद्गौड़ो नाम। असति विरोधेऽसङ्गतौ वा कस्याञ्चित् किमिति स आगमः प्रसिद्धिर्वा न गृह्येत। कस्तत्र दोषः। एवं च स खलु ग्रन्थकारो गौ ड़ो नाम। गौरवात्तु स एव पादशब्दस्याचार्यशब्दस्य च योगा द्गौ ड़ पा द इति गौ ड़ा चा र्य इति च ख्यातः।

बहु खल्ववगम्यत आ चा र्या णां विवरणेभ्यः प्राचीनेभ्यः। तानि तु प्रायेण काल्पनिकानि स्वविरुद्धानि च विशेषेण त्वेतादृशेषु विचार्येषु।[१९] एतानि च विवरणानि भगवतः श ङ्क र स्य पुरुषाणां च केषाञ्चित्तत्संसृष्टानाम्।[२०]

---

१८। यद्वा तद्वान्यत्किञ्चिन्नामास्तु न तेन किञ्चिद्धीयते।

१९। पश्यतु कश्चिद्यदुक्तमत्र श्री स. क पे ल व ल क रे ण तदीये वे दा न्त द र्श ने (पुण्यपत्तने, पृ. २३१-२)।

२०। एतानि च विवरणानि यथाभिहितानि महामहोपाध्यायेन श्री गो पी ना थ क वि रा जे न ब्र ह्म सू त्र भूमि का यां प्रकाशितायामच्युतमुद्राशालायाम्। तद्यथा मा ध वा चा र्य स्य श ङ्क र दि ग्वि ज यः (न पुन-

## §८। गौडपादस्य कालः।

अथ विमर्शनीयः कालो गौडपादस्य। तच्च कुर्वद्भिरस्माभिः स्मरणीयः कश्चन प्रत्नो वृत्तान्तो यत्राधिगम्यते सम्पर्को गौडपादस्य कैश्चिद्यवनैः।[1] अस्ति सदाशिवब्रह्मेन्द्रस्य ग्रन्थो जगद्गुरुरत्नमालास्तवो नाम। अस्ति च तट्टीका आत्मबोधेन्द्रसरस्वतीकृता।[2] तत्र(१०)दृश्यते गौडपादस्य पादा अपूजयन्त अयाचर्येन। आसीच्च स नायकः अपलून्यादीनां निषाकसिद्धानामिति।[3] इह टीकाकारो हरिमिश्रस्य गौडपादोल्लासः रामभद्रदीक्षितस्य पतञ्जलिविजयम् (=० चरितम्?) अन्यच्चैतादृशं निबन्धमनुसरन्नेवमाह। गौडपादः किल शुकस्योपदेशाद्धिमालये तपस्तेपे।[4] तत्प्रभावादेव च तिरोऽभवत् पुरुषाणाम् अयाचर्या-

---

विद्यारण्यस्य)। आनन्दगिरेः शङ्करविजयः। राजचूडामणेः शङ्कराभ्युदयः। चिद्विलासस्य शङ्करविजयः। सदानन्दस्य शङ्करविजयः। आत्मबोधस्य पुण्यश्लोकमञ्जरीपरिशिष्टम्। सदाशिवब्रह्मेन्द्रस्य गुरुरत्नमाला तट्टीका चात्मबोधकृता सुषमा। बुभुत्सवः स्वयमेवैतान्ग्रन्थान्द्रष्टुमर्हन्ति ग्रहीतुं चार्थं सावधानम्।

१। ते खल्वत्र यवना नाम येऽद्यत्वे ग्रीशविषयवासिन इति प्रसिद्धाः।

२। वेदान्तपञ्चप्रकरणी। श्रीविद्यायन्त्रालयः। कुम्भकोणम्।

३। "अभियुञ्ज दयाचर्य पूज्यपादान पलून्यादिनिषाकसिद्धनेतॄन्।
अथ गौडपादान् फणीशभाष्यप्रथमाचार्यकपण्डितान्प्रपद्ये॥" इति।

४। नारायणकृतायां मा. उ. टीकायां दृश्यते। ऋग्वेदीयमाण्डूक्योपनिषदश्चत्वारि प्रकरणानि गौडपादेन व्याख्यातानि। स किल बभूव शिष्यः शुकस्य परमगुरुश्च शङ्करस्य। स चाविर्बभूव द्वापरयुगान्ते। तत्र स बदरिकाश्रमे स्वभक्तिप्रभावेण प्रसादयामास भगवन्तं नारायणम्। अधिगम्य च तस्माद्वरं काञ्चिद्गिरिगुहां विवेश यथा न कस्यापि कलियुगोत्पन्नस्य मुखं दृश्यते। अस्मिन्नवकाशे शङ्करस्तमुपगम्य गुहातो बहिरागमनाय ययाचे। स तु न तथा चकार। तथापि तु वटपत्रेषु लोहितकठिन्या लिखित्वा स्वग्रन्थस्य चत्वारि प्रकरणानि शङ्कराय ददाविति दृश्यते दक्षिणापथाधिगतानां हस्तलिखितानां पुस्तकानां हुल्त्स विरचिते तृतीये विवरणे (पृ. १३३)। नास्ति त्वन्त ईदृशीनां लोककथानां यासु केचिदेव श्रद्दधीरन्।

१। यद्यपीयं मचबं बेदौयेति प्रथते।

धिष्ठितानां बौद्धकुमतम् ("शौद्धोदनिकदध्वा")। स चा या र्यो ऽन्वगम्यत प्रत्यन्तयोगिभिर् अ प लू न्य द मी शा दिभिः "तक्षशिलाधीशशाक्य-प्रा वृ ति प्रमुखैश्चे"ति। इह अ पो लो नि या स स्य भारतभ्रमणात्[५] स्पष्टमेव प्रकाशते योऽत्र संस्कृते ऽ प लू न्य इत्युक्तः स खलु नान्यः कश्चित् पृ थु गौ रा भिधयवनदार्शनिकानुगामिन ऽ पो लो नि या सा त्। स खल्वृत्पेदे प्रायः प्रथमे शकशतके। पर्यटच्च भारतभूमौ। समागाच्च सभां फ्र ओ ते स स्य। अयं च संस्कृते प्रागुक्तस्तक्षशिलाधीशः प्रा वृ ति-श्चानन्य एव। द मी श श्चेहोक्तो द मि सो नाम सहचरश्च सुहृच्च अ प लू न्य स्य (अ पो लो नि या स स्य)। स चान्तिमः पुरुष अ या र्यो नाम इ अ र्ळ्कु स इति मन्यते। (अपभ्रंश इवायं र च्छ य स शब्दस्य तस्मिन्नेव पुस्तके, पृ. ८३)। अथमासीत्कश्चिद्यवनो राजा।[६]

भद्रं भो अस्त्वेतत्सर्वम्। किं पुनरायातमेतेन कालस्य गौ ड पा दी-य स्य। [७]यवनविवरणात्तावत्केवलम् अ प लू न्य स्य भारतभ्रमण-मवगम्यते। न तत्र किञ्चिद्गौ ड पा द ग त म्। यदिह द्वयोरपि यवनसंस्कृतविवरणयोः कतिचिन्नामान्यभिन्नानीत्यवश्यमिदमभ्युपेयम्। रमणीयं चेदम्। न पुनस्तावता ध्रुवं सिध्यति पुमांसोऽपि तेऽभिन्ना एवेति। अवितथत्वे च तयोर्द्वयोर्वृत्तान्तयोर्महान्व्यतिकरो यत्र सुदुर्गमः सिद्धान्तः। किं बहुना। श ङ्क र कालोऽपि तादृगेवापद्येत न यं वयमिह मीमांसितुमीहामहे।

तत्र तावत्प्रमाणाभासमाख्यानमात्रमनाश्रित्य गौ ड़ पा द कालस्य सम्भवन्तौ परावरौ पर्यन्तावेव निश्चेतव्यौ। तेनैव ह्यधिगम्येत किञ्चिद्युक्त्युपेतम्। अत्र व ल स र स्य तर्को न प्रतिभात्युपेक्षणीयः। स खलु मन्यते। सन्त्यत्र त्रयः सौगता ग्रन्थकृतो यैरुद्धृतो

---

५। तिआना-निवासिनः अ पो लो नि य सो भा र त भ्र म ण म्, ओ स मों-द-वोब्बार-प्रियो-रचितम्। जर्नाल अफ दि र्याल एसियाटिक सोसाइटी, ग्रे. बृ, १८६०, पृ ७०।

६। श्री ह्रि रि य न्नः (इण्डियान् हिस्टोरिक्याल कोयार्टार्लि, १९२६, पृ. ४१५-४१६); श्री गो पी ना थ क वि रा ज श्च (ग्रन्थनाम प्रागुक्तम् पृ. २२. २३)।

७। कियत्पुनरेतदुपादेयमिति दुर्वचम्। केवित्त्वत्रोपाख्यानमेव किञ्चित् पश्यन्ति न पुनः किमपि तत्त्वम्। तदेतत्पूर्वोक्त एव ग्रन्थे द्रष्टव्यम्।

गौडपादः। यथा भव्यापरनामको भावविवेकः[८] (प्रायः ४२२—४७२)। शान्तिरक्षितः (६२७—६८४)। एतच्छिष्यश्च कमलशीलः। भावविवेक आसीत्कर्त्ता मध्यमकहृदयकारिकायास्तदीयायाश्च टीकायास्तर्कज्वाला या नाम।[९] अस्य ग्रन्थस्याष्टमे परिच्छेदे भावविवेकेन विवेचितं वेदान्तमतं यथान्येषु परिच्छेदेषु साङ्ख्यं वैशेषिकं मीमांसा च। तत्र च भावविवेकेन तर्कज्वालायामष्टमे परिच्छेदे छा. उ. मु. उ. श्वे. उ.-प्रभृतीनां वचनान्युद्धृतानि। तेषां च चत्वार्यतिगुरूण्यत्र (१०-१३)। अत्रादिमानि त्रीण्यतिनिविडसम्बद्धान्यागमशास्त्रकारिकाभिरन्तिमं तु (त. ज्वा. ८. १३) स्तोकमपि न भिद्यत आगमशास्त्रकारिकायाः (३. ५)। तस्मादागमशास्त्रं विदितं तदा भावविवेकेनेत्यवश्यमभ्युपगन्तव्यम्। अन्येषु तु त्रिषु वचनेषु सत्यप्यतिनिविडे सम्बन्ध आगमशास्त्रकारिकाभिर्नाभेदस्तेषामाभ्यः। कुत्रत्यानि पुनरेतानि वचनानीत्यन्वेष्टव्यम्।

योऽसौ शान्तिरक्षितः स खलु कर्तान्येषामिव ग्रन्थानां स्वोपज्ञया वृत्त्या मध्यमकालङ्कारकारिकाया अपि। शिष्यश्च तदीयः कमलशीलस्तत्त्वसंग्रहस्येव मध्यमकालङ्कारकारिकाया अपि पञ्जिकाकारः। शान्तिरक्षितेन विवेचितं मतम् (म. अ. का. ६३) औपनिषदानाम्।[१०] तच्च कुर्वता तेनागमशास्त्रतो दश कारिका उद्धृताः। एतच्चागमशास्त्रं कमलशीलेन उपनिषच्छास्त्रमिति पञ्जिकायामवतारितम्।

---

८। भोटपाठात्तु भव्यविवेक इत्यवसीयते। अयमासीन्नागार्जुनस्य मध्यमकमतानुगः शिष्यो गुरुश्च प्रासङ्गिकशाखायाः। विवेचितं तन्मतं चन्द्रकीर्त्तिनात्मनो मध्यमकवृत्तौ। प्रभाकरमित्रेण चावतारितमेतस्य प्रज्ञाप्रदीपशास्त्रं चीनवाचि (६६२-६६४ शत.)। स चासीद् धर्मपालकालेऽपीति। भावविवेकः किल तस्मिन्काले बभूवेति वदन्ति।

९। अस्या अविकलं नाम मध्यमकहृदयकारिकावृत्तिस्तर्कज्वाला नाम।

१०। प्रायेण सौगतग्रन्थेषु सदृशाः शब्दा उपलभ्यन्ते। यथा औपनिषदिक इति (त. स. पञ्जिका, ३२८), उपनिषद्वादीति (बो. च. प. पृ. ४९९, ४६६) च। न पुनर्वेदान्तवादीति वैदान्तिक इति वा।

अतो न कोऽपि शक्नोत्यपह्नोतुं सद्भाव मा ग म शा स्त्र स्य भा व-वि वे का त्पूर्वम्। स्वयमेव च तेनेदमुद्धृतम्। एवं च निश्चिनुयात् कश्चिन्नावरो गौ ड पा दो भा व वि वे का दिति। तस्य च कालः प्रायः ४२२ शकाब्दगणितः।

५ वक्ष्यमाणा च वाचोयुक्तिरेतमेवार्थं समर्थयिष्यत इति प्रतीयते। सन्ति केचन सुप्रथिता सौगता आचार्या ये समुत्पेदिरे प्रायः १२२—३२२ शकाब्दमध्ये। आचार्यो गौ ड़ पा द श्च केषाञ्चिदेषु क्वचित्सकलं क्वचिद्विकलं क्वचिद्भावाभिप्रायेण वचनजातं स्वकृतावुपन्यस्यति। तद्यथा। इदं वयमधीमह आ ग म शा स्त्रे (४. २२ क-ख)—

१० "स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते।" इति।

इदं च ना गा र्जु न स्य (शक. १२२) म ध्य म क वृ त्तौ (२१. १३ क-ख)—

"न स्वतो जायते भावः परतो नैव जायते।" इति

द्र. एतद्ग्रन्थस्य पृपृ. १०३, १२३। अन्यच्चोक्त मा ग म शा स्त्रे (४. ७ क-ख, २९ ग-घ)—

१५ "प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति।" इति।

पठ्यते चेदं म ध्य म क का रि का या म् (१५. ८ ग-घ)—

"प्रकृतेरन्यथाभावो न हि जातूपपद्यते।" इति।

इदं चा ग म शा स्त्रे (४. ४ ख)—

"अभूतं नैव जायते।" इति।

२० च तुः श त के (३७३ ग) चा र्य दे व[११]स्येदं वचनं दृश्यते—

"नाभूतो नाम जायते।" इति।

किञ्च कारिकेय मा ग म शा स्त्रे (३. ४४)—

"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत्॥" इति।

२५ इयं चोपमेया वक्ष्यमाणया कारिकया (म. सू. अ. १४. ६ ग-घ)—

"लीनं चित्तस्य गृह्णीयादुद्धतं शमयेत्पुनः।
शमप्राप्तमुपेक्षेत तस्मिन्नालम्बने पुनः॥" इति।[१२]

---

११। आ र्य दे वः किल ना गा र्जु न स्य शिष्यो बभूव। तस्य च कालः १२२-१४७ शकाब्दमितः।

३० १२। मै त्रे य ना थ स्य (३२२ शक.)।

एवं च प्रागुक्ता आ गा र्जु ना दी नाचार्यान्पराभृशन् गौ ड पा दो नूनं तदवरज एव। न चास्य कालः ३२२ तमाच्छकाब्दात्पूर्वं भवति।

अन्याप्यत्र काचिच्चिन्तनीया कारिका ग म शा स्त्र स्य (४. १३ ग-घ)। द्र. पृ. ११२। सा चैषा—

"जाताश्च जायमानस्य न-व्यवस्था प्रसज्यते ॥ इति। ५

इयं चोपमेया वक्ष्यमाणया पङ्क्त्या[१३]—

"उत्पन्नस्य पुनरुत्पत्तौ कल्प्यमानायामनवस्थाप्रसङ्गः।" इति।

अ स्य भि ध र्म को श व्या ख्या य शो मि त्र स्य। सेयं व सु-ब न्धु कृ त स्या भि ध र्म को श स्य टीका। अस्य तिस्रष्टीका उपलभ्यन्ते। य शो मि त्र स्य गु ण मि त्र स्य व सु मि त्र स्य च। यथोक्तं य शो- १० मि त्रे ण स्वटीकोपोद्घाते। अवगम्यते च य शो मि त्र स्य कालः शकोत्तरस्य षष्ठस्य शतकस्यान्तिमे पाद इति। एवं सा चे दा ग म शा-स्त्र का रि का (४. १३) प्रागुक्ता म भि ध र्म को श व्याख्या-माश्रित्य प्रवृत्ता तर्हि वक्तव्यं गौ ड पा द स्य कालः षष्ठाच्छकोत्तर-शतकान्न पूर्व इति। १५

नूनमयं कालो विरुणद्धि परम्परावगतं कालं श ङ्क र स्य तच्छिष्य-परम्परायाश्च। न चायमद्यापि सिद्धान्तितः केनापि निःसंशयम्। अपि नाम तत्तन्मठाम्नायवृत्तान्ता[१४] वस्तुतस्तथा यथा ते तत्तत्कर्तृभिरिष्यन्ते।

किं बहुना। एतस्मिन्नीदृशे महति व्यतिकरे नूनमतिदुर्लभः स पन्था येन याथातथ्येन निर्णीयेत काल आ चा र्य स्य गौ ड पा द स्य। २०

———

१३। द्र ४. १३ (पृ. ११२—११३)।

१४। एषां मठाम्नायानामर्वाचीनानां च विदुषामभिप्रायेऽनुसृत एकतः शकपूर्वकं सप्तमं शतकमपरतश्च शकोत्तरं नवमं शतकमित्येतयोर्द्वयोरन्तयोर्मध्ये श ङ्क रः किल प्रादुर्बभूवेति वक्तव्यम्। यथा शकपूर्वकं सप्तमं शतकम्। शकपूर्वकं पञ्चमं शतकम्। शकपूर्वकं द्वितीयं शतकम्। शकोत्तरं तृतीयं शतकम्। २५ शकोत्तरं पञ्चमं शतकम्। शकोत्तरमष्टमं च शतकम (७१०-७४२)। अन्तिम एव तु समयः सम्मतः साम्प्रतं भूयसां विदुषाम्। द्र. क वि रा ज श्री गो पी ना थ स्य ब्र ह्म सू त्र म् (भूमिका), पृ. २६; श्री बि ल्व ब ल क-र स्य च वे दा न्त द र्श न म्, पृष्ठ. १९२-१९३।

## §९। गौडपादस्यान्यत उद्धरणम्।

अन्यथापीदं द्रष्टव्यम्। अस्ति प र मा र्थ सा र'मिति कृति-रा दि शे ष स्य। पञ्चाशीत्यार्याभिर्निबद्धत्वा दा र्या प ञ्चा शी ति[2] नाम्नापीयं प्रथते। स चैष आ दि शे षो नूनं पुराणप्रथित एव विवक्षितो यः खलु तस्मिन्नेव ग्रन्थे "आधार" इति (८) "जगदाधार" इति च (८७) वर्णितः। केचित्त्वेनं प त ञ्ज लिं मन्यन्ते यः स सु-विश्रुतः सर्वत्र कर्ता "फणिभाषितभाष्य"स्य व्या क र ण महाभाष्यस्य वा। प्रत्यभिज्ञाचार्येणालङ्काराचार्येण चा भि न व गु प्ते न स्वसिद्धान्त-विवरणार्थमयमेव ग्रन्थो मूलत्वेन परिगृहीतः कृत्वा यथाप्रयोजनं तत्र तत्र कमपि योगं वा वियोगं वा परिवर्त्तं वोत्कर्षं वा।[3] एष ग्रन्थः परतो गृहीत इति स्वय म भि न व गु प्तो ऽपि व्यनक्ति।[4]

१। तत्र तावदस्याः पञ्च संस्करणानि सन्ति। एषामन्तिमं श्री सू र्य-ना रा य ण शा स्त्रि णः। कृतं चैतत्पद्धत्याभिनवया। मुद्रितं रोमकवर्णेन। अवतारितं चाङ्गलवाचि।

२। श्लोकाः पुनरत्र सप्ताशीतिः। तेषामादिमौ द्वावुपजातिच्छन्दसा। द्वावप्येतौ पश्चाद्योजिताविति प्रतीयते। यद्येतदेवावितथं तर्हि वक्तव्यमेतयोः प्रथमो बहुपूर्वं परिगृहीतोऽ भि न व गु प्ते न द्वितीयस्तु (८७) मूलान्तर्गत इति प्रति-भाति। यथा मन्यते सू र्य ना रा य णः (पृ. ४०)। अत्र परोक्षकालप्रयोगोऽपि ("बबन्धे"ति) विमर्शनीयः। अष्टादशोनविंशयोर्मध्येऽपरस्यैकस्य श्लोकस्य (यथा त्रि. स. ग्रन्थमाला संस्करणे दृश्यते) परिगणनया पञ्चाशीतिसंख्या शक्यते समाधातुम्। अ भि न व गु प्त स्य ग्रन्थे (प. सा.[2]) १०५ श्लोका दृश्यन्ते। स तु स्वयमाह (१०५) श्लोकानां शतमात्रम् ("आर्याशतेन तदिदं संक्षिप्तम्"— १०२)। अत्र द्रष्टव्योवक्ष्यमाणः श्री का न्ति च न्द्रः (पृ. ५६)।

३। ब. ब. सो बा नि, जे. आर. ए. सो, १९१२, पृ. २५७; श्री का न्ति-च न्द्रस्य अ भि न व गु प्तः, १९३५, पृ. ५७; सू र्य ना रा य ण शा स्त्री, निउ इण्डियान् एण्टिकोयारी, १, पृ. ३७। तुल. प सा.[1], ३५—३६, प. स.[2] ३६–३७।

४। प. स.[1] १–२। आ य ङ्ग र मतं (जे आर. ए. एस, १९१०, पृ. १३३८) न युक्तं प्रतिभाति।

अस्यां कृतौ सन्त्या दि शे ष स्य शे ष स्य वा कानिचिद्वाक्यानि यानि संवदन्त्या ग म शा स्त्र स्य कैश्चिद्वाक्यैः। किमसौ संवादो गौ ड पा द कालनिर्णये किमप्युपकरोति न वेत्युत्पद्यते विचिकित्सा।

तत्र श्री सू र्य ना रा य ण शा स्त्री तावत्कानिचित्साद्दश्यवस्तूनि[५] विमृशन्मन्यते गौ ड पा द एव कुतोऽपि तत्तदुद्धरति। तच्च ५

---

५। सुगमं स्यादितीह तत्किञ्चित्प्रदर्श्यते—

(क) प्राणाद्यनन्तभेदैरात्मानं संवितत्य जालमिव।
संहरति वासुदेवः स्वविभूत्याक्रीडमान इव॥ प. सा.[१] ३०।
तुल. आ. शा. २. १९।

(ख) त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिधनाख्यैः। १०
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैश्छादितं तुर्यम्॥ प. सा.[१] ३१।
तुल. आ. शा. १. १-५; मा. उ. ३-७ (पृ. २२३—२३४)।

(ग) मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः।
उपलभते स्वयमेव गुहागतं पुरुषमात्मानम्॥ प. सा.[१] ३१।
तुल. आ. शा. २. १२। १५

(घ) जलधरधूमोद्गतिभिर्मलिनीक्रियते यथा न गगनतलम्।
तद्वत्प्रकृतिविकारैरपरामृष्टः परः पुरुषः॥ प. सा.[१] ३९।
तुल. आ. शा. ३. ८।

(ङ) एकस्मिन्नपि च घटे धूमादिमलावृते शेषाः।
न भवन्ति मलोपेता यद्वज्जीवोऽपि तद्वदिह॥ प. सा.[१] ३६। २०
तुल. आ. शा. ३. ५।

(च) हिमफेनबुद्बुदा इव जलस्य धूमो यथा वह्नेः।
तद्वत्स्वभावभूता मायैषा कथिता विष्णोः॥ प. सा. ५३।
तुल. आ. शा. १. ९।

(छ) यद्यत्सिद्धान्तागमतर्केषु प्रब्रुवन्ति रागान्धाः। २५
अनुमोदामस्तत्तेषां सर्वात्मवादधिया॥ प. सा.[१] ६९।
तुल. आ. शा. ४. ५।

(ज) उत्पत्तिनाशवर्जितमेवं परमार्थमुपलभ्य।
कृतकृत्यः सफलजन्मा सर्वगतिस्तिष्ठति यथेष्टम्॥ प. सा.[१] ७९।
तुल. आ. शा. ३. ३२। ३०

क्ष

कुर्वंस्त्यजत्येष किञ्चिदादत्ते वा किञ्चिदनुजानाति वा किञ्चित्प्रकर्षयति वा किञ्चित्। यस्माच्च ग्रन्थात्स उद्धरति स खल्वसौ परमार्थसार नामक इति।

इदं च स आह। अभिनवगुप्तस्य परमार्थसारे (३१) आगमशास्त्रे (१.११) चोभयत्र विश्वतैजसप्राज्ञैस्तुर्यस्य बन्धनमावरणं वा दृश्यते। एतच्च सर्वं गृहीतं गौडपादेन परमार्थसारात्पुनरभिनवगुप्तेनागमशास्त्रादिति।

अत्र भूयस्त्वपरिजिहीर्षया स्तोकमात्रं प्रत्युच्यते। अधीयतामिहेयमार्या[६]—

"त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिधनाख्यैः।
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैश्छादितं तुर्यम् ॥३१॥"[७]

प्रयत्यतां चावबोद्धुमर्थमस्या विनैव विवरणमभिनवगुप्तस्य राघवानन्दस्य वा। इह "जाग्रत्स्वप्नसुषुप्तै"रिति विशेषणपदम्। "विश्वतैजसप्राज्ञै"रिति च विशेष्यपदम्। भवत्वेवं तावत्। किं पुनरिह प्रतिपत्तव्यमकाण्ड एवापातितैर्जाग्रत्स्वप्नसुषुप्तैर्विश्वतैजसप्राज्ञैः। के नामैते विश्वतैजसप्राज्ञाः। कथं नु खल्विमे ज्ञेयाः। कथं वावगन्तव्यमेक एव जाग्रदादिभिस्तिसृभिरवस्थाभिर्विश्वादिरूपेण त्रिधा भवतीति। कथं नु खलु च तुर्यपदं निःसंशयं पूर्वार्यायां (३०) पुंलिङ्गं वासुदेवशब्दं परामृशन्नपुंसकलिङ्गे प्रयुज्येत।[८] किञ्च। प्रथमार्धे

---

६। प. सा.[१] ३१।

७। अभिनवगुप्तोऽत्र द्वे आर्ये पठति। इयं तयोराद्या (प. सा.[१] ३४)—

"सृष्टिस्थितिसंहारा जाग्रत्स्वप्नौ सुषुप्तमिति तस्मिन्।
भान्ति तुरीये धामनि तथापि तैरावृतं भाति॥" इति।

(इह पूर्वार्धे प. सा.[३] संस्करणे टीप्पण्यां स्वप्नमिति स्वप्नाविति पाठ्यम्)। अन्त्या त्वियम् (प. सा.[२] ३५)—

"जाग्रद्विश्वं भेदात्स्वप्नस्तेजःप्रकाशमाहात्म्यात्।
प्राज्ञः सुप्तावस्थो ज्ञानघनत्वात्ततः परं तुर्यम्॥"

८। अभिनवस्तु(३५) तुर्यपदं नपुंसकलिङ्गे प्रयुञ्जानो युक्तमेवाकरोत्। यतस्तत्र पूर्वं (३४) नपुंसकलिङ्गो धामशब्दो विद्यते। एतच्चागमशास्त्राद् (१.९., २२) गृहीतमिति प्रतीयते।

तैरिति पदेन किमिह बोध्यते परामृश्यते वा। तत्रेदिदं पदं नातिरिच्यते तैश्छादितमिति राघवानन्द विहितं विवरणं कियत्संगच्छत इति चिन्तनीयम्। अन्यच्च। किं नु भोः प्रथमार्धे "त्रिभिरेवे"त्यत्रैवकारः क्रियते। को लाभ एतेन। तदेतत्सर्वं समुदितमवगमयति सद्भावमागमशास्त्रस्य प्राक् परमार्थसारस्य। अतिपरिचितागमशास्त्रस्य हि पुरुषस्योपपद्यते विरचनं तादृशं न पुनरन्यस्य। ५

अन्यच्च। आसीदादिशेषस्य पुरत आगमशास्त्रं (१. १-५)[९] यस्मात्कृतं तेनोद्धरणं स्वच्छन्दात्। सङ्कलितं च किञ्चिन्नूतनमपि।[१०] यत्र खल्वागमशास्त्रे (१. १-५) पञ्च कारिकाः परमार्थसारे तु तत्र (३१) एकैवार्या। तत्रापि कश्चिदभिनवोऽर्थो निवेशितः।[११] १० इदमेकतोऽन्यतस्तु छन्दोऽनुरोध इति हेतुद्वयान्न शशाकेवादिशेषोऽत्र निरवशेषं प्रकाशयितुमभिप्रायमात्मीयम्। ततश्चोदपद्यत[१२] कश्चिद्-नियमः। परमार्थसाराभ्यामागमशास्त्रमुपमिमानस्य मे प्रतिभाति नानुरूपमशक्नोदिवादिशेषः प्रकटयितुमभिप्रायं स्वकीयम्। अत एव विरचितापराप्येकार्या तेन वैशद्याय। १५

अथ किं तन्मूलमभिनवगुप्तसम्मतस्य विवरणस्य (प. सा[१]. ३४, ३५) यदन्तरेणादिशेषस्य तदार्यार्थो (प. सा.[१] ३१) न सम्यगधिगम्यते।[१३] नूनं न केवलं तदागमशास्त्रम्। तथात्वे न तद्ग्रन्थात्सृष्टिस्थितिसंहारा[१४] अत्रागमिष्यन्तात्र। अतः प्रतीयते तत्खलु मूलं यथागमशास्त्रं तथागमोऽपि कश्चित्तात्कालिको न यं वयं २० विद्मो न च यो वर्णितः कुत्रचित्। सद्भावस्तु तस्यावश्यमभ्युपगन्तव्यः। नहि तेन विना शक्यते सर्वं समाधातुम्।

अथायं प्रश्नः। कथं नु खल्वभिनवगुप्तो बुबुधे तमागमम्। इह कश्चित्प्रतिब्रूयात्। आदिशेषस्याभिनवगुप्तस्य च कालयोर्न तथा

९। एवं माण्डूक्योपनिषदपि (३—७)। २५
१०। यथा "आदिमध्यनिधनाख्यै"रिति (३१)।
११। द्र. पूर्वैव टीप्पणी।
१२। प. सा.[१] प. सा.[२]।
१३। द्रः प. सा.[३] अवतरणिकायां सूर्यनारायण कृतं समीक्षणम्।
१४। "आदिमध्यनिधानाख्यैः।" प. स[१]. ३१। ३०

महदन्तरं यथा लोको मन्यते। न चादिशेषकृतस्याभिनवगुप्तकृतस्य च परमार्थसारस्य प्रायः समानकालीनत्वं विरुध्यते। तथापि प्रथमो द्वितीयस्मात्किञ्चित्प्राचीनः। एवं चाभिनवगुप्तकृतमादिशेषकारिकाव्याख्यानं शक्यते सुष्ठूपादातुम्। न चास्ति किञ्चिद्येनादिशेषकृतं परमार्थसारमागमशास्त्रात्पूर्वं मन्येत।

अन्यच्च। आदिशेषो वेदान्तार्थपरायां स्वकृतौ सृष्टिं व्याचक्षाणः साङ्ख्यवेदान्तयोः समन्वयमिव कञ्चित्करोति प्रदर्शयति च तत्र प्रकृतेस्तां सृष्टिमुपेन्द्रात्। उपेन्द्रो वासुदेवो हरिर्नारायणः परमात्मा ब्रह्म चेत्यनर्थान्तम्। सृष्टिप्रक्रियायां चाण्डवादो[१५]ऽनेनाभ्युपगतः। इहाह कुल्लूकभट्टः—

"अभिध्यानपूर्विकां सृष्टिं वदतो मनोः प्रकृतिरचेतनास्वतन्त्रा परिणमत इत्ययं पक्षो न सम्मतः। किन्तु त्रिदण्डि वेदान्तसिद्धान्त एवाभिमतः प्रतिभातीति।"

एतच्च तेनान्यत्रापि (मनुसंहिता, १. १५) विवृतम्—

"नन्वभिध्यापूर्वकसृष्ट्यभिधानाद्वेदान्तसिद्धान्त एव मनोरभिमत इति प्रागुक्तम्। तन्न सङ्गच्छते। इदानीं महदादिक्रमेण सृष्ट्यभिधानाद्वेदान्तदर्शनेन च परमात्मन एवाकाशादिक्रमेण सृष्टिरुक्ता। उच्यते। प्रकृतितो महदादिक्रमेण सृष्टिरिति भगवद्भास्करीयदर्शनेऽप्युपपद्यत इति तद्विदो वदन्तीति"।[१६]

इदं "भगवद्भास्करीयदर्शनं" नाम भगवतो भास्कराचार्यस्य वेदान्तदर्शनम्। अयं भास्कराचार्यः शङ्कराचार्योत्तरमुत्पन्नेषु वेदान्तभाष्यकारेषु प्रसिद्धः। नूनमुदपद्यतैष नवमे शककशतके। तथा हि। पर्यालोचयत्तन्मतं भामत्यां (ब्र. सू. ३. ३. २६) वाचस्पतिमिश्रः (शक. ७६३)। ततश्च सुपरिचितं भास्करवेदान्तमतमादिशेषेण। सङ्कलितं च तन्मतं सह मन्वादीनां मतेन यत्राण्डवादो दृश्यते।

---

१५। यथा वि. पु १. २. ५८; मनुसंहिता, १. ८।

१६। भास्करभाष्यम् (२. १. २६) "ततश्च ब्रह्मणः परिणामानुपपत्तेः प्रधानमेष्टव्यमिति तात्पर्यार्थः।" अत्र न्यायकुसुमाञ्जलौ (पृ. ३३२) मन्यत उदयनः "ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते" इति।

तस्मान्नाहमर्हामि मन्तुं सूर्यनारायण इव परमार्थसारादेवागमशास्त्रमुद्धृतमिति ।

इह्याधीती योगवासिष्ठे उपाध्याय आत्रेयो[17] योगवासिष्ठस्यागमशास्त्रस्य च काश्चन वाचश्चार्थांश्च विचार्य मन्यते योगवासिष्ठमेवोत्पन्नं प्रथमं ततश्चागमशास्त्रमिति । तथा हि । यत्तदागमशास्त्रं न सोऽद्वैतवादस्य कश्चित्स्वतन्त्रो ग्रन्थः । प्रत्युत माण्डूक्योपनिषदः काचित्स्वल्पग्रन्था वृत्तिः । स्वयं चाह वसिष्ठः साक्षाद् ब्रह्मणः खल्वधिगतं मया तद्दर्शनम् । अनुभूतं च तत्सत्यमिति । किञ्चागमशास्त्रं तात्कालिकानामन्येषां दर्शनानां मिथो गुणदोषविवेचनप्रवृत्तं विवदमानं प्रतिकूलं च सदुत्तरमेव वेदान्तं दर्शयति न तु पूर्वमिति ।

अलमतिबहुना । अत्यल्पकमेव किञ्चित्प्रत्युच्यतेऽत्र । दुष्करमिहानुसर्तुमात्रेयम् । भवतु तावदागमशास्त्रं माण्डूक्यस्य स्वल्पग्रन्था वृत्तिरिति । अवाप्नोतु वा कामं स भगवान् वसिष्ठः स्वमतानि ब्रह्मणः सकाशात् । युक्तं नामेदमेतावतैव चिन्तयितुं योगवासिष्ठमागमशास्त्रात्पूर्वं प्रवृत्तमिति ।

कुत्र नु खल्वागमशास्त्रस्य तथाविधमद्वैतदर्शनं दृश्यते । न कश्चित्क्वचिदपीदं पश्यति । प्रत्युताविरोधमेव सर्वे वयं पश्यामः । अथेष्यते मतभेदाभिधानमेव तेनाभिप्रेतमिति । तर्हि योगवासिष्ठमपि तादृशमेवेति वक्तव्यम् ।[18] न तु तथा भवान्वक्ति । इदं च चिन्तयतु भवान् । कयोरपि ग्रन्थयोः केवलमभिन्नस्य सदृशस्य वा वाक्यस्यार्थस्य वा सादृश्यमात्रात्तयोः पौर्वापर्यावधारणं नाम न सर्वत्र निरपायमिति । इदमधीयत आगमशास्त्रे (२. ६ ; ४. ३१)—"आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथे"ति । इयमेव पङ्क्तिरधिगम्यते योगवासिष्ठेऽपि (४. ४५. ४५) । सदृशी चान्यान्यत्र (३. २. २३) । आस्तां वा तावदत्र कालप्रश्न आगमशास्त्रस्य । अपि नामानयोर्द्वयोर्ग्रन्थयोः पौर्वापर्यनिर्णयस्तावद्युज्यते यावन्न तत्सर्वं विचार्यते यदवश्यविचार्यमत्र । किञ्च विमृशत्वत्र कश्चिदागमशास्त्रम् (४. ३१) सार्धमेतया वृत्त्या

---

१७ । योगवासिष्ठं तद्दर्शनं च । १९३२, पृ. १४—१९ ।

१८ । यो. वा. ३. ६२. १०—११ ; ८४. २२—२७ ।

(पृ. १३४)। तमेकमेवार्थं पश्येत्स तत्र मध्यमकारिकायामपि (११. २) या खलु निर्विवादं ज्यायसी योगवासिष्ठात्। ततश्चार्वाचीनाद्योगवासिष्ठा देवोद्गृह्यते गौडपादेनेति कः प्रतीयात्। का वा तत्र वाचोयुक्तिः। असत्यतिबलिष्ठे च प्रमाणे को नामाभ्युपगच्छेद्गौडपादो योगवासिष्ठमुद्गृह्णातीति। किञ्च समे विषये पूर्वापरयोर्द्वयोर्ग्रन्थयोर्यतरस्मात्ततरस्माद्वा स्वेच्छया कश्चित्कश्चिदुद्धरेत्। वस्तुतस्तु कतरस्मात्तत्क्रियत इति निपुणं निर्णेतव्यम्।

जाग्रत्स्वप्नयोरभेदो नाम साधारणोऽयं विषय आगमशास्त्रस्य (२. ५) योगवासिष्ठस्य (४. ६. ११) च। यथोक्तमात्रेयेणापि। इहापि चिन्तयितव्यम्। अत्र प्रथमार्धः[१९] स्पष्टमेव बृहदारण्यकं (४. ३. १४) परामृशति।[२०] न केवलमत्रैव। अपि त्वन्यत्रापि बहुषु स्थलेषु गौडपादेन बृहदारण्यकमुद्धृतम्। एवं च सति कथं नु वयं मन्महे योगवासिष्ठवचनमेवात्रोद्दिष्टमिति। निपुणं त्वध्ययनं योगवासिष्ठस्य[२१] दर्शयिष्यति यदुक्तमागमशास्त्रे समासेन तदेव विवृतं विस्तराद्रामप्रश्नमनुरुन्धानेन वसिष्ठेन योगवासिष्ठ इति।

आत्रेयमते योगवासिष्ठकालः सप्तमं शकशतकम् (७२२)। युक्तयस्तु तत्प्रदर्शिता नानुरूपा न वा प्रत्ययमादधति। अन्येऽपि बहवो बहुधा ब्रुवन्ति। न पुनरद्याप्यधिगतोऽश्चरमः सिद्धान्तः।

किञ्च विमृशत्वत्र कश्चिदागमशास्त्रं (४. ३१) सहैतया वृत्त्या (पृ. १३५)। तमेकमेवार्थं पश्येत्स तत्र मध्यमकारिकायामपि (११. २) या खलु ज्यायसी योगवासिष्ठात्।

इह कृतश्रमो योगवासिष्ठे-स्वामी श्रीभूमानन्दो यदाह[२२] तदप्यवगन्तव्यं सद्भिः। स मन्यते शङ्करो ब्रह्मसूत्रे (३. ४. ५०) वसिष्ठधर्मशास्त्रम् (१०. १८, १२) उद्धरति। भगवद्गीता

१९। "स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः॥" आ शा. २. ५।

२०। "अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त" इति। द्र. १०।

२१। द्र. ४ १९ ९, अनुगामिनश्च श्लोकाः।

२२। योगवासिष्ठं शङ्कराचार्यश्च।

भाष्ये (१३.४) च वसिष्ठं कीर्त्तयति। प्रश्नस्त्वत्रायमुत्पद्यते। किं तौ द्वौ वसिष्ठौ यः स कर्ता योगवासिष्ठस्य यश्च स आचार्यो वसिष्ठः श्रयमाणः शङ्करगुरुशिष्यपरम्परायाम्। किमेतौ मिथो भिद्येते न वेति। न भिद्येते इति केचित्। भिद्येते इति त्वन्ये। न पुनरद्यापि कश्चिच्चरमो निश्चयः॥

---

## §१०। गौडपादस्य कृतयः।

आगमशास्त्रं कृतिर्गौडपादस्येति निश्चयः। अन्यास्तु काश्चित्कृतयः प्रसिद्धा अपि तन्नाम्ना तस्यैवेति दुःशकं निश्चेतुम्। न ह्यत्र सन्ति प्रमाणानि बलवन्ति। तासु प्रथमं तावदागच्छतीश्वरकृष्णरचितायाः साङ्ख्यकारिकाया भाष्यम्। उत्तरगीताया भाष्यमपि गौडपादकृतमिति ब्रुवन्ति। अयं पुनर्भाष्यकार आगमशास्त्रकाराद्गौडपादाद्भिद्यत इति को नाम कथं वा विनिश्चिनुयात्। कोऽथवा विनिश्चिनुयादेतदन्यथा। मन्मतिस्तु परमतप्रवणैव। नृ. उ. ता. उपनिषदो[1]ऽप्यस्ति कापि व्याख्या कृता गौडपादेनेति दृश्यते। सन्त्यन्येऽपि त्रयो ग्रन्थास्तद्विरचितत्वेन प्रसिद्धाः। दुर्गासप्तशतीटीका नाम तेष्वन्यतमा। यथाह तत्र तन्त्राचार्यो भास्करराय:।[2] अन्यौ तु द्वौ ग्रन्थौ सुभगोदयः[3] श्रीविद्यारत्नसूत्रं च।[4]

---

१। वाराणस्यां मालतीसारदासदनग्रन्थालये। दृष्टेयं मया।

२। अस्ति शान्तिनिकेतने विश्वभारत्यां ग्रन्थाक्षरलिखितं १४०९ संख्यकं तत्पुस्तकम्। इदं च तत्र २४-क पत्रे पठ्यते—

"'कवचं बीजमादिष्टमर्गला शक्तिरिष्यते।
कीलकं कीलकं प्राहुः सप्तशत्यां महामनोः॥'

इति गौडपादधृतवचनादिति।"

किञ्च "यदपि वेदान्तमूर्धन्यैर्गौडपादाचार्यैः सर्वमिदं निर्विशेषचित्प्रतिपादकशास्त्रपरत्वेन व्याख्यातम्०॥"

३। अस्त्यस्य शङ्करकृतं भाष्यमित्युच्यते।

४। अन्यदपीदृशं नातिप्रसिद्धं क्षुद्रानुक्षुद्रं पुस्तकं गौडपादकृतं वदन्ति।

इहायं प्रश्नः। अपि नाम द्वौ गौडपादौ बभूताम्। एको वेदान्तिकोऽपरस्तु तान्त्रिक इति। प्रगल्भाचार्यकृते श्रीविद्यार्णवे शङ्कराचार्यस्तान्त्रिकत्वेन वर्णितः। दृष्टश्च तत्र तस्य गुरुशिष्यपरम्पराक्रमः। न पुनरेष मठाम्नायेन संवदति। ततश्च नायं कस्मैचित्कल्पत उपकाराय गौडपादकालविनिर्णये। एतत्पुनर्वक्तव्यं विद्यार्णवगतायां गुरुशिष्यपरम्परायां द्वौ गौडपादौ दृश्येते। तयोरेको गौड इति (५५ तमः)। परस्तु गौडपादक (६५ तमः) इति पठितः।[१] सिद्धान्तमत्र स्वयं सन्त एवोन्नयन्तु।

---

## §११। आगमशास्त्रस्य प्रभवः।

कुतो नु खलु प्राभवदागमशास्त्रम्। किं नाम मूलमेतस्येति निसर्गत एव बुभुत्सन्ते पुमांसः। अत्रायं प्रभवस्त्रिविधः। प्रथमस्तावद्वैदिकः। यो नाम मन्त्रब्राह्मणात्मकाद्वेदादागतो यत्रान्तर्भवन्त्युपनिषदः। द्वितीय आगमिको यः खल्वस्माद्वेदान्तागमादागतः। तृतीयस्तु सौगतः सुगतनयसम्बद्ध इत्यर्थः।

तत्र प्रथमे भूयस्तयोपनिषद एव दृश्यन्ते। मन्त्रौ तु द्वावेव (३. २४ क-ख, ग)। इदं त्वत्र चिन्तनीयम्। यत्खलु द्वयोरपि स्थानयोर्विद्यते मन्त्रे चोपनिषदि च तत्र दुःशकं निश्चेतुं किं तन्मन्त्रमुपनिषदं वोभयमेव वा संबध्नातीति। तद्यथा "इन्द्रो मायाभि" (३. २४) रित्युभयत्रैव (ऋ. स. ६. ४७. १८ ; बृ. उ. ११. ५. १०) दृश्यते। तत्र कथं नु निश्चेयं मन्त्रोऽयमनयोः प्रथमादेव न पुनर्द्वितीयादाकराद्गृहीत इति। एवम्[१] "अजायमानो बहुधे"त्युभयत्रैव (वा. स. ३१. १९ ; तै. आ. ३. १३. १)। एवमेवान्यत्रापि (२. २४)। बहु खल्ववगम्यते कालस्य मन्त्रब्राह्मणयोः (अ. स. १९. ५३. ५४ ; श्वे. उ. १. २, ४. १)। तत्र किमाचार्यस्तयोरेकमपरं वोभयमेव वा चित्ते निधाय तथोवोचदिति दुर्वचम्।

---

५। पाठोऽयं श्रीराजेन्द्रनाथघोषकृते अद्वैतवादे (वङ्गवाङ्मये पृ. २२७)। श्रीगोपीनाथकविराजस्तु (पूर्वस्मिन्नेव ग्रन्थे पृ. ९३) गौडपाद इत्येव पठति।

१। ३. २४।

किञ्च। आ न न्द गि रि राह (२. २४) अस्मोकाः कालविदो नाम ज्योतिर्विद इति। भवेदेतदेवमा चा र्ये ण त एवेह परामृश्यन्ते तेषां कश्चिद् ग्रन्थो वा मतमात्रं वा तेषां किञ्चित्। दुर्निश्चयस्त्वयं प्रश्नः सर्वथा।

इह वृत्तौ तस्य तस्य विषयस्य वैशद्यसम्पादनाय परामृष्टमनेकं प्रमाणम्। कतमत्पुनस्तत्र तत्र वस्तुतोऽभिप्रेतमा चा र्ये णे ति दुर्वचम्। भवेदेतत्क्वचित्कदाचिद्वृत्तिकारोऽयं भिन्नमेव किञ्चित्परामृशति भिन्नं चाभिप्रैति गौ ड पा दः। यथा पादचिन्तायाम्(२. २१)। किञ्च। यदिहोक्तं न खलु न तस्मादन्यदपि किञ्चित्सम्भवतीति।

इहोद्धृतेषु ग्रन्थेषु भ ग व द्गी ता (१३. २२)[2] ब्र ह्म सू त्रं (२. ३. १६—३२)[3] च प्रदर्शिते। न पुनरेतेन शक्नोति कश्चिन्निश्चेतुं द्वावपीमौ ग्रन्थौ वस्तुतोऽपि परामृशदत्र गौ ड पा द इति। यत्पुनराभ्यां कृतं किमपि वैशद्यं प्रकृतस्य वस्तुनो न तदुपलभ्यते। एतत्त्वन्यत्।

एवमेव दृश्येरन् काश्चन लघूपनिषदः समुद्धृता[4] वृत्तौ परिष्काराय तस्य तस्य विषयस्य। ताश्च काश्चनोपोनषद आ ग म शा स्त्रा त् प्रागासन्न वेति संशयः। काश्चित्त्वेतासु[5] श ङ्क रो ऽपि ब्र ह्म सू त्र- (३. २. २८ ; ४. २०) भाष्य उद्धरति।

पञ्चसु स्थानेषु (३. १२, २४, २५, २६, ३६) औपनिषदानि वचांसि परामृष्टानि। अन्यत्र तु (३. ११, २३) तैत्तिरीयशब्दः श्रुतिशब्दश्चोक्तौ। अपरस्मिंस्तु (२. ३) स्पष्टमेव किञ्चिद् बृ ह दा र ण्य क व च नं (४. ३. १०) "श्रूयत" इति शब्देन परामृश्यते। एवमेवान्यत्र (२. ५) तस्या एवोपनिषदः किञ्चिद्वचनं (बृ. उ ४. ३. १४) स्पष्टमेव "आहुर्मनीषिण" इत्युदाहृतं न पुनः श्रुतिरिति श्रूयत इति वा। यथा व्यवहारः शिष्टानाम्। इतरत्रापि (३. १२, १३, १५) स्फुटमुपनिषद उदाह्रियन्ते। अन्यत्रापि त्रिषु स्थानेषु (१. २, ८, ६) उपनिषद उद्ध्रियन्त इति प्रतीयते।

२। २. २२।

३। २. २३।

४। यथा अव. उप. ८ ; आश्र मोप. ४ ; आत्मोप. ३१ ; जाबालोप. ६ ; त्रिपुरा. ९. १०।

५। यथा ब्रह्मबिन्दु०, जाबाल.

एतत्पुनर्द्रष्टव्यं नोपनिषत्का प्य ला त शा न्ता वुदाहृता। नैतद्गतं वा किमप्युपलभ्यते तत्र। आगमिके नाम द्वितीये तु प्रभवे (§६आ ग म-शा स्त्र स्य नामेत्यस्मिन्परिच्छेदे) यदुक्तं तद्द्रष्टव्यम्। प्रतीयत एतस्मात्केचिदागमा आचार्या वोदाहृताः परामृष्टा वा गौ ड पा दे न नूनमभूवन्प्रसिद्धास्तत्समये। कालेन तु क्रमात्ते स्मृतिपथमतिक्रान्ताः।

तृतीयस्तु प्रभवः सौगत इत्युक्तं प्राक्। तद्विशेषार्थमवेक्षणीया वृत्तिर्मदीया (२. ३१, ३२, ३५)। तुल ३८, ४४, ४६)। भूयस्यश्च कारिका अ ला त शा न्तौ।

---

§१२। उपनिषत्सु बृ ह दा र ण्य क मेव मुख्यः प्रभव आ ग म शा स्त्र स्य।

दृष्टं पूर्वस्मिन्परिच्छेदे (§११) बहुषु विविधेषु च प्रभवेष्वा-ग म शा स्त्र स्य बृ ह दा र ण्य कमापततीति। अस्मिंस्तु परिच्छेदे (§१२) बृ ह दा र ण्य का ग म शा स्त्र यो र न्यो न्यं सम्पर्को भूयः परीक्षिष्यते। द्रक्ष्यते च बृ ह दा र ण्य क मेव मुख्यः प्रभव आ ग म शा स्त्र स्ये ति।

अतिस्फुटमेतन्नः पुरःस्थितादा ग म शा स्त्रा द् गौ ड पा दे नाति-प्रभूतमुद्धृतं बृ ह दा र ण्य का दिति। किं बहुना। प्रथमं प्रकरणं तस्मिन्नेव प्रतिष्ठितमिति वक्तव्यम्। संक्षेप इवायं सार इव वायं बृ ह-दा र ण्य क स्येति[१] कश्चिन्निर्विशङ्कं मनुयात्। इह त्वधिकतया कृतं किञ्चिद्विवरणं सङ्कलितं च प्रणवोपासनम्। स खल्वाचार्यो गौ ड पा दः प्रथमेन प्रकरणेना ग मे न तदंशस्य बृ ह दा र ण्य क स्य सर्वथाप्यनु-पेक्षणीयं विवरणमेव किञ्चिद् व्यरचयत्। नह्येतेन विना तदर्थः शक्योऽवबोद्धुम्।

इदमुक्तमारम्भ एवा ग म शा स्त्र स्य विश्वादिरूपेणैक एव पुरुषस्त्रिधा स्थित इति (१. १—४. १०)। अयमेवार्थो भिन्नैः पदैः

१। बृ. उ. ४. २—३।

प्रकटितो बृहदारण्यके (४. २. ३) यथातिस्फुटमाह शङ्कर-स्तत्रैव (४. ३. १)।[७]

इह दृश्यते (१. १—४. १०) एक एव पुरुषः (ब्रह्मात्मा वा, मा. उ. २) अवस्थाभेदाद्विश्वस्तैजसः प्राज्ञस्तुर्यश्चेति (१. १५) कथ्यते (१. १५)। प्राज्ञं (बृ. उ. ४. ३. २१. ३५) विना नान्यः कश्चिदेतेषु लभ्यते बृहदारण्यके। ५

इह हि विश्वार्थमिन्धशब्दो दृश्यते। इन्धो नाम दीप्तिगुणकः।[८] इन्ध एव च इन्द्रः। ब्रुवन्ति ह्यौपनिषदा "एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष" इति। किं नु खलु पुरुष इन्ध इत्युच्यत इत्याह बृहदारण्यकभाष्य-वार्त्तिके (४. २. ७३) सुरेश्वरः— १०

"इध्यतेऽहर्निशं यस्मादिन्धनामा ततः पुमान्" ॥ इति

स्थूलार्थभोक्तृत्वेन सदा जागरे स्फूर्त्तेः सः तादृश इत्यभिप्रेत्यत्रानन्दगिरिः। शङ्करस्तु स्वभाष्ये वैश्वानर इति (बृ. उ. ४. २. २-४, पृपृ. ५१३-५१६) इन्ध इति (बृ. उ. ४. ३. १, पृ. ५१६) चोभावपि शब्दौ प्रयुनक्ति। न पुनः क्वचिद्विश्वशब्दम्। १५

---

७। पृ. ५१९। "अत्र च जाग्रत्स्वप्नसुषुप्ततुरीयाण्युपन्यस्तान्यन्यप्रसङ्गेनेन्धः (४. २. २)। प्रविविक्ताहारतरः (४. २. ३)। सर्वे प्राणाः (४. २. ४); स एष नेति नेतीति (४. २. ४)। इदानीं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरतोऽधिगमः कर्तव्यः।" अत्र बृहदारण्यके ४. २ इत्येतस्य ४. ३ इत्येतस्य च ग्रन्थस्य शङ्करकृतं मिथःसम्बन्धप्रदर्शनं द्रष्टव्यम् (पृ ५१८)। "विज्ञानमानन्दं ब्रह्मेत्यवगतम्। तदेव पुनरिन्धसंज्ञः प्रविविक्ताहारस्ततोऽन्तर्हृदये लिङ्गात्मा प्रविविक्ताहारतरस्ततः परेण जगदात्मा।" द्र. ४. ३. १ (पृ ५१९)। २०

८। "एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव। परोक्षप्रिया इव हि देवा प्रत्यक्षद्विषः।" बृ. उ. ४. २. २। २५

९। यावदहं स्मरामीह तन्नाप्यम्। यद्देवाः परोक्षप्रियाः प्रत्यक्षद्विषश्चेति तत्सुप्रसिद्धं ब्राह्मणेषु (बृ. उ. ४. २. २)। सुरेश्वरो (बृ. भा. वा ४ २. ३७, पृ. १३६९) ऽत्र लौकिकं व्यवहारं प्रदर्शयंस्तमर्थमित्थं समर्थयते—

"प्रत्यक्षनामग्रहणं प्रद्विषन्ति जगत्यपि।
श्रेयांसोऽमुकमिश्रास्त इत्युक्तिं कामयन्ति च ॥" इति। ३०

न श्रेयांस इतरैर्नाम्नामन्त्रयितव्याः सम्भाष्या वेति शिष्टाचारः।

इदं तु प्रतीयते बृहदारण्यकादेव (४. २. ३, ३. ११. ३५) यद्यपरोऽपि कश्चिच्छब्दस्तस्मिन्नेवार्थे (विश्वार्थे) प्रयुज्येतात्र तर्हि स खलु शारीर एव। गौडपादस्तु नैतदभ्युपजगाम। विश्व इत्यभिनवमेव तु नाम किञ्चित्तेन प्रयुक्तमर्थप्रकर्षाविष्करणसमर्थतरं भविष्यतीति मन्वानेनेव। मा. उ. कारेण तु कदाचित्तेनैवाभिप्रायेण वैश्वानर इति प्रयुक्तः।

एषु चतुर्षु नामसु तुर्यस्तुरीयो वा स्फुटमेव न किमपि वस्तुतो नाम। किन्तु विश्वतैजसप्राज्ञेभ्यस्त्रिभ्योऽनन्तरमस्य पाठादयं तथा कथ्यते। चतुर्थ इति इति तदर्थः। बृहदारण्यक इन्ध इन्द्रश्च नामनी एव।[10] तैजसप्राज्ञौ तु मूलतो विशेषणभूतौ पश्चात्तु नामनी संवृत्ते। कदाचित् तैजसार्थे लिङ्गात्मेति पठितः। यथा शङ्करेण बृहदारण्यकभाष्ये (४. ३. ३, पृ. ५१५ ; ४. ३. १. पृ. ५१८)। प्राज्ञार्थं सुरेश्वरेण सुषुप्तशब्दः प्रयुक्तः (बृ. भा. वा. ४. ३. ५, पृ. १३७७)। अयं च शब्दः सुस्पष्टमवस्थाविशेषापन्नं पुरुषं बोधयति।

(क) आगमशास्त्रस्य प्रथमप्रकरणे बृहदारण्यके च केचिद्वचनप्रयोगा गाढमन्योन्यं संवदन्तीति दृश्यते। यथाह गौडपादो विश्वमधिकृत्य (१. २) "दक्षिणाक्षिमुखे विश्वः[11]" इति। उपनिषदि च (बृ. उ. ४. २. २) "इन्धो ह नामैष योऽयं दक्षिणेऽक्षन् पुरुषः (= बृ. उ. २. ३. ५ ; ४. २. २ ; ५. २. ४)।[12]

---

१०। बृ. उ. २. ६. ८।

११। अत्र माण्डूक्योपनिषदि तु किञ्चिदपि नास्ति।

१२। अक्षिणि विशेषेण तु दक्षिणेऽक्षिणि पुरुषो दृश्यत इति प्राय औपनिषदेषु वचनेषु। पश्यतु कश्चिदन्यत्रापि (छा उ. ४. १५. १; ७. ७. ४ ; कौ. उ. ४. २. १७ ; मै. उ. ७. ११। पुरुषोऽयं शारीर आत्मेत्यभिप्रायः। स्पष्टं चेदं गौडपादस्य मुखशब्दप्रयोगात् ("दक्षिणाक्षिमुख" इति १. १)। किमिह दक्षिणाक्षीति (आ. शा. १. १; बृ उ. २. ३. ५; ४. २. २; ५ २. ४) कथ्यते न पुनः सामान्येनाक्षीति। सुरेश्वरो मन्यते (बृ भा. वा. ५. २. ३७-३८ ; पृ. १३६५) तादृशात्स्मृतिबलाद्वामाद्दक्षिणस्याङ्गस्योत्कर्षवशाद्वा तथोक्तिरिति।

(ख) "आकाशे च हृदि प्राज्ञ" इत्या ग म शा स्त्रे ( १. २ )। बृ ह दा र ण्य केऽपि द्रष्टव्यम् ( ४. २. ३, ४. २२ )। तुल. तै. उ. १. ६. १।

(ग) "प्रविविक्तभुगि" त्या ग म शा स्त्र म् (१. २)। अत्र च द्रष्टव्यं बृ ह दा र ण्य क म् (४. २. ३)। ५

(घ) पुरुषस्य तृतीयामवस्थां सुषुप्तं चाधिकृ"त्यानन्द" इति "आनन्दभुगिति" वा ग म शा स्त्रे ( १-३, ४ )। बृ ह दा र ण्य के त्वधीयते ( ४. ३. ३२ ) "एषोऽस्य परम आनन्द" इति। द्र. तत्रैव ४. ३. ३३।[13]

यथास्मि न्बृ ह दा र ण्य के तथा छा न्दो ग्ये ऽ पि ( ८. ७—१२) १० प्रजापतिकृत इन्द्रविरोचनोपदेशे सैव पुरुषचिन्ता दृश्यते। तानि तु विश्वादीनि त्रीणि नामानि नात्र दृश्यन्ते। शा ङ्क रः पुनः स्वयमन्यान्येव त्रीणि नामानि प्रयुनक्ति। यथा विश्वार्थ म क्षि पु रु ष इति ( छा. उ. ८. ७. ४ ) छा या पु रु ष इति वा ( ८. १०. ४ ) छा या त्मे ति वा ( ८. ७. ४, ८. १, २ )[14]। तैं ज सा र्थं स पठति १५ स्व प्ना त्मे ति ( छा. उ. ८. ११. १-२ )। प्रा ज्ञा र्थं तु सु षु प्त स्थ इति ( ८. ११. १-२ )।[15] यः पुनस्तुर्यस्तदर्थमुपनिषदि ( ८. १२. ३ ) युक्तमेव उ त्त म पु रु ष शब्दः पठ्यते।[16]

सेयं पुरुषचिन्ता छा न्दो ग्ये बृ ह दा र ण्य का दर्वाचीनेत्यनुक्तापि प्रकाशते। २०

---

१३। "यत्र सुप्तो न किञ्चने"त्यादि वाक्यं ( मा. उ. ५, पृ. २२४ ) बृ ह दा र ण्य का दे व ( ४. ३. १९ ) गृहीतमिति प्राक् प्रदर्शितम्। द्र. अवतरणिका।

१४। अयं च शब्दः शा ङ्क रे ण ब्र ह्म सू त्र-भाष्येऽपि ( १. २. १३ ) प्रयुक्तः। कस्मिंश्चित्तु ( १. ३. ४८ ) सूत्रे तेन शा री र इत्यपि पदं प्रयुक्तम्। २५

१५। इदं तावदवधेयम्। शा ङ्क रे ण बृ. आ. भाष्ये वि श्वा दी नि त्रीण्यपि नामानि गृहीतानि। छा उ. भाष्ये तु न तेन तथा कृतम्। इदं च चिन्तयितव्यं स खल्वाचार्यस्तथातिमात्रप्रियश्रुत्युद्धरणोऽपि बृ. आ भाष्ये सत्य-व्यतिस्फुटे प्रसङ्गे न छा. उ. श्रुतिमुद्धरति। न चेह छा. उ. भाष्ये बृ उ. श्रुतिम्। ३०

१६। भ. गी. १५—१७-१८ :

अन्यत्र। यद्यपि छान्दोग्यं बृहदारण्यकमिवास्मदागमशास्त्रात्पूर्वं तथापि न तत्रास्ति किञ्चिद्येनावगम्येत छान्दोग्यमागमशास्त्रकारेणोद्धृतमिति। बृहदारण्यकं तु प्रभूतमुद्धृतमित्यपश्याम प्राक्।

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥"

शङ्करोऽत्र न श्रुतिमुद्धरति। श्रीधरस्तु तत्करोति (बृ. उ. ५. ६ १— "स वा अयमात्मेति"। न त्वेषात्र तथा युक्तरूपा प्रतिभाति।

किं निमित्तं पुनर्विश्वोऽक्षिण दक्षिणेऽक्षिणि वा दृश्यत इत्येषोऽक्षिपुरुष इति छायापुरुष इति छायात्मेति वोच्यत इत्यवगन्तव्यम्। तच्चैवम्। परमात्मनोऽवगमो नामातिमात्रं दुष्करः पुरुषेण बहिर्विषयासक्तेन। अरुन्धतीदर्शनन्यायेन तु शक्यत एतत्कर्तुं शनैः शनैः। तद्यथाह छान्दोग्यभाष्ये (८. १२. ६) शङ्करः। "आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यन्तबाह्यविषयासक्तचेतसोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कञ्चित्प्रत्यक्षमादौ दर्शयति पश्यामुमेष चन्द्र इति। ततोऽन्यं ततोऽन्यं गिरिमूर्धानं च चन्द्रसमीपस्थमेष चन्द्र इति। ततोऽसौ चन्द्रं पश्यतीति। एवमेव पुरुषो दुरवगममपि सूक्ष्मं परमात्मानमनस्यायासमवगच्छति शनैः शनैः। प्रथमं त्वतिसूक्ष्मत्वादुक्तोऽपि परमात्मा न शक्यो ग्रहीतुम्। अत एवादौ तत्र तत्र "य एषोऽन्तरक्षिणि पुरुषो दृश्यत" इति (छा. उ. १ ७. ५, ४. १५ १. ८. ७. ४. बृ उ. २. ३. ५; "योऽयं दक्षिणेऽक्षन्पुरुष" इति) शारीर एवात्मोपदिश्यते। पश्चात्त्वशारीरः।

अथ कथं नु खलु शारीर आत्मावगन्तव्यः। कः पुनरुपायोऽस्यात्युत्कृष्टः। प्रत्युत्तरयन्त्यृषयः। भद्रं भोः। पश्य तावन्मे दक्षिणमक्षि। किं खलु पश्यस्यत्र। नूनं स आत्मानमेव स्वस्य दक्षिणेऽक्षिणि पश्येत्प्रतिबिम्बितम्। तं च छायात्मानमुद्दिश्य ऋषिर्ब्रूयाद् अत्रायमात्मेति। अयमेवार्थश्छान्दोग्ये (८. ७—१२) प्रजापतिनेन्द्रविरोचनाभ्यां विस्तरशः प्रतिपादितः।

अत्र चायमात्मा न केवलमक्षण्येव अपित्वादर्शेऽपि अप्स्वपि उदशरावेऽपि। शङ्करो युक्तमेवाह (छा. उ. ८. ७. ४) चक्षुरादिष्वपि स आत्मा दृश्यत इति। इ. कौ. उ. ४. २, ११ १७-१८।

उपनिषत्सु बृहदारण्यकमेव मुख्यः प्रभव आगमशास्त्रस्येत्ययमर्थोऽन्यथापि शक्यः प्रतिपादयितुम्। अयमात्मा ब्रह्म पुरुषो वा चतुष्पादितीयं चिन्ता न कथञ्चिदभिनवा। तथाहीयमृग्वेदेऽपि (१०. ९०. ३)[17] छान्दोग्ये (३. १८ १) ऽपि च दृश्यते।[18]

पादास्त्वेते सर्वे न सर्वत्र समानाः। भिद्यन्ते हि ते मिथः। तद्यथा प्रथमः पादस्तावत् "विश्वा भूतानि" (ऋ. स. १०. ९०. ३)। ततश्च "त्रिपादस्यामृतं दिवीति"। छान्दोग्ये (४. ५-८) तु चतुष्कलः पुरुषः प्रकाशवानिति आयतनवानिति च। अन्यत्र च (छा. उ. ३. १८. १-६) ब्रह्मणः अध्यात्ममिति पादा अधिदैवतमिति चान्यथाभिहितम्। पुनरप्यन्यत्र "वागेव ब्रह्मणश्चतुर्थः पाद" इत्यादि (छा. उ. ३. १८. ३)। एवं वाक् प्राणश्चक्षुः श्रोत्रमग्निर्वायुरादित्यो दिक् च पादा इति वर्ण्यते। यथा वैतद्भवतु। यदिद मागमशास्त्रे पादव्यवस्थापनं तदति रमणीयं गम्भीरार्थं बहुमतं च।

एते खलु चत्वारः पादा वस्तुतोऽपादा अपि पादा इव। ते खल्वेकस्यैवात्मनश्चतस्रोऽवस्थाः। अवस्था एव च भिद्यन्ते न पुनरात्मा। तासां चतसृणामवस्थानामाद्यास्तिस्रो जाग्रत्स्वप्नसुषुप्तरूपाः। अन्तिमा तु तुरीयेत्युच्यते। चतुर्थीति तदर्थः। स चात्मा तास्ववस्थासु यथाक्रमं विश्वो (वैश्वानरो वा) तैजसः प्राज्ञस्तुरीयश्चेति प्रथते।

इदमिह विशेषतो द्रष्टव्यम्। यद्यप्यात्मनश्चतुष्पात्त्वमतिस्पष्टं माण्डूक्योपनिषदि यथा प्राग् दृष्टं तथापि नैतदागमशास्त्रे। किं बहुना। चतुष्पाच्छब्दोऽपि तदर्थकोऽपरो वा कश्चिच्छब्दो न दृश्येत तत्र। प्रथमप्रकरणे पञ्चमीं कारिकां यावत्पुरुषस्य विश्व-तैजसप्राज्ञरूपेण त्रिधा व्यवस्थानं दृष्टम्। "एक एव त्रिधा स्थित"(१. १-२) इत्यप्युक्तम्। उपरिष्टादपीदं (१. ३-५) विवृतम्। अतो नेदं मन्तव्यं चतुष्पात्त्वचिन्तनं नाम नासीत्कर्तुरागमशास्त्रस्येति। व्यक्तं हीदं तत्र (१. १०-१५)।[20]

---

१७। आ. शा. २. २१।

१८। अत्र लघूपनिषत्सु इ. ब्र. उ. २ ("चतुष्पादं ब्रह्म विभाति"; नृ. पू. ता. उ ५. १; नृ. उ. ३. १; रा. उ. ता, उ.) "सोऽयमात्मा चतुष्पादिति।"

१९। न पुनर्वैश्वानरो यथा मा. उ. ३।

२०। "एक एव त्रिधा स्थितः।" आ. शा. १. १।

अत्र खलु (१. १०, ११, १२, १३, १५) मा. उ प नि ष द् चतुर्थार्थे तुर्यशब्दोऽसकृद्दृश्यते। इह मा ण्डू क्यो प नि ष दा ग म शा स्त्र यो स्तत्खलु स्तोकमनैक्यं व्यनक्तीवा ग म शा स्त्र स्य मूलं न खलु मा ण्डू क्यो प नि ष द् अपि तु बृ. उपनिषदिति। अन्यथा तु चतुष्पात्त्ववर्णनं स्पष्टतरमभविष्यत्। बृ. उपनिषत्काले तु तच्चिन्तनं न तथा पर्यपुष्यदितीव प्रतीयते।[21]

इदमन्यदिह विमृश्यमस्त्युतम्। मा ण्डू क्यो प नि ष दा ग म शा स्त्र यो-रारम्भ एव कश्चिद्भेदो दृश्यते। मा ण्डू क्यो प नि ष दि तावदादौ (१-२) तावतातिप्रकर्षेण स्तुत ओङ्कारः। प्रदर्शितश्च तदभेदो ब्रह्मण आत्मनो वेति "सर्वं ह्येतद्ब्रह्मे"त्यादिना (२)। आ ग म शास्त्रे त्वत्र किञ्चिदपि तद्विषयकं नास्ति। एतद्धि (आ. शा. १. १) सपद्येव "एक एव त्रिधा स्थित" इति विश्वतैजसप्राज्ञरूपेणैकमेव वर्णयितुं प्रवृत्तम्। (१. १-५)। ततश्चाह (१. १०) तुर्यम्। इहा ग म-शा स्त्रे प्रागूनविंश्याः कारिकाया नेषदपि किञ्चिदधिगम्येतोङ्कारस्य। युक्तं चैतद्यत्प्रथममेकस्य त्रिधा स्थितिः पश्चाच्चोङ्कारवर्णनम्। अयमेव हि क्रमो युक्तश्च न्याय्यश्च। तथा हि। द्वयं खल्वस्ति। उपायश्चोपेयं च। तत्र प्रथममुपेयमुच्यते। ततश्चोपायः। प्रकृते तावदुपेय आत्मा। उपायस्त्वोङ्कारः। ओङ्कारध्यानेनैव हि शोकमत्येति पुरुषः। आहास्म दा चा र्यः (१. २८)—

"सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचतीति"।

कृतमिद मा ग म शास्त्रे। मा ण्डू क्यो प नि ष दि तु तद्व्यतिक्रमः। तथा ह्यत्र प्रथममुपाय ओङ्कारस्ततश्च क्रमेणोपेय (३—७) आत्मा। पुनरप्युक्त एव पश्चात् (१२)।

अतिमात्रमिव प्राभवन्काश्चनो प नि ष दः[22] कर्त्तुं मा ण्डू क्यो प-नि ष दः। प्रियप्रणवोपासनश्च स बभूवातिमात्रमिव। तदेव चाभवदिव तस्य तादृशक्रमपरिवर्त्तनप्रवृत्तिकारणम्। नास्ति प्रणवोपासनं बृ ह दा-र ण्य के प्रभवभूत आ ग म शा स्त्र स्य। अत एव नास्य मुख्ये विषये मा. उपनिषदीव तथा प्रणवचिन्ता।

२१। एतच्च सूचयत्या ग म शा स्त्रं मा ण्डू क्यो प नि ष दः पूर्व-मवर्त्ततेति।

२२। यथा छा. उ. १. १. १; तै. उ. १. ८-१; एवमादयः।

अवसिता चिन्ता तावदा ग म स्य। अथ वै त थ्य स्य चिन्तायां पश्याम कश्च कीदृशश्चास्य सम्बन्धो बृ ह दा र ण्य के ने ति। युक्तमेतदतिस्पष्टं च यदिदं वै त थ्य मित्यभिधीयत इति। इदमेव हि परीक्षितमिह गौ ड़ पा दे न। तच्च कुर्वता तेन बृ ह दा र ण्य क मेव (४. ३) समाश्रितम्। उक्तं ह्याचार्येण (२. ५)— ५

"स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः।

भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥" इति।

अत्र प्रथमार्धो बृ ह दा र ण्य कं (४. ३. १४) परामृशति "अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति।" १०

न केवलं तत्तद्वचनेन जाग्रत्स्वप्नयोरभेद एवाचार्येण दर्शितः। अपि तु युक्त्यापि सोऽर्थः समर्थितः। स्पष्टं चैतद्भविष्यति तस्य यः कश्चित्सहैनया वृत्त्येद मा ग म शा स्त्रं बृ. उ. प नि ष दं च (४. ३) द्रक्ष्यति। प्रसङ्गादेतच्च वक्तव्यमस्मि न्ना ग म शा स्त्र एव[२३] बृ ह दा र ण्यकैकदेशस्य संक्षिप्तमपि सर्वप्राचीनं व्याख्यानमधिगम्यत इति। १५

अ द्वै ते ऽपि बृ ह दा र ण्य कं षट्कृत्वः[२४] परामृश्यते।

एवं च शक्यते निर्बाधं सिद्धान्तयितुं बृ ह दा र ण्य क मेव मुख्यः प्रभवोऽस्माकमा ग म शा स्त्र स्येति॥

---

## §१३। श ङ्क र पूर्वे वेदान्ताचार्यास्तत्कृतयश्च। २०

अस्ति तावद्वेदान्तस्य श्रुतिप्रस्थानं स्मृतिप्रस्थानं च। कृतमिह तच्चिन्तया। स्यात्सुकरमस्माभिरनुशीलनमिति वेदान्तस्तावद्द्विधा विभज्यते श ङ्क र पूर्वः श ङ्क रो त्त रश्च। तदनुगमाच्च तदाचार्या अपि द्विविधाः श ङ्क र पूर्वे श ङ्क रो त्त रे च। तत्राद्येषु सुप्रसिद्धो भगवान्बा-द रा य णः कर्ता ब्र ह्म सू त्रा णा मु प नि ष न्मूलकानां सू त्र प्रस्था-नाधारभूतानाम्। २५

---

२३। वै त थ्ये।

२४। आ. शा ३. १२, १३, १९, २४, २९ (ई. उ. १२, १२, १४), २६।

यथोक्तं पूर्वं निसर्ग एवायं पुंसां तेषां मतानि नैकैः कारणैरन्योन्यं भिद्यन्त इति। अत एवोदिते होमोऽनुदितेऽपि होम इत्युभयथापि होमो दृश्यते ब्राह्मणेषु। दृश्यते च तत्रैव तदर्थो विचारः समर्थयमानः पक्षं द्वितीयं (ऐ. ब्रा. २५. ५-६ ; तै. ब्रा. २. १. २-८ ; तुल. २. १. २. १२)। सन्ति च कानिचित्कर्माणि विहितानि यानि नादृत्यानीत्युच्यते। सन्ति चान्यानि बहूनि कृत्यानि यानि मिथो विरुद्धानि सन्दिग्धानि वा। अत एवैतद्दोषपरिजिहीर्षया यदाह मी मां सा द र्श न का रः ('षोडशिग्रहणप्रसङ्गे', १०. ८. ६) तद्द्रष्टव्यम्।

यथा कर्मण्येवं ज्ञानेऽप्यन्योन्यमनेकत्रातिमात्रं भिद्यन्त आचार्याः। तद्यथैकत्र (तै. उ. २. ७. १, द्र. छा. उ. ३. १९. १) "असद्वा इदमग्र आसीद्" इति दृश्यते। अन्यत्र तु (ऐ. आ. २. ४. १) श्रूयत "आत्मा वा इदमेक एवाग्र आसीद्"इति। अपरत्र पुनस्ततोऽप्यन्यच्छृणुमो येनासद्वादं निराकृत्य स्पष्टया वाचा युक्त्या च सद्वादः प्रतिष्ठाप्यते (छा. उ. ६. २. १-२) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहुरसदेवेदमग्र आसीत्। कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति।

व्यक्तमिदमेतस्मान्नैव नः सर्वाः श्रुतय ऋषयो वैकमेवार्थं ब्रुवन्तीति।[1] ईदृशे च व्यतिकरे कतरः पक्षो हीयेत कतरो वोपादीयेतेति नूनं दुरवगमम्। श्रुतित्वाद्द्वयोरपि हि प्रामाण्यं समानम्[2]। अत एकं चेज्जहास्यन्यदपि जह्याः। एकं वा चेदादत्से परमप्याददीथाः। न ह्युभयमपि कर्तुमर्हसि। तथा च कुर्वन्न त्वं कमपि सिद्धान्तमुपेयाः। तदभावाच्च निरर्थकः स्यादुपदेशः कर्मणो ज्ञानस्य वा। किमेतेनेति। न ह्यनेन कश्चित्काञ्चित्सिद्धिमुपेयात्। अत एव यद्यपि ते केचित्प्राञ्च ऋषयः क्वचित्क्वचिदप्यनेकदर्शना बभुवुरर्वाचीनास्त्वाचार्या यथा वा तथा वा स्वोन्नीताभियुक्तिभिस्तं तं

१। द्रष्टव्यं सह पु ण्य रा ज स्य प्र का शे न भ र्तृ ह रे र्वा क्य प दी य म् (१. ८)—

"तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः।
एकत्विनां द्वैतिनां च प्रवादा बहुधा स्मृताः॥ इति

२। युक्तमुक्तं श ङ्क रे ण (ब्र. सू. ३. २. १९) "नहि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुं प्रमाणत्वाविशेषा"दिति।

विरोधमपाकृत्य सर्वास्तास्तादृशीर्वाचः[३] समनुगमयामासुः प्रदर्शयामासुश्च सिद्धान्तमुपादेयम्। उदपद्यत च तेन मीमांसा। तदिदं मूलमेकतः कर्मणि मीमांसासूत्राणामन्यतश्च ज्ञाने ब्रह्मसूत्राणाम्।[४]

सुविदितमिदं जैमिनिनेव मीमांसासूत्रं बादरायणेन विरचितं ब्रह्मसूत्रमिति। अस्ति तु कारणं येनावगच्छामोऽन्येऽप्यासन् कर्त्तारो मीमांसासूत्राणां ब्रह्मसूत्राणां च।[५] न तु केवलं तावेव द्वाविति। तद्यथासीदाचार्यो बादरिः। स खलु चतुष्कृत्वो मीमांसासूत्रेषु (३. १. ३; ६. १. २७; ८. ३. ६; ९. २. ३३) चतुष्कृत्वश्च ब्रह्मसूत्रेषु (१. २. ३०; ३ १ ११; ४. ३. ७; ४. ४. १०) पठ्यते। एतेन प्रतीयेत एषोऽप्यासीत्कश्चित्तत्सूत्रकार इति। न पुनरेष निश्चयस्तावतैव युज्यते। स्यादेतत्कर्मणि ब्रह्मणि

३। ताश्च वाचो न केवलं विरुद्धा अपि त्वस्पष्टा अपि सन्दिग्धा अपि।

४। अत्रेदं विमर्शनीयम्। दर्शिता विविधा न्याया ब्रह्मसूत्रेषु मीमांसासूत्रेषु च। अपि नाम तावतैव शक्यमेतद्वक्तुं सर्वथाप्यनुसरता पुंसा सर्वत्र तांस्तान्न्यायानधिगम्यते सत्योऽर्थो यः खलु मीमांसनीयो न्यायविदा। स च नाम सत्योऽर्थोऽत्र मन्तव्यो योऽभिप्रेतः स्वयमृषिणा। अवितथमिदम् असच्छब्दः श्रुतौ क्वचिदव्याकृतार्थे अव्याकृतनामरूपार्थे वा प्रयुज्यत इति। यथा "असच्च सच्च परमे व्योमन्" इति (ऋ. स. १०. ५. ७)। अथवा "नासदासीन्नो सदासीत्तदानी"मिति (तत्रैव १० १२९ १)। ईदृशेषु स्थानेषु असन्नाकाशकुसुममिव निरुपाख्यमसत्' यद्यप्यन्यत्र तत्तथैव भवेत्। अथेह पूर्वोक्तं छान्दोग्यवचनं (६. २-१-२) चिन्तयन्नूनं कश्चिन्निश्चिनुयात्तस्मिन्खलु तैत्तिरीयवचने (३. २ ७) असच्छब्दो निरुपाख्यासद्वचन एवेति। अन्यथा न च्छान्दोग्यं (६. २. १-२) तत्तथातिस्पष्टं निरसिष्यत्। अर्वाचीनास्त्वाचार्या एतदप्यव्याकृतार्थं मन्यन्ते। अस्ति च तेषां तत्कारणम्। न पुनस्तदिह परीक्ष्यते। इह कश्चित्पृच्छेत्। भवेदेतदेवं तस्मिंस्तैत्तिरीयवचसि (बृ. बृ. उ. १. ४. ७— "तद्धेदं तर्ह्यव्याकृतमासीदि"ति) अस्तु तावदसच्छब्दोऽव्याकृतार्थ एव यथा मन्यते। भवांस्तु कथं निश्चिनोत्येतमेवार्थमभिप्रैति स्वयं स ऋषिरस्या उपनिषद इति। कथं नु वेत्ति भवान्निरुपाख्यमेवासत्स न विवक्षतीति। वयं त्वेतावदभ्युपगच्छेम' भवानिहाव्याकृतमर्थं मन्यते। स च स्यान्न वा स्यादिहष्टे ऋषिणेति विवदेरन् केचन। अलं तैः। नेष्ट इत्येव तु स्पष्टम्।

५। बिल्वलकरस्य वेदान्तदर्शनम्, पृ. १४०।

चाभवंस्तस्य कानिचिन्मतानि। तान्येव चोक्तानि तयोर्ग्रन्थयोरिति। मीमांसासूत्रकारो जैमिनि रेकादशकृत्व उद्दिष्टो ब्रह्मसूत्रेषु (१. २. २८, ३१, ३. ३१, ४. १८; ३. २ ४०; ४२; १८, ४०, ४. ३. १२, ४. ५, ११)। अत्रापि कश्चिन्मन्वीत जैमिनि ररचयद् ब्रह्मसूत्रमिति।[6] न पुनरिदमपि तावता शक्यं वक्तुं निश्चयात्। सुरेश्वरस्तु[7] दर्शयति वस्तुत एव तत्तथेति।

काशकृत्स्न आचार्यो धृतः सकृद् ब्रह्मसूत्रे (१. ४. २२)। तस्य च मीमांसा त्रिरुक्ता पतञ्जलिना महाभाष्ये[8]। इयं च मीमांसा कर्ममीमांसा ब्रह्ममीमांसा चेति द्वय्यपि भवेत्। अन्यतरा वा। तथा च सति ब्रह्ममीमांसैव सा भवेदिति सम्भवति। बादरायणो ब्रह्मसूत्रे परानपि कांश्चिदाचार्यानुद्धरति। यथा आत्रेयम् (३. ४. ४४)। आश्मरथ्यम् (१. २. २६, ४. २०)। कार्ष्णाजिनिम् (३. १. ६)[9] औडुलोमिं च।[10]

अथान्ये केचिद्बभूवुराचार्याः। तेषां केचित्पूर्वमपरे तु पश्चाच्छङ्कराचार्यस्य। एतेषां च केचिद् बादरायणस्य ब्रह्मसूत्रं केचिद् भगवद्गीतां केचिद्वैकामनेकां वोपनिषदं विचचर्चिरे। केचिद्वा तेषु ग्रन्थेष्वेकविधं बहुविधं वा विवव्रुः वृत्तिं वा भाष्यं वा। शङ्करपूर्वो वेदान्त इह चिन्त्यत इति वक्ष्यमाणा एवाचार्या उद्दिश्यन्तेऽस्मिन्प्रसङ्गे।

यावदवगम्यते सर्वेष्वाचार्येषु भगवान् बौधायनः (प्रायस्तृतीये शकशतके) एव प्रथमः। विरचिता तेन "विस्तीर्णा वृत्तिः" समग्रस्य

६। जैमिनेः शारीरकसूत्रम् (गार्वे फेस्ट गावे, १९२७)।

७। नै. सि (हिरियन्न कृतं द्वितीयं संस्करणम्), पृ ५२।

८। कीलहरण-संस्करणे, द्वितीये खण्डे, पृ. २०६, २४९, ३२९।

९। अयं मीमांसासूत्रेऽपि (४. ३. १७, ६. ७. ३९) धृतः।

१०। भेदाभेदवादिनो निम्बार्कसम्प्रदायस्यायं ब्रह्मसूत्रवृत्तिकारः।

इहैते केचनाचार्या उत्कीर्त्यरन्। यथा काश्यपः (शाण्डिलसूत्रे २९)। असितः। देवलः। भृगुः। पराशरादयश्च। न पुनस्तेषां ब्रह्मसूत्रकर्तृत्वे मीमांसासूत्रकर्तृत्वे वा किमपि तथा प्रामाण्यतोऽवगम्यते। अतः कृतं तच्चिन्तया।

मीमांसाशास्त्रस्य। यथा ब्रह्मसूत्राणां[11] मीमांसासूत्राणां दैवतकाण्डस्य च। इयं च वृत्तिः कृतकोटि[12]रित्युच्यते। अथागच्छत्याचार्य उपवर्षः। स किल वृत्तिकर्ता मीमांसासूत्राणां ब्रह्मसूत्राणां च। इयं च वृत्तिर्वस्तुतो भाष्यं महाभाष्यं वा। अत एव स खलूपवर्षो महाभाष्यकारो वृत्तिकार इति चोभयथापि कथ्यते।

यथोक्तं रामानुजेन सन्ति (वेदार्थसंग्रहे, पृ. १५४) श्रीनिवासदासेन (यतीन्द्रमतदीपिका, पुना, पृ. २) च गुहदेवः कपर्दिकः (कपर्दी वा) भारुचिरपरे च वेदान्ताचार्या ग्रन्थकृतश्च तस्मिन्विषये। एतेषामाद्यौ द्वौ रामानुजेन शिष्टेषु परिगणितौ। एतेन प्रतीयते विशिष्टाद्वैतानुकूलमासीत्तयोर्मतमिति। भारुचिर्नाम कश्चिद्धर्मशास्त्रकारो दृश्यते।[13] अनन्यावेतौ न वेति नात्रगम्यते। यद्यनन्यौ तर्हि दशमशकशतकस्य द्वितीयेऽर्धे स उत्पेद इति वक्तव्यम्।

सिद्धित्रये (पृ. ५) केचन वैदान्तिका ज्ञायन्ते। तेष्वन्यतमो भर्तृहरिः। स न भिद्येत सुप्रसिद्धात्कर्त्तुर्वाक्यपदीयस्य।[14] यस्यायमारम्भश्लोकः (१. १)—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" इति।

स्पष्टमिह वेदान्तमतम्।

तेनैव सार्धं भर्तृमित्रोऽप्युक्तः। यथोक्तं न्यायरत्नाकरे (श्लोकवार्त्तिकम्, १. १०) रचितं तेन विवरणं मीमांसासूत्राणां कृतं च मीमांसाशास्त्रं नास्तिकम्। किमयं मीमांसको भर्तृमित्रो वैदान्तिकश्च भर्तृमित्रो मिथोऽनन्याविति न वयं विद्मः। न च विद्मः कामपि कृतिं वैदान्तिकस्य भर्तृमित्रस्य।

११। एतामेव वृत्तिमाश्रित्य ब्रह्मसूत्राणां प्रवृत्ता रामानुजस्य विशिष्टाद्वैतमतवृत्तिः।

१२। प्रपञ्चहृदयम् (त्रि. सं. ग्रन्थमाला, पृ. ३९)। द्र जर्नाल, आमेरिकान ओरिएण्टाल सोसाइटी, १९११, पृ. १७।

१३। विज्ञानेश्वरस्य मिताक्षरायाम् (याज्ञवल्क्यस्मृतिः १. १८, २. १२४) पराशरमाधवे च (२. २. ३, बम्बइ सं. ग्रन्थमाला, पृ. ५१०).

१४। शकसहस्रशतके पश्चाद्वा किञ्चित्।

ब्रह्मनन्दी (ब्रह्मनन्दी वा) परः कश्चिदाचार्यः। स च वाक्यकार इति छान्दोग्यवाक्यकार इति वा रामानुजेन स्वकीये ब्रह्मसूत्रभाष्ये मधुसूदनेन च संक्षेपशारीरकटीकायां (३. २१८-२२०) दर्शितम्। भास्करस्तावत्प्रदर्शयति (ब्र. सू. १. ४. २५.) ब्रह्मनन्दी परिणामवादमनुमन्यत इति। मधुसूदनस्तु पूर्वस्मिन्नेव ग्रन्थे तत्रैव विवक्ति परिणामवादः क्रमेण शुद्धाद्वैतवादं ततश्च विवर्त्तवादं प्रापयतीति।

अथागच्छति द्रविडाचार्यः। द्रमिडाचार्य इत्यपि स उच्यते (अष्टमशकशतके)। विशिष्टाद्वैतवाद एवास्यानुमतो यथोक्तं रामानुजेन श्रीभाष्ये। द्रविडाचार्यः किल ब्रह्मनन्दिकृतस्य वाक्यस्य भाष्यकारो बभूव (संक्षेपशारीरकम् ३. २१८-२२०)।[१५] स च ब्रह्मसूत्राणामपि भाष्यं चकार।

ब्रह्मदत्तो नाम बभूव कश्चिदपरो वेदान्ताचार्यः। प्रपञ्चहृदये दृश्यते तेनापि विरचितं किमपि भाष्यं ब्रह्मसूत्राणाम्। मतानि च कानिचित्तस्योपलभ्यन्ते तत्र तत्र।[१६] इदं तु किञ्चिदेवोपन्यस्यते। "'एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभाग्'इत्यायातम्। तेन जीवोऽप्यचिदिव जनिमानिति।"[१७] किञ्च न तत्त्वमस्यादिमहावाक्यजन्यं ज्ञान[१८]मपि तु तद्भावनैव विनाशयत्यविद्यामिति।[१९]

---

१५। "ब्रह्मनन्दिविरचितानां वाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्योऽपी"ति। आनन्दगिरिरपि छान्दोग्यभाष्यटीकायामाह द्रविडाचार्यश्छान्दोग्यभाष्यं रचयामास। (निर्णयसागरे तृतीयं संस्करणम्, पृ. १४३)। उपमितं च तेन भाष्येण शाङ्करभाष्यमल्पग्रन्थमन्यतेति। बृहदारण्यकभाष्यमप्यनेन कृतमित्याहानन्दगिरिः। द्र. श्रीकविराजगोपीनाथः (पूर्वत्रैव पृ. १५-१७)। आनन्दगिरिवचनादवसीयते (आ. शा. २. ३१) द्रविडाचार्य आगमविदित्यभवत्प्रसिद्ध इति।

१६। वेदान्तदेशिककृतस्य तत्त्वमुक्ताकलापस्य टीका सर्वार्थसिद्धिः, २. १६; नै. सि. १. ६७-६८; बृ उ. शाङ्करभाष्यम्, १. ४. ७।

१७। सर्वार्थसिद्धिः, २. १६।

१८। यथा शङ्करो मन्यते।

१९। द्र. हिरियन्नस्य नै. सि. (द्वितीयसंस्करणे) पृ. २३;

अथासीत्पूर्वं शङ्कराचार्यान्महान्वेदान्ताचार्यो भर्तृप्रपञ्चो नाम। अवगम्यते च वाक्यान्मधुसूदनस्य (संक्षेपशारीरकम्, १. ७) स खलु ब्रह्मसूत्राणि व्याचख्याविति।[२०]

आनन्दगिरिश्चाह बृ. उपनिषदः शाङ्करभाष्यटीकायां (पृ. २) शङ्करः किलैतस्या उपनिषदः काण्वशाखामाश्रित्य वृत्तिम् (भाष्यम्) अरचयत् भर्तृप्रपञ्चस्तु माध्यन्दिनशाखामाश्रित्य तामकरोदिति। बहुषु स्थानेष्वानन्दगिरिः सुरेश्वराचार्यस्य बृहदारण्यकवार्त्तिकं व्याचक्षाणो भर्तृप्रपञ्चं परामृशत्युद्धरति वा।[२१] ईदृशानि च वचनानि साम्प्रतं न दुर्लभानि।[२२]

शङ्करपूर्वेषु वेदान्ताचार्येष्वयमन्योऽप्युद्दिश्येत। अयं च प्रथितो नाम्ना सुन्दरपाण्ड्य इति। स किल प्रायः शकाष्टमशतकस्य प्रथमे पाद उत्पेदे। अयमासीन्न केवलं वैदान्तिक एव। अपि तु मीमांसकोऽपि। अयं चाभूद्दाक्षिणात्यः। अस्य वेदान्तमधिकृत्य कृतास्तिस्रः कारिकाः स्वयं शङ्करेण (ब्र. सू. १. ४.) शारीरकभाष्य उद्धृताः। अमलानन्दश्च कल्पतरौ (ब्र. सू. ३. ३. २५) तस्यापरास्तिस्रः कारिकाः ("निःश्रेण्यारोहणप्राप्यम्०") पठति। इमाश्चान्तिमास्तिस्रः कारिकाः सार्धमपराभ्यां कारिकाभ्यां कुमारिलेन स्वकीये तन्त्रवार्त्तिके (वाराणसीसंस्करणे, पृ. ८५२—८५३) धृताः। न्यायसुधायामपीमा (वाराणस्याम्, पृ. १२२८) दृश्यन्ते। इतः प्रतीयते ता इमाः कारिकाः सुन्दरपाण्ड्यकृतस्य कस्यापि वार्त्तिकस्य। वार्त्तिकं चेदं काञ्चिद्वृत्तिं भाष्यं वाधिकृत्य कृतमिति मन्यते। विशेषस्तु नाधिगम्यते।

---

प्राच्यगवेषणपत्रिका च (मद्रास, तृतीयभागे प्रथमोऽङ्कः) पृ. १; कविराजगोपीनाथस्य चोक्तपूर्वो लेखः पृ. १३।

२०। "कैश्चित्तत्सूत्रं व्याचक्षाणैर्भर्तृप्रपञ्चादिभि"रिति।

२१। श्रीहिरियन्नेन संगृहीतान्येतादृशानि वचनानि पश्यतु कश्चिदेतेषु स्थानेषु—इण्डियान एण्टिक्वोयारी, १९२४, पृ. ७६-८६, माद्रासनगरे च सम्मिलिताया निखिलभारतप्राच्यविद्यासमितेः कृत्यविवरणम्, १९२५, पृ. ४३९।

प्रकृते चास्मिन्मुख्ये विषये यदाह कविराजः श्रीगोपीनाथः (पूर्वोक्ते ग्रन्थे) स च विद्वान् प. व. काने-नामकः निखिलभारतप्राच्यविद्यासमितेः पञ्चमे कृत्य-विवरणे, (पृ. ९३७) तद्द्रष्टव्यम्। बह्वर्थोऽधिगम्येत।

२२। श्रीकुप्पुस्वामिशास्त्री। प्राच्यगवेषणपत्रिका। १९२७। पृ. १।

अभूवन्निह केचन प्राक्**शङ्कराद्** वेदान्ताचार्या ये वेदान्ते सर्वथा स्वतन्त्रमेव ग्रन्थं रचयामासुः। श्रेष्ठस्तु तेषामयमस्माकमाचार्यो **गौडपादः** कर्ता**गमशास्त्रस्य**। अत्रैव दृश्यते कासाञ्चिदति-मुख्यानां श्रुतीनामाद्यिमं विवरणं यथा वयमुपरिष्टाद् द्रक्ष्यामः।

---

५

## §१४। आगमशास्त्रस्य सारः।

अथायमुपन्यस्यते सार **आगमशास्त्रस्य**। तत्र तावत् प्रथम**मागमप्रकरणम्**। तद्द्विधा विभज्येत। आद्याभिरष्टादशभिः कारिकाभि (१. १-१८) रेको भागः शिष्टाभिस्तु कारिकाभि ( १. १९-२९ ) -रपरः। तत्र प्रथमे भाग उपेयोऽर्थश्चिन्त्यते द्वितीये तूपायः। उपेयस्तावदात्मा पुरुषो वा। उपायस्तु प्रणवोपासनम्। आत्माधिगमाच्च सर्वपुरुषार्थसिद्धिरित्युपनिषत्सिद्धान्तः। कीदृशः पुनः स पुरुषः कथं वायमधिगम्यत इत्यस्य प्रत्युत्तराय प्रवृत्त**मागमप्रकरणम्**।

१०

तत्रातिमात्रं सूक्ष्मः स पुरुषो न शक्यते वेत्तुमेकपदे। शक्यते तु क्रमेणेत्याह (१. १-५)। यद्यप्ययं पुरुषो वस्तुत एक एव तथापि "त्रिधा देहे व्यवस्थितो" ऽनुरुध्यमानस्त्रिविधामवस्थां स्वयं सर्वैरनुदिनमनुभूय-मानां जाग्रत्स्वप्नसुषुप्तरूपाम्। तत्र जाग्रदवस्थामापन्नः पुरुषो विश्वः। स खल्वयं शारीर आत्मा। स च विश्वेषां गोचर इति विश्व इत्युच्यते।[1] स्वप्नावस्थः स तैजसो नाम। तेजोमय इत्यर्थः। स हि तदा स्वयं ज्योतिर्भवतीति[2] तथोक्तः। स्वप्ने चैष न जातु विरहितो ज्ञानेन।[3]

१५

---

१। तदिदं वृत्तिकृत उत्प्रेक्षणम्। स्याद्वैतत्काप्यन्यत्रापि व्याकृतम्।

२०

२। यथोक्तं (बृ. आ. ४. ३. १-९) "स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवती"ति। द्र. वृत्तिः, १. १, पृ. २, प. ८-९।

३। तदुक्तम् (बृ. उ. ४. ३. २३) "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्ये"दिति।

२५

स खलु विश्वः शारीर आत्मेत्युपचारेणोच्यते। स चक्षुषि[४] विद्यते। एवं तैजसः स्वप्नावस्थत्वान्मनसि। प्राज्ञस्तु सुषुप्तावस्थो हृदयाकाश एव। नान्यत्र तत्सम्भवः।

तेषु च त्रिषु जागरिते बाह्यानेव विषयाननुभवतीति विश्वो बहिष्प्रज्ञः। स्वप्नेऽन्तःस्थितान्मानसानेव भावान्वेत्तीति तैजसोऽन्तःप्रज्ञः। प्राज्ञः पुनः सुषुप्ते घनप्रज्ञः। तस्यां ह्यवस्थायां कस्यापि घटपटादिप्रकारकस्य विशेषज्ञानस्याभावाद् घनं निविडमिवास्य ज्ञानमिति स घनप्रज्ञ इत्युच्यते। एते च त्रयो यथाक्रमं स्थूलं सूक्ष्ममानन्दं[५] च विषयत्वेन भुञ्जत इति स्थूलभुक्प्रविविक्तभुगा[६]नन्दभुक्चेति कथ्यन्ते।

अत्राचार्यः (१. ६—९) प्रसङ्गादस्ति सर्वेषां भावानां प्रभव इति सन्तो विनिश्चिन्वन्तीति ब्रुवन्सृष्टौ तेषां विविधां दृष्टिं प्रयोजनं वा प्रदर्शयति। तत्र प्रथमायां सृष्टौ चित्ततः सृष्टिः परामृश्यते।

अथ स पुनस्तस्य पुरुषस्यापरं विशेषं दर्शयन्नाह न केवलमवस्थात्रयानुरोधात्ते त्रयः। अपि त्वपरोऽपि विद्यते कश्चिदस्याकारः। स तु कस्यापि विशेषस्याभावान्न केनापि नाम्ना प्रकाश्यते' केवलं तु विश्वादीनां त्रयाणां कथनादनन्तरं स प्राप्त इति तुर्य ( स्तुरीयो वेति ) कथ्यते। तस्य चार्थश्चतुर्थः।

अथाचार्य एषां चतुर्णां पुरुषाणां कांश्चिद्विशेषांस्तेषांचान्योन्यं साधर्म्यं वैधर्म्यं च दर्शयित्वाह (१. ११-१८) विश्वतैजसप्राज्ञतुर्याणां तुर्यमेव पुरुषस्य स्वाभाविकं मुख्यं वा स्वरूपम्। तच्च मायाविनिर्मुक्तमद्वैतं च। द्वैतं त्विदं मायामात्रम्।[७] सुप्तोऽयं जीवोऽनादिमायया। यदा त्वयं प्रबुध्यते तस्मात्स्वापात्तदा बुध्यतेऽद्वैतमिति। समाप्तोऽत्र प्रथमो भागो यत्र प्रदर्शित उपेयोऽर्थः।

---

४। उपलक्षणमिदम्। बिम्बोद्ग्रहणसमर्थे यस्मिन्कस्मिन्नप्यादर्शादिनि वस्तुनीति भावः। यः कश्चन दिदृक्षेतात्मानं स स्वपुरावर्तिनो यस्य कस्यापि पुरुषस्य चक्षुषि तं प्रतिबिम्बितं पश्येदिति तथोक्तिः।

५। बृ उ. ४. ३, ३२।

६। प्रविविक्तं नाम सूक्ष्मम्।

७। इदमत्र कश्चिद्वदेत्। मायामात्रं खल्विदं द्वैतमिति नेदं वस्तुतः प्रवर्तते नापि निवर्तत इति। तदिदं यथा कश्चिद् ब्रयाद् माययैव कृतो ग्रन्थिर्माययैव विमोचित इति। तुल. वचनं भगवतो (बुद्धस्य) (म. वृ. पृ. ५४०)—

"आकाशेन कृतो ग्रन्थिराकाशेनैव मोचितः"। इति

अथ द्वितीये भाग आद्याभिर्दशभिः कारिकाभि (१. १६-२६) स्तस्य तुर्यस्य पुरुषस्याधिगमोपायश्चिन्त्यते। स च मूलोक्तेन प्रकारेण प्रणवोपासनम्।

अथ द्वितीये प्रकरणे वै त थ्य नामके प्रथमं तावद्युक्त्या श्रुत्या च ५ स्वप्ने सर्वभावानां वैतथ्यं प्रतिपाद्यते। तच्च कुर्वताचार्येण प्रथम इव द्वितीयेऽपि प्रकरणे बृ ह दा र ण्य क माश्रितम् (४. ३. ८)। स खल्वाह्योपनिषद्वचनेन (२. १-४) मनीषिणः[८] किल स्वप्ने सर्वभावानां वैतथ्यमाहुरिति। अत्र च तेन तिस्रो युक्तय उपन्यस्ताः। यथा (१) सर्वे भावा अन्तस्थाः। (२) तावन्तमतिदविष्ठं देशं गत्वा न कश्चित्स्वप्ने तांस्तान् १० भावान्द्रष्टुमर्हति। (३) न च स्वप्ने तावन्तं दविष्ठं देशं गत्वा प्रबुद्ध आत्मानं तस्मिन्नेव देशे पश्यति। एतच्चोपनिषद्वचनेन समर्थ्य (२. ३) स प्रतिपादयति (२. ४) स्वप्न इव जागरितेऽपि भावा वितथा इति। अत्रापि हि भावाः स्वप्न इवान्तस्था एव। ततश्च स्वप्नजागरितयोर्भेदोऽपि वस्तुतोऽभेद एव। श्रुते (बृ. उ. ४. ३. १४) युक्तितश्च (२. ५)। १५ एवञ्च वैतथ्यं जाग्रद्भावानामपि। किञ्चात्रान्यामपि काञ्चिद्युक्तिं प्रदर्श्यापाकृत्य चापत्तिं परस्याचार्य आह (२. ६, १०) स्वप्ने जागरे चोभयत्र भावानां चेतःकल्पितत्वादसत्त्वमिति।

स्यादेतत्। स्वप्नजागरितयोरेकेनापि तावदवश्यमवितथेन भवितव्यम्। न पुनरुभयाभ्यामपि। अन्यथैषां भावानां बोद्धा वा विकल्पको वा २० कश्चिन्नोपपद्येतेति। अत्र तत्प्रत्युक्तम्। अयमिह वेदान्तनिश्चयः। आत्मैव स्वमाययात्मानं कल्पयति। स एव च भेदान्बुध्यते। स एवान्तश्चित्ते कांश्चिदव्यवस्थितान्भावान् निर्मिणोति कांश्चित्तु नियतान्भावान्बहिश्चित्ते कल्पयति। एवमपि ये खलु भावा यावच्चित्तमवतिष्ठन्ते। ये च भावा यावद्ग्राह्यग्राहकरूपं द्वयं तावदवतिष्ठन्ते। ते सर्वे २५ कल्पिता एव। नात्र कश्चिद्धेतुर्येन ते मिथो भिद्येरन् (२. १४)।

८। इहेदं द्रष्टव्यम्। आचार्येण गौ ड पा दे न नास्मिन्नन्यस्मिन्वा (तुल. ४. ९४) ऋषिरिति वा मुनिरिति वा शब्दः प्रयुज्यते। किन्तु मनीषिशब्दः। अयं च शब्दोऽस्मिन्ग्रन्थ आहुरिति शब्देन सह द्विर्दृश्यते (२. १, ९) यथान्यत्र (क. उ. १. ३. ४; भ. गी. १८. ३)। भ ग व द्गी ता या मत्र क्वचित्प्राहुरिति पाठः।

स्वप्नजाग्रद्भावानां समानेऽपि चित्तकल्पितत्वे व्यक्ताव्यक्तत्वरूपेणास्ति कश्चिद्विशेष इत्याहात्रा चा र्यः ( २. १५ )। ये खलु भावा अन्तश्चित्तेऽस्फुटा ये वा भावा बहिश्चित्तात्स्फुटाः प्रतीयन्ते उभयेऽपि ते कल्पिता एव। विशेषस्त्विन्द्रियकृतः कश्चिदस्ति। तथा हि स्वाप्निकभावा अन्तरिन्द्रियेण जाग्रद्भावास्तु बहिरिन्द्रियेण गृह्यन्त इति। ५

अथ बाह्यानामाध्यात्मिकानां च भावानां कल्पनायाः क्रमाकाङ्क्षायामुच्यते ( २. १६ )। पूर्वं जीवः कल्प्यते पश्चात्तु बाह्या आध्यात्मिकाश्च भावाः। जीवकल्पनैव सर्वकल्पनामूलम्। कल्पिते हि जीवे पश्चादन्यत्सर्वं कल्प्यते। कल्पना चेयं यथास्य ज्ञानं तथा भवति। किञ्च। यथान्धकारेऽनिश्चिता रज्जुः सर्पधारादिभिर्भावैर्विकल्प्यत आत्मापि १० तद्वदेव तत्तद्भावैर्विकल्प्यते ( २. १७ )। यथा च निश्चितायां रज्ज्वां सर्पधारादिभावविकल्पो निवर्तते रज्जुरेवेयमिति चाद्वैतं निश्चीयते। आत्मनिश्चयोऽपि तद्वदेव भवति ( २. १८ )। आत्मायं प्राणादिभिरनन्तैर्भावैर्विकल्प्यत इति सा तस्य माया। स्वयमेवायं तया मुह्यति (२. १९)। ते च प्राणादयो भावा मूल एव द्रष्टव्याः। यस्य पुरुषस्य १५ सम्बन्धे कश्चिदाचार्योऽन्यो वा आत्मायं प्राण इत्यादिना यं भावं दर्शयेत् स आत्मानं तमेव मन्यते पश्यति वा। प्रीयते च तस्य चित्तं तत्र। जायते च तस्य तस्मिन्नभिनिवेशः ( २. २०-२९ )। आत्मा त्वेषोऽभिन्नोऽपि पूर्वोक्तैः प्राणादिभिर्भावैर्भिन्न इव लक्षितो भवति रज्जुरिव सर्पादिभिर्भावैः। यः पुरुष एवं तत्त्वेन वेद सोऽविशङ्कितः कल्पयेत ( २. ३० )। २० न तस्य तेन दोषः। किञ्च यथासद्भिरेव सर्पधारादिभिर्भावैरद्वयेन ग्राह्यग्राहकरहितेन च रज्ज्वादिद्रव्येण सर्पोऽयं धारेयमिति कल्प्यते एवमसद्भिरेव प्राणादिभिरनन्तैर्भावैरद्वयेन ग्राह्यग्राहकरहितेन विकल्पास्पदभूतेनात्मना चायमात्मा कल्प्यते। नास्ति निरास्पदा कापि कल्पना। वेदान्तेषु विचक्षणाः पुनर्विश्वमिदं स्वप्नमिव मायामिव गन्धर्वनगरमिव २५ वा पश्यन्ति ( २. ३२ )। परमार्थस्तु न निरोधो न चोत्पत्तिः। न कश्चिद्बद्धो न च कश्चित्साधकः। न कश्चिन्मुमुक्षुर्न वा कश्चिन्मुक्तः ( २. ३३ )। किञ्च नेदं किञ्चित्स्वेन भावेन वा परेण वा भावेन नानास्ति। न पृथङ्न च किञ्चिदपृथक्। इदमेव विदन्ति तत्त्वविदः ( २. ३४ )। अयं खलु निर्विकल्पोऽद्वयः प्रपञ्चोपशमो वीतरागभयक्रोधै ३०

मुनिभिर्वेदपारगैर्दृष्टः । तस्मादेवमद्वैतं विदित्वा तत्र स्मृतिं योजयेत् । अद्वैतं चाधिगत्य लोकं जडवदाचरेत् ( २. ३६ ) ।

तृतीयं प्रकरण म द्वै तं नाम। नाम्नैव शक्यमवगन्तुं किमत्र प्रतिपत्तव्यं प्राधान्येन । तत्खल्वद्वैतम् । एतच्चाद्वैतं न तावत्सिध्येद्याव"त्सोऽकामयत ५ बहु स्यां प्रजायेये"त्यादिषु ( तै. उ. २. ६ ) श्रुतिष्वधिगता भेदबुद्धि-मापादयन्ती जातिबुद्धिर्नापेयात् । अनर्थकरी हि सा । अतोऽपाकरणीया । ध्यानलक्षणामुपासनामाश्रितो धर्मोऽप्युपास्योपासकभेदकल्पनामन्तरेण न सम्भवतीति नायमपि परमाय श्रेयसे । इष्यते तु भेदाभावः । स एव हि स्वाभाविकः पारमार्थिको वा । तदेव च तत्त्वम् । तच्चाजम् । नात्र १० किञ्चिज्जायेत नाम । भेदाश्रितत्वात्तूपासनाश्रितो धर्मो न पारमार्थिकः । अत एव कृपणो दीनः करुणार्हः । अस्य च कार्पण्याद्यस्तमुपास्ते सोऽपि कृपणः । अकार्पण्यं तु वक्तव्यम् । तच्च जातिबुद्धेरपगमादेव भवति । तस्यां चापगतायां सर्वं समं भवति । न च किञ्चिज्जायमानं जायत इति बुद्धिर्जायत इत्यस्माकमाचार्यः ( ३. २ )—

१५ "अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ।
यथा न जायते किञ्चिज्जायमानं समन्ततः ॥" इति ।

एतदेव च व्याचक्षाणः सः विवृणोति ( ३. ४ इत्यादि )। आकाशो महाकाशो वा घटाकाशरूपेणोदेति । घटाकाशोदये च यथा घटा एवं जीवात्मनामुदये देहेन्द्रियादिसङ्घाता हेतवः । यथा महाकाशो घटैः २० सम्बन्धाद् घटाकाशरूपेणोत्पद्यते आत्मापि तद्वद्देहेन्द्रियादिसङ्घातसम्बन्धा-ज्जीवरूपेणोत्पद्यते । किञ्च यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते सर्वे घटाकाशा न ते रजोधूमादिभिर्युज्यन्ते । एवं भिन्नेषु जीवेषु नात्मा सर्वैः सुखादिभिर्युज्यते । घटकरकापवरकादीनां मृन्मयानां भाजनानां रूपाणि कार्याणि नामानि च मिथो भिद्यन्ते । भिन्नेष्वपि त्वेतेषु २५ तदवच्छिन्न आकाशो न भिद्यते । सर्वत्र हि स एवैक आकाशः । जीवेष्वपि स एव निर्णयो ज्ञेयः । तत्तद्भेदादिना जीवा एव भिद्यन्ते न पुनस्तेष्वात्मा । किञ्च । यथा घटाकाशो नामाकाशस्य न विकारो नाप्यवयवः एवं जीवोऽपि नात्मनो विकारोऽवयवो वा । अन्यच्च । यथामलिनमपि गगनं बालानां मलैर्मलिनं भवति । अबुद्धानामपि पुंसां तथात्मापि मलिनो ३० भवति । यथा घटानामुत्पत्तौ विनाशे वा तेषामानयनेऽपनयने वा नाकाशो

विक्रियते आत्माप्येवं मरणे वा जन्मनि वा गमने वागमने वा सर्वशरीरेषु स्थित एव। नैष उत्पद्यते म्रियते वा गच्छत्यागच्छति वा। सर्वथाप्येषोऽविलक्षण आकाशेन। सर्वे देहेन्द्रियादिसङ्घाताः स्वप्न इवात्ममायया प्रत्युपस्थाप्यन्ते। न पुनरेते परमार्थतः सन्ति। अत एषां कस्यचिदाधिक्ये साम्ये वा सर्वेषां न काचिदु प प त्ति र स्ति। अत्र चाचार्येणोपनिषद्वचनमुदाहृत्य (तै. उ. २. १. ६) अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयश्चेति कोशपञ्चकं विवेचितं प्रकाशितं च बृ. उ. ( २. ५ )-विवृतया मधुविद्यया परं ब्रह्म। श्रुतिपर्यालोचनया चेममेव सिद्धान्तं समर्थयमान आ चा र्य आह ( ३. १३ )—

"जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते।
नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम्॥" इति।

अस्तु प्रागुत्पत्तेर्जीवात्मनोर्भेदाभावः। ऊर्ध्वं तूत्पत्तेः सम्भाव्यमानः सर्वोऽपि भेदः स्पष्ट एवेत्याशङ्क्याह या खलु मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिरुक्ता न तया भेदोऽभिप्रेयते किन्त्वयं तत्त्वेऽवतारायाभिप्रेतः। तादृशसृष्टिकथनेन तत्त्वावगमः सुकरो भविष्यतीति। भेदस्त्विह न कथञ्चिदस्ति।

कथं नु खलु सा सृष्टिस्तत्कृतो भेदो वा तत्त्वावताराय भवतीत्याह। त्रिविधाः सन्त्यधिकृता हीनमध्यमोत्कृष्टाः। तदर्थमनुकम्पयेयं सृष्टिश्रुत्योपासनोपदिष्टा।

द्वैतिनो वादिनः स्वसिद्धान्तव्यवस्थासु दृढं निश्चिताः। तादृशाश्च सन्तः परस्परं विरुध्यन्ते। अयं त्वस्माकं सिद्धान्तो न तैर्विरुध्यते। यथा च न विरुध्यते तथा प्रदर्शित मा चा र्ये ण (३. १८-१९ ) य आहाद्वैतमेव परमार्थः द्वैतं पुनस्तद्भेदः। यथा शुक्तिरजते रजतं शुक्तेरेवाविद्याकृतोऽवस्थाविशेषस्तथा द्वैतमद्वैतस्य। अद्वैतमेव परमार्थः। द्वैतं पुनरद्वैतस्यैव भेदो(ऽवस्थाविशेष) इत्युक्तं। अयं च भेदो मायिको न तु तात्त्विकः। तत्त्वतस्तु भेदे यदमृतं तन्मर्त्यं स्यात्। अद्वैतं चेद्वस्तुतो द्वैतं भवेन्ननु वक्तव्यं प्रकृतिः परिवर्तते। न त्वेतद्युज्यते। नहि प्रकृतेरन्यथाभावो नाम कदाचिद्भवति ( ३. २१, ४. ७ )। अद्वैतमेव परमार्थः। न चास्त्यस्य जातिः। यथैतन्मायया भिद्यते तथैव मायया जायते ( ३. १९, २४ )। नतु तत्त्वतः। वक्ष्यति च ( ३. २७ ) "तत्त्वतो जायते यस्य जातं तस्य

हि जायत" इति। न च जातिर्नाम कस्यापि किञ्चिदस्ति। एवमपि यदि किञ्चित्कचित्कदाचिज्जायेत तदजातमेव जायेतेति वक्तव्यं। न पुनर्जातं जायेतेति। नापि तत्सङ्गच्छते। वादिनोऽप्यजातस्यैव भावस्य जातिमिच्छन्ति। न त्वेतद्युज्यते। यद्येतदेव स्यान्ननु वक्तव्यमजातोऽजातत्वादमृतो ( नित्यो ) भावो मर्त्यो ( ऽनित्यो ) भवतीति। कथं नु खल्वेतद्भवेत्।

इदं च द्रष्टव्यम्। न खलु न सर्वथा सृष्टिः श्रूयते। प्रत्युत श्रूयत एव। सा च क्वचित्सतः पदार्थात्क्वचिच्चासतः पदार्थात्। तत्रैतयोर्यतरद्युक्त्युपेतं ततरद् गृह्णीत। आस्तां तत्। सृष्टिश्रुतेः पुनः का गतिः। अत्रापि यदुक्तं तत्स्यात्। किं पुनस्तत्। न खलु सृष्टिस्तात्त्विकी। अपि तु "उपायः सोऽवताराय" ( ३. १५ ) इत्युक्तं प्राक्। अन्यदप्युच्यते ( ३. २४ )। मायिकीयं सृष्टिर्न तु तात्त्विकी ( ३. २४ )।

किञ्च श्रुतौ ( ई. उ. १२ ) सम्भूतिरपोद्यते। सम्भूतिर्नाम जातिः। अपवादाच्च सा निषिद्धेति स्पष्टम्। निषिध्यते च श्रुत्यैव तत्कर्तृ रूपं कारणमपि। अतो न जातिर्न वा जनकः। न चासतो जन्म भवति। यदि मन्यसे सतो जन्मेति। तदा तज्जन्म माययैव सम्भवेन्न तु तत्त्वतः। अथ ब्रवीषि तत्त्वत एवासज्जायत इति तर्हि वक्तव्यं जातमेव जायत इति ( ३. २७ )। न चैतद्भवति। असतश्च जन्म न मायया न वा तत्त्वतो भवति। न हि वन्ध्यापुत्रो मायया तत्त्वेन वा जायते। ( ३. २८ )। अन्यच्च। यथा स्वप्ने ग्राह्यग्राहकरूपस्य द्वयस्याभावेऽपि मनसि तद्द्वयमाभासते स्पन्दते च तादृशं मनः। एवं जागरितेऽपि मनो मायया द्वयाभासं सत्स्पन्दते। एवं च यथा मनः स्वप्ने वस्तुतोऽद्वयमपि द्वयाभासमेवं जागरितेऽपि तद्वस्तुतोऽद्वयमपि द्वयाभासं स्पन्दते। अत एवास्थेयं यत्किञ्चित्सचराचरमिदं द्वैतं तत्केवलं मनसैव दृश्यते। नैतद्वस्तुतोऽस्ति। अमनीभावे तु मनसो न द्वैतमुपलभ्यते। ( ३. ३१ )। मननाद्धि मनसो मनस्त्वम्। यदा पुनर्मनो न किञ्चिन्मनुते सङ्कल्पयते वा तदा तस्यामनस्तामनीभावो वा भवति। इयं चावस्था मनसो न सुषुप्त इव। भिन्नावस्था मनसो यदा तन्निगृह्यते। भिन्ना च सुषुप्ते ( ३. ३२—३४ )। सुषुप्ते मनो लीयते। लयो नामात्र निद्रावस्था। निगृहीतं तु मनो न लीयते। इदमेव च मनो निर्भयं

ब्रह्म ( ३. ३५ )। पुनरप्याहाचार्यो विशेषेण ( ३. ४६ )। यदा चित्ते न लयो न वा विक्षेपो न च तस्मिन्कस्यचिद्वस्तुन आभासः स्थिरं च तज्जायते तदा तदेव चित्तं ब्रह्म निष्पद्यत इति ( ३. ४६ )। उपसंहरति चैवं स तृतीयं प्रकरणम्—

"न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते। ५
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते॥ इति।

अथाचार्यश्चतुर्थं प्रकरण म ला त शा न्ति मारभमाणो वन्दते द्विपदां वरं नमति च तं येनास्पर्शयोगो देशितः। स च द्विपदां वरो देशकश्चास्पर्शयोगस्य को नामेति वृत्तित एव सविशेषमवगन्तव्यम्। समासेन तु स खलु नान्यः कश्चित्सुगतादितीत्ययमभिनववृत्तिकारो मन्यते। १०

तत्र तावदाचार्यः प्रथमं संक्षेपेणाह केचिदेव वादिनः सन्ति ये परस्परं विवदमानाः सतो वस्तुनो जातिमिच्छन्ति। अपरे तु असतो वस्तुनो जातिं ब्रुवन्ति। सौगतास्तूभयमप्येतन्मतं प्रत्याचक्षाणाः सर्वथाऽजातिवादमेवातिष्ठन्ते। अस्मदाचार्योऽपि तदेवाह। तथा हि। न किञ्चिज्जायते भूतम्। न च किञ्चिदभूतम्। १५
एवं विवदमाना अद्वया ( अद्वयवादिनो बौद्धा ) अजातिं ख्यापयन्ति। ख्याप्यमानां च तैरजातिं वयमनुमोदामह एव न तु तैर्वयं विवदामहे। यथा च नास्माकं विवादस्तथा स्व य मा चा र्य एव निबोधयति। किञ्च। वादिनः किलाजातस्यैव भावस्य जातिमिच्छन्ति। यत्प्रागेव जातं न तत्पुनर्जायत इति प्रत्यक्षं नः २०
सर्वेषाम्। न चास्ति जातस्य पुनर्जातौ किमपि प्रयोजनम्। न चाजातं जायते। यदजातं तदजातत्वादेवामृतं ( नित्यम् )। यत्पुनर्जातं तन्मर्त्यमनित्यमिति प्रसिद्धम्। नाजातस्य जातिर्युज्यते। तथा सति मर्त्यममृतममृतं च मर्त्यं भवेदिति वक्तव्यम्। न च तद्भवति। न हि कथञ्चित्प्रकृतेरन्यथाभावो भवेत्। अन्यच्च। २५
यथा धर्माणां न जातिरेवं तेषां न जरा। जरा नाम जीर्णता क्षय इत्यर्थः। न च तेषां मरणम्। मरणं नाशो निवृत्तिरित्यनर्थान्तरम्। एवं सर्वे धर्मा जरामरणाभ्यां निर्मुक्ताः। न धर्मा उत्पद्यन्ते न वा नश्यन्तीति भावः। तथापि ये खलु मन्यन्ते धर्मा उत्पद्यन्ते च विनश्यन्ति चेति ते च्यवन्ते। ३०

पुनरपि बहुधाक्षिप्य निराक्रियते जातिवादः। तथा हि। यस्य मते कारणं ब्रह्मैव कार्यं जगज्जायते तस्य मते तज्जायमानं कारणं कथमजं भवेत्। जायमानं चाजं चेति विप्रतिषिद्धम्। किञ्चाजं कारणं चेज्जायते ननु वक्तव्यमजं कारणं जायमानात्कारणाद्भिन्नमिति। न चेदं भवानभ्युपगमिष्यति। अथ मन्यते कार्यकारणयोरनन्यतया कार्यमजं स्यादिति। नेदमुपपद्यते। कार्यं चाजं चेति विप्रतिषिद्धम्। भवान्खलु कार्यकारणयोरनन्यत्वमभ्युपगच्छति। एवञ्चेज्जायमानात् कार्यादनन्येन कारणेनापि जायमानेन भवितव्यम्। तादृशं च भवतः कारणं ब्रह्म कथं कूटस्थनित्यं भवेत्। जायमानं च कूटस्थं नित्यं चेति विप्रतिषिद्धम्। किञ्च। अजाज्जायत इति न क्वचिदस्ति दृष्टान्तः। दृष्टान्ताप्रसिद्ध्या च न सोऽर्थः सिध्यति। जातादपि चेज्जायते नूनमव्यवस्था प्रसज्येत।

अपि चोत्पादे हि परैरभ्युपगम्यमाने हेतुफलभावोऽभ्युपगन्तव्यः। वक्तव्यं च कतरस्तयोरादिरिति। किं फलस्य हेतुरादिराहोस्विद्धेतोरादिः फलमिति। किमादौ हेतुस्ततस्तस्मात्फलमुतादौ फलं ततस्तस्माद्धेतुरिति। नोभयमपि। ततश्च नोत्पादः। किञ्च। ये खलु मन्यन्ते हेतोरादिः फलं फलस्य चादिर्हेतुस्तथा तेषां जन्म भवेद्यथा पुत्रात्पितुर्जन्म भवेत्। न चेदं जातु भवति। अन्यच्च। कस्यचिद्वस्तुन उत्पत्तौ तावदवश्यं हेतुफलयोः केनापि क्रमेण भवितव्यम्। स च क्रमो भवंस्त्रेधैव भवेत्। पूर्वक्रमोऽपरक्रमः सहक्रमो वा। तत्र पूर्वक्रमो नाम पूर्वं हेतुः पश्चात्फलम्। अपरक्रमो नाम पूर्वं फलं पश्चाद्धेतुः। सहक्रमो नाम हेतुफलयोर्यौगपद्यम्। तत्रैतेष्वन्यतमोऽपि न सिध्यति। यथा च न सिध्यति तथा चिन्तितं विस्तरशो नागार्जुनेन तमनुसरता चास्मदाचार्येण। अनुसन्धेयं चेदं मूल एव (४. १६—१८)। "एवं हि सर्वथा बुद्धैरजातिः परिदीपिते"त्युद्घोषितमत्राचार्येण (४. १९)।

पूर्वं हेतुफलभावे परिहृतेऽपि जातिवादी पुनरपि दृष्टान्तबलेन प्रत्यवतिष्ठते। न पुनस्तावता सिद्ध्यति कथञ्चिदपि जातिः। किञ्च। जायमानं हि किञ्चित्स्वतो वा जायते परतो वा जायते। वस्तुतस्तु नोभयथापि। किञ्च। जायमानं किञ्चिन्न सन् नासन् न च सदसत्।

न च तदन्यत्किञ्चित्। किञ्च विज्ञानमेव सर्वम्। नार्थान्तरम्। तदेवार्थाकारेणाभासते। यथा स्वप्नादौ। जातिवादी तु विज्ञानवादं निराकरिष्णुराह। अस्ति गौरश्वः पुरुषो हस्तीति विविधा प्रज्ञप्तिः। सत्यां च तस्यामवश्यं तस्या निमित्तेनाप्यवश्यं भवितव्यम्। निमित्तं नाम स विषयो यमुपादाय प्रज्ञप्तिर्भवति। सत्सु गवादिषु गवादयः प्रज्ञप्तयो भवन्ति। गवादीनि हि निमित्तान्युपादाय तत्तत्प्रज्ञप्तयः प्रवर्त्तन्ते। न खलु तेष्वसत्सु। अन्यथा गवादीनामभावेऽपि गवादिप्रज्ञप्त्युत्पत्तावविशेषेण सर्वत्रैव सर्वाः प्रज्ञप्तयः प्रवर्त्तेरन्। न तु प्रवर्तन्ते। अतोऽकामेनापि प्रज्ञप्तेर्निमित्तमभ्युपगन्तव्यम्। अनभ्युपगमे तु योऽयं ग्राह्यग्राहकभावः स न स्यात्। न चैतद्युक्तम्। अतः सिध्यति निमित्तरूपा भावाः। सिद्धौ च तदुत्पत्तिरपि सिध्यति। अस्ति चान्योऽपि हेतुर्भावसिद्धौ। संक्लेशो व्यवदानं च सुप्रसिद्धम्। तत्र संक्लेशस्त्रिविधः क्लेशकर्मजन्मात्मकः (द्र· १२७-८) शाक्यशास्त्रे। संक्लेशस्योपलब्धेश्च भावानामस्तिता परतन्त्रा मन्यते। सन्त्येव भावा अन्यथा तदाश्रयः संक्लेशो नोपलभ्येत। उपलभ्यते तु सर्वैः। इयं च भावानामस्तिता परतन्त्रा। अन्यायत्तेत्येतत्। न स्वतन्त्रा। भवितुमभवितुमन्यथा वा भवितुं नेयमात्मना समर्था। अपि तु हेतुप्रत्ययसामग्रीबलादवश्यं भवेदेव। तथा च सति संक्लेशे यतः स संक्लेशस्तेनापि भवितव्यम्। तेन च सन्ति भावाः। ते च जायन्ते।

तदेतन्निराक्रियते। युक्त्या खलु भवान्प्रज्ञप्ते निमित्तमस्तीति मन्यते। वयन्तु भूतस्य (तत्त्वस्य सत्यस्य) दर्शनान्निमित्तमेव तन्न मन्यामहे। यद्भवान् युक्तिं पश्यन्निमित्तं मन्यते वयं तु तत्त्वं पश्यन्तो निमित्तमेव तन्न भवतीति मन्यामहे। युक्तिप्रत्यक्षयोर्विरोधे युक्तं प्रत्यक्षमुपादातुम्। प्रत्यक्षं च नेह किञ्चिन्निमित्तमस्तीति।

यन्निमित्तमाह भवान्न तद्वस्तुतो निमित्तम्। इयमत्र युक्तिः। यस्माच्चित्तमन्तरेण नास्ति किञ्चिद्बहिर्वस्तुसत् तस्माच्चित्तं न कमप्यर्थं संस्पृशति। न चित्तस्य केनापि विषयेण सम्बन्धः। तादृशस्य विषयस्यैवाभावात्। अर्थे चाभूते तदाभासोऽप्यभूतः।

एवमन्यथापि जातिं निराकृत्याचार्योऽजातिरेव प्रकृतिरिति प्रतिपाद्याह "प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यती"ति।

अपरौ च द्वौ दोषौ जातिवादे। जातिवादिनस्तावदाहुः। अनादिरयं संसारः। अस्ति त्वस्यान्त इति। किञ्च। अस्ति मोक्षस्यादिः। न त्वस्त्यस्यान्त इति। न पुनरनादेः संसारस्यान्तवत्त्वमादिमतश्च मोक्षस्यानन्तता सेत्स्यति। स्यादेतत्। मा भूत्कस्याप्यादिरन्तो वा। ५ मध्यं तु भविष्यति। प्रत्यक्षश्च स भावो लोके। तस्यैव जातिर्भविष्यतीति। नेत्याह। आदावन्ते च यन्नास्ति मध्येऽपि तत्तथा भवेत्। ततश्च यन्नादौ न चान्ते। मध्येऽपि तन्नास्ति। तथापि तच्चेद्दृश्यते तर्हि मन्तव्यं तद्वितथमिति। वितथमपि चावितथमिव तल्लक्ष्यते।

१० अन्यच्च। उत्पादो नाम कस्यापि वस्तुनो न कथमपि प्रसिध्यति। स हि कल्प्यमानः सतो वा भवेदसतो वा भवेत्। वस्तुतस्तूभयथापि स नोपपद्यते।

यथा चोत्पादो न कथञ्चिदपि भवति तथा पुनरपि हेतुफलभावं विवृण्वन्नाह। सन्ति चतस्रः कोटयः। (१) नास्त्यसद्धेतुकमसत्। १५ (२) नास्त्यसद्धेतुकं सत्। (३) नास्ति सद्धेतुकं सत्। (४) न च सद्धेतुकमसत्। एवमपि हीनमध्यमोत्कृष्टेषु त्रिविधेषु विनेयेषु ये हीना न शक्नुवन्त्यतिगम्भीरस्यानुत्पादतत्त्वस्य नामाप्याकर्णयितुं तान्प्रति महाकारुणिका बुद्धा भगवन्तः क्वचिज्जातिमप्युपदिदिशुः। तथैव हि ते तांस्तत्त्वमवतारयामासुः। तथैव हि जातिदोषो न २० तथा गुरुर्भवति यस्तु भवति स शक्यप्रतीकार एव भवति।

इदं चावगन्तव्यम्। इह केवलमद्वयं (ग्राह्यग्राहकरहितं) विज्ञानमेवास्ति। नान्यत्किञ्चित्। अजायमानमपि चेदं जायत इवाभासते। अचलमपि च चलतीवाभासते। वस्तुधर्मरहितमपि वस्तुवदाभासते। शान्तमप्रवृत्तं चेदं। यथालातं स्पन्दितमृजुवक्रादिकाभासं भवति २५ वस्तुतोऽतादृशमपि सत्। एवं विज्ञानमपि स्पन्दितं सद्वस्तुतो ग्राह्यग्राहकसंसर्गाभावेऽपि तदाभासं भवति।

अन्यदपि द्रष्टव्यम्। यथालाते स्पन्दमाने ते खल्वाभासा ऋजुवक्रादिका नालातादन्यस्मात्कुतश्चिद्भवन्ति। न च तेऽलातं विशन्ति। एवं न ग्राह्यग्राहकभावा अपि विज्ञानादन्यत्र क्वाप्युद्भूय तत्रागच्छन्ति। न ३० च ते विज्ञानमेव प्रविशन्ति। विज्ञानेऽप्येवमेव। विज्ञाने स्पन्दयाने

नाभासा विज्ञानादन्यतः कुतश्चिद्भवन्ति। निस्पन्दाश्च विज्ञानान्नान्यत्र त आभासा वर्तन्ते। न वा ते विज्ञानं विशन्ति।

नास्ति वस्तुतो हेतुफलसिद्धिरिति प्राक्प्रदर्शितम्। तथापि पुरुषा-स्तत्राभिनिविशन्ते। अभिनिवेशाच्च यावदभिनिवेशं हेतुफलोदयः। क्षीणे तु हेतुफलावेशे नास्ति हेतुफलोद्भवः। एवं हेतुफलावेशादेव संसारः। तत्क्षयाच्च नोपपद्यते संसारः। ५

किञ्च। हेतुफलभावचिन्ताप्रसङ्गात्सह सौगतैः शाश्वतवाद-मुपच्छेदवादं च निरस्यन्नाहाचार्यः। सर्वमिदं संवृत्या जायते न तु परमार्थेन। अतो नास्ति किमपि शाश्वतम्। यतश्च स्वभावेन सर्वमजं तस्मादुच्छेदोऽपि न भवतीति (पृ. १५२)। १०

चित्तमेवेदं सर्वं ग्राह्यग्राहकाकारेणाभासत इत्युक्तं पुरस्तादसकृत्। अथ तत्स्मारयित्वा चित्तस्यासङ्गत्वं प्रदर्श्यते। तेन ह्यावरणं च्यवते (४. ९७)। असङ्गं च चित्तमतितरां विनिवर्तते विषयेभ्यः। विनिवृत्ता-प्रवृत्तस्य च चित्तस्य निश्चला स्थितिः परमः पुमर्थः (४. ८०)। इदं ह्यसङ्गं चित्तं निष्पद्यते ब्रह्मेति (३. ४६)। अयमेव हि विषयो १५ बुद्धानाम्। तदाहाचार्यः

"निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयमिति॥"

अयमेव सकृद्विभातो धर्मधातुः (४. ८१)। धर्मधातुर्नाम परमार्थो यथा सुप्रसिद्धः सुगतशास्त्रे। तत्रैव च सर्वज्ञता भवति (४. ८६)। २०

अत्र च सर्वज्ञतानुकूलाश्चत्वारः पदार्था अग्रयानतो विज्ञेया इत्याहाचार्यः (४. ९०) कण्ठत एव। अग्रयानं नाम महायानं। नान्यत्किञ्चिन्।

अद्वैते (३. ३३) ज्ञेयाभिन्नस्य ज्ञानस्यासङ्गत्वमुद्दिष्टम्। मध्ये तदभ्यस्तम्। विशेषेण तु "अजेष्वजमसङ्क्रान्त"मित्यत्र (४. ९६)। अथ प्रकरणार्थोपसंहारेण तदेव ज्ञानस्यासङ्गत्वं परिदीपयन्नाहाचार्यः। न २५ खलु परमार्थतो बुद्धस्य धर्मा नाम केचन सन्ति न वा तेषां ज्ञानं नाम किञ्चन। यथोक्तम्—

"सर्वधर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्।" (४. ९९) इति।

*

## §१५। गौडपादीयं दर्शनम्।

अथ वयं स्तोकं पश्यामो दर्शनं गौडपादस्य यथाधिगम्यत आगमशास्त्रे। यद्यपीदं कृतं किञ्चित्पूर्वस्मिन्नपि परिच्छेदे (§ १४)। यास्तु दृष्टय आचार्यस्य प्रागेव प्रदर्शिताः प्रसङ्गान्न ता पुनर्दर्शयिष्यन्ते। नूनं पूर्वं बहूक्तं मे पूर्वजैः। तथापि काचिदभिनवेयं वृत्तिर्विरचितेति चिन्तनीयेयं पुनरपि तद्दर्शितया दिशा। तच्च चिकीर्षता पुरुषेण करणीयं स्वचित्तं विनिर्मुक्तं वाग्भ्यश्च चिन्ताभ्यश्चार्वाचीनाभ्यः। दुरधिगमं ह्यन्यथा तेन तत्त्वम्।

यदस्माकमाचार्यो गौडपादो वैदान्तिक इति कृतं तत्कीर्त्तनेन। विचारयति च स प्राधान्येन वेदान्तमुद्घोषयति च वेदान्तसिद्धान्तमित्यपि स्पष्टम् (१. १२, ३१, ३५)। तस्मान्निसर्गत एवायं श्रुतिमनुसरन्स्वविषयं विचारयति। तथापि न खलु नायं शुद्धां युक्तिमप्यनुसरति। साक्षात्परम्परया वानेकेषु स्थानेषु तदीया युक्तयः श्रुतिष्वेव प्रतिष्ठिताः (२. १-१०; ३. २४-२६)। यत्र पुनः श्रुतयो मिथो विरुध्यन्ते तत्र यद्युक्तियुक्तं तदेवादृत्यं दृश्यते न त्वितरदित्यप्याह स स्पष्टम् (३. २३)। सर्वत्र च स ग्रन्थस्य बलवतीं स्वतन्त्रां च युक्तिं प्रयुङ्क्ते। स खलु श्रुतौ प्रतीयमानं विरोधमपचिकीर्षुर्गौणमर्थमुपादाय मुख्यमर्थं "न युज्यत" इति स्पष्टया वाचा जहाति (३. १४)। प्राचीने वेदान्ते ब्रह्मसूत्रादिषु वक्तुर्विवक्षया यत्र काप्युपनिषद्वचसां गौणवृत्त्या व्याख्यानमत्रैव प्रथममिव दृश्यते।

वैदान्तिकेषु गौडपादो ऽद्वैतवादी। यथा स्वयं स आह "अद्वैतं परमार्थत" इति (१. १७)। "अद्वैतं परमार्थो हीति" च (३. १८) स एवाह; "अद्वैते योजयेत्स्मृति"मिति (२. ३६) च। अन्यत्रापि दृश्यते (२. ३१)—

"स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः"॥ इति।

किञ्च योऽयं द्वैतवादः स केवलमुपदेशाय। ज्ञाते तु तत्त्वे न द्वैतं विद्यते (१. १८)। द्वैतस्योपशम एव च शिवः (१. १६)[1] एतस्य च

१। "प्रपञ्चोपशमोऽद्वय" (२. ३५) इति।

समर्थनाय स श्रुतिमुदाहरति (३.२४) "नेह नानास्ति किञ्चनेति" (बृ. उ. ४.४.१९ ; क. उ. ४.११)। उपसंहरति च प्रजापति-र्वस्तुतोऽजायमान एव मायया बहुधा जायत इति (३.२४)।

एवं तावत्प्रथमं केवलं श्रुतिबलेन द्वैतं मायाकृतमिति दर्शयित्वा तत्र काश्चिद्युक्तीरुपन्यस्यति। तत्र चादौ बृ. उ. वचनेन (४.३.१४) ब्रवीति (२.५) स्वप्नावस्था जागरितावस्था चैकैवेत्याहुर्मनीषिण इति। यतस्तयोर्द्वयोरप्युपलब्धा भावाः समा एव। स्वप्नोपलब्धाश्च भावा मिथ्याभूता एवेति प्रसिद्धम्। ब्रुवन्ति च तन्मनीषिणः (बृ. उ. ४.३.८)। समर्थितं चेदं युक्तिभिर्वक्ष्यमाणाभिः।

स्वप्ने दृष्टा (पर्वतादयो) भावा वितथाः। यतस्तेऽन्तस्थाः संवृताश्च (२.१ ; ४.३३)। न च ते वस्तुतस्तथा सम्भवन्ति यथा दृश्यन्ते। इतोऽपि ते वितथाः। यतो नेदं जातु कल्पयितुमपि शक्यं स्वप्नद्रष्टा स्वप्ने दृष्टं देशं वस्तुत एवोपसर्पतीति। न हि तावन्तमतिः-दवीयांसमध्वानं तावतातिस्वल्पेन कालेन कश्चिद्गन्तुं शक्नोति। किञ्च पाटलीपुत्रे सुप्तः कश्चित्कदाचिदात्मानं स्रुघ्ने पश्यति। न पुनः प्रबुद्धः स तत्र दृश्यते (२.२ ; ४.३४)। न स स्वप्ने सम्मन्त्र्यापि मित्राद्यैः प्रबुद्धस्तान्प्रपद्यते। न वा पश्यति प्रबुद्धस्तत्सर्वं यत्स स्वप्नेऽपश्यत् (४.३५)।

किञ्च। दृष्टमिदं श्रुतौ (बृ. उ. ४.३.१०) "न तत्र रथा न रथयोगा न पन्थानः। अथ रथान् रथयोगान्पथः सृजत" इति। प्राप्तं चैतस्माद्वैतथ्यं स्वप्ने भावानाम् (२-३)। एवं जागरितेऽपि दृष्टा भावा वितथाः। अन्तस्थिता ह्येते। न कथञ्चिद्बहिस्थिताः। स्वप्ने जागरिते चोभयत्राप्येते संवृता एव। नेह कश्चिद्भेदः (२.४, ४.३३)। इदं च द्रष्टव्यम्। यदादावन्ते च नास्ति। नास्ति तन्मध्येऽपि। तथा चेदं वस्तुतो वितथमप्यवितथमिव लक्ष्यते (२.६, ४.३१)।

स्वप्ने जागरिते चोभयत्रापि वस्तूनि केवलं मनसैव कल्प्यन्ते। तत्र यदन्तर्मनसा कल्प्यते तदसन्मन्यते। यत्पुनर्बहिः कल्प्यते तत्सदिति गृह्यते। वैतथ्यं त्वनयोर्द्वयोरपि युक्त्या वक्तव्यम् (२.९, १०)। यन्नाम किमपि स्वप्ने वा जागरिते वा गृह्यते तच्चित्तेनैव। ततश्च चित्तदृश्यं तत्। अत एव चावस्तुकम् (४.३६)। किञ्च। यथा मनः स्वप्ने वस्तुतो-

ऽद्वयमपि[2] द्वयाभासमेवं निःसंशयं जागरितेपि तदद्वयमपि द्वयाभासम् ( ३. ३० ; ४. ६२ )। ततश्चेदं सचराचरं द्वैतं केवलं मनोदृश्यम्। मनसस्त्वमनीभावे[3] न द्वैतमुपलभ्यते ( ३. ३१ )। तदा चामनीभावो यदात्मसत्यानुबोधेन मनो न किञ्चिन्मनुते। किं नु तत्तदा मन्वीत। न खलु तदा तस्य किमपि ग्राह्यमस्ति।[4] यथा दाह्याभावे स्वयमग्निरुपशाम्यति। मनोऽपि तथोपशाम्यति।

दृष्टं प्राक् स्वप्नस्येव जागरितस्यापि वैतथ्यम्। मायाकृतत्वात्कल्पनाकृतत्वाच्चेति। मायया हि मनस्तथा स्पन्दते (३. २९)। चलति हि चित्तं तथा (४. ६१)। प्रदर्शितोऽत्र विस्तर आ चा र्ये ण ( ४. ४७-५२, ७२ )। दत्तश्चात्र हृदयङ्गमोऽलातदृष्टान्तः। यथा स्पन्दितमलातमृजुवक्रादिकाभासं भवति न पुनर्वस्तुत एव तत्तादृशम्' एवं स्पन्दमानं विज्ञानमपि लोके ग्राह्यग्राहकाभासं भवति। न पुनर्वस्तुत एव ग्राह्यग्राहकसद्भावोऽस्ति ( ४ ४७-५२ )। स्पष्ट इह विज्ञानवादः। अत्र वैदान्तिकस्य विज्ञानवादिनश्चान्योन्यं कियानतिसंवाद इति द्रष्टव्यम्। किञ्चात्र यत्प्रतिपद्यत आ चा र्यो गौ ड पा द स्तदपि चिन्तयितव्यम्। इह च कश्चिदवबुध्येत कियत्खलु प्रभवति गौ ड पा द स्य सौगती युक्तिश्चिन्ता चेति। एवमप्यत्र द्रष्टव्यं काममाकृष्टोऽपि गौ ड पा दः सौगतैरात्मनो वैदान्तिकत्वं नाजहात्। सत्यमिदं गौ ड पा दे न विज्ञानवादोऽनुगम्यत इति। सत्यप्येवं परिगृहीतोऽयं तेनादावुपनिषद एव। स्पष्टं चेदमतिमात्रम् ( बृ. उ. ४. ३. १४ )। अत्रैव हि प्रतिष्ठिता तदीया मूलोक्तिः ( २. ५ )—

"स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥" इति।

तदिदमौपनिषदं विज्ञानवादबीजं तथातिसमवर्धत महता प्रयासेन सौगतसिद्धान्ते यथा पर्यणमत कालेन पश्चादा ग म शा स्त्र रूपेण। अन्यच्च। यदा तच्च सदृशं च बीजमुपलभ्यते विज्ञानवादस्योपनिषदि[5] तदेदमवश्यमभ्यु-

---

२। द्वयं ग्राह्यग्राहकरूपम्।

३। मननान्मनसो मनस्त्वम्। निरुद्धे तु मनने मनो न मनो भवति।

४। ३. ३३।

५। ऐ. उ. ३. २-३ ; तै. उ. ३-५ ( "विज्ञानं ब्रह्मेति व्यजानात्"। "विज्ञानाद्ध्येव०"।

पगन्तव्यं न खलु विज्ञानवाद आदौ बौद्धैरेवोद्भावित इति। कामं पुनरेष तैः पश्चात्प्रवर्धित इत्यलं कथनेन।

इहेदमवगन्तव्यम्। द्वया हि विज्ञानवादिनो वैदान्तिकाश्च सौगताश्च। तत्राद्यानां मुख्यो गौडपादो द्वितीयानां तु मैत्रेयनाथः। उभयस्मिन्नपि मते बाह्यः प्रपञ्चश्चित्तमेव नान्यत्। अस्त्यनयोस्तु कश्चिदवान्तरभेदः। तथा हि। वेदान्ते तादृशपरिणामस्य कारणत्वेन मायोच्यते (३. २९, ४. ६१)। सौगतानां तु सा वासना भवति।[६] द्वे अपि ते अनादी। संक्षेपेण पुनर्वासना नाम पूर्वं ज्ञानम्। इयं च सर्वातिशायिनी जगच्छक्तिर्मायेति वदन्ति। ततश्चात्रोभयोर्मतयोरयं विशेषो यद्वेदान्तवाद आत्मनो मायासम्बन्धो बौद्धमते तु वासनायाश्चित्त-सम्बन्धः।[७] १०

अनादिः खलु माया जीवस्य वासनेव। जीवस्तावदनादिमायया स्वपिति (१. १६)। भवति च तया स्वयं मोहितः (२. १९)। स स्वमाययात्मानं बहुधा कल्पयति बुध्यते च भेदाननेकान् (२.१२)। तेषु च केचिदव्यवस्थिताः। अपरे तु व्यवस्थिताः (२. १३)। काममेषां भावानां केचिद्यावच्चित्तं तावदन्तश्चित्ते विद्यन्ताम्। बहिर्वा चित्ताद्विद्यन्तां। यावल्लौकिकी ग्राह्यग्राहकस्थितिः सर्वे ते कल्पिता एव। नेहास्ति कश्चि-द्विशेषः (२. १४, १५)। कल्पनायां तु जीवस्तावत्प्रथममात्मानमेव कल्पयति। ततोऽन्यान्विविधान्भेदान् बाह्यानाध्यात्मिकान्वा (२. १६)। इयं च कल्पना तस्य यथाज्ञानं जायते। एवं च यथान्धकारेऽनिश्चिता रज्जुः सर्पधारादिभिर्भावैर्विकल्प्यते आत्माप्येवं विकल्पितो भवति (२. १७)। एवमेव च यथा निश्चितायां रज्ज्वां विकल्पो निवर्तते। रज्जुरेवेति चाद्वैतं भवत्यात्मनिश्चयोऽपि तथैव भवति (२. १८)॥ २०

किं पुनः स्वरूपं जीवस्य। विवृतमिदं गौडपादेन केनापि रमणीयेन दृष्टान्तेन (३. ३-९)। यथा महाकाशो घटाकाशरूपेणोदेति २५

---

६। "बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनैर्लुडितं चित्तमर्थाभासं प्रवर्तते॥" ल. अ. १०. १५०।

७। "चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं प्रवर्तते।
ग्राह्यग्राहकभावेन आत्मात्मीयं न विद्यते॥" ल. अ. ३. २१।

तथात्मापि जीवरूपेणोदेति। घटाकाशोदये यथा घटा एवं जीवात्मन उदये देहेन्द्रियादिसङ्घाता हेतवो भवन्ति। यथा महाकाशो घटैः सम्बन्धाद्घटाकाशरूपेणोत्पद्यत आत्मापि तथा देहेन्द्रियादिसङ्घात-सम्बन्धाज्जीपरूपेणोत्पद्यते। वस्तुतस्तु नेह जातिः। व्यवहारमात्र-
५ मिदम्। घटादिषु प्रलीनेषु यथा घटाकाशादय आकाशे सम्प्रलीयन्ते जीवा अपि तद्वदात्मनि। यथा चैकस्मिन्घटाकाशे रजोधूमादिभिर्युते न सर्वे घटाकाशा रजोधूमादिभिः सम्प्रयुज्यन्ते जीवा अपि तद्वन्न सर्वैः सुखादिभिः।

घटकरकापवरकप्रभृतीनां मृन्मयानां भाजनानां रूपाणि कार्याणि
१० नामानि च भिद्यन्ते। घटस्य यद्रूपं न तदेव करकस्यापवरकस्य वा। न वा घटेन यत्कृत्यं जलहरणादि क्रियते तदेव सर्वं करकेणापवरकेण वा। रूपाण्यप्येषां भिन्नानि। नाप्येषां नामान्येकान्येवेति। भिन्नेष्वप्येतेषु तु तदवच्छिन्न आकाशः पुनर्न भिद्यते। सर्वत्र हि स एवैक आकाशः। जीवेष्वपि स एव निर्णयो ज्ञेयः। तत्तद्रूपादिना जीवा भिद्यन्ते। न
१५ पुनस्तेष्वात्मा। यथा च भिन्नेष्वपि घटादिषु न कश्चिद्भेदो मृदि एवं भिन्नेष्वपि देहेषु नात्मनि कश्चिद्भेदः ( त. ज्वा., ८. ११ ; द्र. पृ. ५२ )। किञ्च। यथा घटाकाशो नाम नाकाशस्य विकारोऽवयवो वा एवं जीवोऽपि नैवात्मनो विकारो न वावयवः। किञ्च। यथा बालानां गगनं मलैर्मलिनं भवति अज्ञानामपि तथात्मा मलैर्मलिनः प्रतीयते। अन्यच्च।
२० यथा घटानामुत्पत्तौ विनाशे वा तेषामानयनेऽपनयने वा तदुपहित आकाशो न मनागपि विक्रियते आत्माप्येवं मरणादिषु सर्वास्ववस्थासु। अपरं च। घटसम्बन्धाद्यथाकाशो घटाकाश एवं सङ्घातसम्बन्धादात्मा जीवः ( ३. ३ )। न च सङ्घाता अपि वस्तुसन्तः। ते हि सर्वे स्वप्न-वदा"त्ममायाविसर्जिताः" (३. १०)। यदा चैते सङ्घाता एव न परमार्थतः
२५ सन्ति तदैतेषां कस्यचिच्छ्रेष्ठत्वे समत्वे वा सर्वेषां न विद्यते काप्युपपत्तिः ( ३. १० )। देहेऽस्मिन्नुत्तरोत्तरं पञ्च कोशा विद्यन्ते ( ३. ११ ; तै. उ. २. १. ६ ; द्र. पृ. ५३-५४ )। एषामन्नमयाद्यानामानन्दमयान्तानां यः परः सर्वान्तरतमः स परो जीवो मन्यते। प्रकटितश्चैष तथास्माकं शास्त्रे ( ३. ११ ) मधुविद्यायां च बृहदारण्यके ( २. ५ )।[८] अयं च

३० ८। ३. १२।

जीवात्मनोरभेदसिद्धान्तः स्तूयते। भेदश्च निन्द्यते। इदमेव च युक्त-मित्युच्यते (३. १३)। तदेतन्मूल एव द्रष्टव्यम् (पृ. ५७)।

सन्त्यनेकानि दर्शनान्या चा र्य स्य गौ ड पा द स्य ग्रान्यवश्या-गन्तव्यानि। तेषु पुनर्महिष्ठं च श्रेष्ठं च ब्रह्मविषयकमेव। तथाविधं-चेदमपूर्वमिव। अद्भुतमिवेदम्। अनौपनिषदमिव चेदं प्रतिभाति। नूनं चित्रीयत इवेदं चित्तमेतच्चेतयमानस्य। ५

उक्त आ चा र्ये णासकृन्मनसोऽमनीभावोऽमनस्ता वेति (३. ३१, ३. ३२)। अथ स एवाहा चा र्य इमाममनस्तामापन्नं मन एव ब्रह्म। नान्यत्तत्किञ्चनेति। उक्तं हि कण्ठत एव तेन (३. ३५)—

"लीयते हि सुषुप्ते तन्निगृहीतं न लीयते। १०

तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः॥" इति

तच्च चित्तम्। सुषुप्तावस्थायां मनो लीयते लयं प्राप्नोति मुह्यतीत्यर्थः। लयो नामेह निद्रावस्था। इयमेव च मूढावस्था योगशास्त्रे (द्र. पृ. ७०)। निगृहीतं निरुद्धं वा मनो न लीयते। न मुह्यतीत्यर्थः। तदेव च निगृहीतं मनः समन्ततो ज्ञानप्रकाशोज्ज्वलं सकृद्विभातं (३. ३६) १५ "प्रभातं" (४. ८१) सकृज्ज्योतिश्च (३. ३७)। सर्वथा निरुद्धं चित्तमेव ब्रह्मेति स पुनरपि सुस्पष्टमेवाह (३. ४६)—

"यदा न लीयते चित्तं न च विक्षिप्यते पुनः।

अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा॥" इति।[१०]

लयविक्षेपावन्यत्र विवृतौ (१. १३. १४; ३. ३५)। यदा चित्तं न २० लीयते मुह्यति तमःसमुद्रेकात्। न च पुनर्ध्यानालम्बनाद्विक्षिप्यते-ऽपकृष्यते। भवति चैव "मनिद्रमस्वप्नम् (१. १६; ३. ३६) तत-श्चानिङ्गनमचलं स्थिरं निवातनिष्कम्पप्रदीपकल्पम् (४. ८०)। अत एव चानाभासम्। आभास आकृतिरिति भावः। कस्मिंश्चिद्वस्तुनि चित्तेन गृहीते या तत्र तस्याकृतिः प्रतिभासते स आभासो दर्पण इव २५ मुखप्रतिबिम्बम्। सोऽयमीदृशः कश्चिदपि वस्त्वाभासो यस्य यत्र वा

९। ४ ७७—८१।

१०। पश्यतु कश्चिद्यदुक्तं प्राक् (३. ३९)।

नास्ति तदनाभासम्' तदा तदीदृशं चित्तं ब्रह्म निष्पन्नं भवति ।[११]

एतच्चात्रैव प्रथम मा ग म शा स्त्रेऽधिगतं यच्चित्तमेवेदं यन्निरोधादनिद्रं (१. १६ ; ३. ३६ ; ४. ८१ = अलीनम्=अमूढम् = )अस्वप्नम् ( १ १६, ३. ३६, ४. ८१= )अविक्षिप्तम्[१२] अनिङ्गनम् ( ३. ६= )अक्षिप्तम्' अनाभासम् ( ३. ४६ = )मनिराभासमनिराकारममरूपकम् ( ३. ३६ ) भवति । इदमेव च चित्तं सनिर्वाण[१३]मित्यप्युच्यते ( ३. ३७ )। इदमेव च निर्विकल्पम् ( ३. ३३ )। ततश्चासङ्गम् ( ४. ७२, ९६ ) = निःसङ्गम् ( ४. ७२. ९६ )=निर्विषयं च ( ४. ७२ ) ।[१४] इदं चेदृशं ज्ञानं ज्ञेयाभिन्नं ब्रह्म ( ३. ३१ ) ।

अन्यच्चेदमुक्तमिहा चा र्ये णा स्यामवस्थायाम् ज्ञानमिदं स्वस्थम् (३. ४७) आत्मसंस्थं ( ३. ३४ )[१५] वोच्यते इति । स्वस्मिन्नेव तत्तदा तिष्ठतीत्यर्थः । इदं च ब्रह्माचा र्य गौ ड पा द स्य बोधयति योगिनां कैवल्यम् । स्वरूपप्रतिष्ठां वा चिच्छक्तेः । यथोक्तं यो ग शा स्त्रे ( ४. ३४ )—

११ । प्रथमोऽर्धोऽस्याः कारिकायाः सूचयति यदस्पर्शयोगाधिगम्यायां ( ३. ३९-४९ ; ४. २ ) मस्यां मनसोऽवस्थायां न तत्र योगशास्त्रप्रसिद्धावस्था मूढा विक्षिप्ता च ( यो ग सू त्र व्या स भा ष्य म् , १. १ ) । अनिद्रास्वप्नशब्दाभ्यां च ते एवावस्थे ( ३. ३६, १. १६ ; ४. ८१ ) ।

१२ । वा च स्प ति मि श्र आह (यो. सो १. १) "मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमत् क्षिप्ताद्विशिष्ट"मिति ।

१३ । अत्र सनिर्वाणं मनो नाम अमनीभावः ( ३. ३१ ; मै. उ. ३४ ; यो वा. ३. ६७. ८.=अमनस्ता ( ३ ३२ , मु. उ. २. २१ )=उन्मनीभावः ( ब्रह्मबिन्दूप० ४ )=मनःक्षयः ( मै. उ ६. २० )=मनोनाशः ( मु. उ. २. १०, ३९, ३६, ३० ) =मनोलयः ( नादबिन्दु. उप. ४७ ) =अचित्तता ( मु. उ. २. २० ) =चित्तनाशः ( मु. उ. २. ३२, ३४, शाण्डिल्य. उप. अष्टोत्तरशतोप. पृ ३९८ ) ।

१४ । द्र. वृत्तिः, ४. ७२ ।

१५ । अत्रेदं स्मारयति ( छा. उ. ७. २४. १-२ ) "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा० स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ।"

"पुरुशार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेः।"

भवति च "तदा द्रष्टुः स्वरूपेऽवस्थानम्।"[१६] चिन्मात्रं हि विद्यते तदा। इयं चावस्था योगाचारविज्ञानवादिनां विज्ञप्तिमात्रता चाभिन्ना प्रतीयते। चित्तं मनो विज्ञानं विज्ञप्तिश्चानर्थान्तरम्।[१७] तस्माद्विज्ञप्तिमात्रता वित्रानमात्रता च नान्योन्यं मनागपि भिद्येते। अस्यां चावस्थायां परमा विनिवृत्तिर्मनोवृत्तेः। अयं च मनसोऽमनीभाव इति भावः।[१८] इयमेव च तन्मते मुक्तिः। तथा हि—

"विदित्वा नैरात्म्यं द्विविधमिह धीमान्भवगतं
समं तच्च ज्ञात्वा प्रविशति स तत्त्वं ग्रहणतः।
ततस्तत्र स्थानान्मनस इह न ख्याति तदपि
तदख्यानं मुक्तिः परम उपलम्भस्य विगमः॥" इति।

म. सू. अ, ११. ४७।

इदमेव च विष्णोः परमं पदम्।[१९] न केवलमौपनिषदा[२०] अपि तु वैष्णवा[२१] अप्येवं मन्यन्ते।

इदमत्र विचार्यम्। वैदान्तिकानां गौडपादस्य वा ब्रह्म नित्यम् (३. ३३)। तच्चेदेवमेव स्यात्कथमेतदुपन्यस्यते ब्रह्म च चित्तं च विज्ञप्तिमात्रतायामेकमेवेति। नेदमुपपद्यते। तथा हि। योगाचाराणां

---

१६। यो. सू. १. ३।

१७। वि. पू. ३ ; अ. को. २ ३४ ; म वृ. इ. ३०३ ; वि म. १९. ८२।

१८। "परम उपलम्भस्य विगम" इति म. सू. अ. ११. ४७; "अचित्तोऽनुपलम्भोऽसा"विति, त्रि. पू. २९ ; त्रि. नि. ३६। पूर्वोक्ता अमनस्तादयः शब्दा अस्यैव पर्यायाः।

१९। क. उ. १. ३. ९ ; मै. उ. ६-२६ ; ऋ. स. १. २२. १० ; १५४. ५ (स्तोकेन पाठभेदेन)।

२०। "यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत्।
तन्मनो विलयं याति तद्विष्णोः परमं पदम्॥" इति।

म. ब्रा. उ, १२।

२१। "तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा।
मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत्।
पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति॥" इति।

आ. पु. २. १. १९।

तच्चित्तं न कदाचिन्नित्यम्। अपि तु क्षणिकम्। न च तयोरैक्यं सम्भवतीति।

इहेदमित्थं समाधीयेत। प्रामाणिकेषु सौगतग्रन्थेषु[22] एते शब्दा निर्वाणार्थका लभ्यन्ते यथा ध्रुवम् अमृतम् अच्युतम् अजर्जरम् अपलोकितं (=अपरुग्णम्)[23] च।

नूनमेते शब्दा न कथञ्चिदपि क्षणिकत्वं बोधयन्ति। अपि तु यथा वा तथा वा भवतु किमपि कथञ्चित्स्थिरत्वं द्योतयन्ति। विज्ञप्तिमात्रतायां चित्तं दर्शनमार्गमारभ्य बहुरूपतया बहुधा वर्ण्यते[24]। तत्र चातिस्फुटेन वचसा ध्रुवत्वमप्यस्य कीर्त्तितम्।[25] कः पुनरत्र ध्रुवशब्दस्यार्थः। सन्ति निर्वाणस्य त्रयस्त्रिंशत्पर्यायाः।[26] तेषु मुख्यतया प्रायेण वा ध्रुवशब्द एव दृश्यते, क्वचिदेव तु नित्यशब्दः।[27] अवितथमिदं कदाचिन्नित्यध्रुवशाश्वतशब्दाः पर्यायत्वेन पठ्यन्त इति।[28] बुद्धघोष स्तेषामर्थमेवं

२२। यथा वि. म, पृ २२४; सु. निपा. ४. ३६९ इत्यादि। पोषणस्य निर्वाणम्, पृ. १९३-४।

२३। प्रपूर्वकाद् रुजेरिदं पदम्। न पुनर्लुकेः। यथा स्पष्टं पाक्षिसुत्तनिपाते बुद्धघोषेण कृतायामर्थकथायाम् (४. ३७०)। उक्तं तेन "अपलुज्जताय अपलोकितं"मिति। यशोमित्रस्य वाचापि (अ. को. व्या. पृ. २३) शक्यमेवद्वक्तुं रुजिरिह गृहीतो न लुकिरिति।

२४। यथा वसुबन्धुना (त्रि. २९—३०)—

> "अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
> आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः।
> स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः।
> सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः॥" इति।

२५। "स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः।" इति पूर्वत्रैव।

२६। सु. निपा. ४ ३६८-३७३; अ. प ६-९।

२७। यथाह बुद्धघोषः (सु निपा. १. १४२)।

२८। यथा वसुबन्धुस्त्रिंशिकायाम् (पृ ४४) माह "ध्रुवो नित्यत्वात्। अक्षयतया सुखो नित्यत्वादेव। यदनित्यं तद्दुःखम्। अयं च नित्य इति। अस्मात्सुखः।" ईदृशेषु च स्थानेषु नित्यशब्दो ध्रुवार्थको ग्रहीतव्यः। एतयोर्द्वयोर्भेदस्तु द्रष्टव्य उपरिष्टात्।

मन्यते ( सु. निपा. १. १२४. )। शाश्वतं नाम "सदा विद्यमानम्" ( विज्जमानं )। ध्रुवं नाम स्थिरम् ( सु. निपा. ४. ३७० )।[२८(क)]

आर्हता अप्येवमेवाभिप्रयन्ति। ते हि द्रव्यशब्दव्याख्यायां ध्रुवशब्दस्य ध्रौव्यशब्दस्य वा विवरणे तमेव सदृशमेव वा शब्दं प्रयुञ्जन्ति।[२९]

प्राचीनामुपनिषत्स्वात्मा ब्रह्म वा नित्यत्वेन न तु ध्रुवत्वेनोच्यते।[३०] ५

तत्खलु नित्यं यन्न सहते परिवृत्तिम्। ध्रुवं तु न तथा।[३१] तद्धि परिवर्तमानमपि तत्त्वान्न प्रच्यवते। यथा "सुवर्णं कयाचिदाकृत्या युक्तः पिण्डो भवति। पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते। रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते। अन्या चान्या चाकृतिः। सुवर्णं तु तदेवैकम्। तदिदं सुवर्णं न नित्यमपि तु ध्रुवम्।[३२] १०

नूनं क्षणिकमेव विज्ञानम् विज्ञानवादिनाम्। प्रतिक्षणं हि तत्परिवर्तमानमन्यच्चान्यच्च भवतीति। नेदमेकमभिन्नंवा। अपि त्वविच्छिन्नया सन्तत्या स्रोतसौघवत्प्रवर्तते। इयं च सन्ततिर्यावन्न निर्वाणं तावदनादिनिधना। एवं चेदमालयविज्ञानं सर्वं क्षणं प्रवर्तत इति ध्रुवं न पुनर्नित्यम्। १५

इदं चिन्तयितव्यम्। इह नित्यता त्रिविधा। तथा हि। कूटस्थनित्यता। यथा वेदान्ते वेदान्तिकानां ब्रह्मण आत्मनो वा। परिणामनित्यता। यथा साङ्ख्यानां प्रकृतेः। आर्हतानां च द्रव्यस्य। सन्ततिनित्यता। यथा सौगतानां विज्ञानस्य। यथा वा लोके नदीप्रवाहस्य दीपशिखाया वा। वस्तुतस्तु परिणामनित्यता सन्ततिनित्यता २० चान्योन्यमभिन्नैव मन्येत।

---

२८ (क)। "धुवंति थिरं।" "थिरट्ठेन ध्रुवं," सु निपा. ४. ३७०।

२९। त. सू ५ २९ ( "उत्पादध्रौव्ययुक्तं सत्" )। तत्त्वार्थराजवार्त्तिकम्, ५. २९। ( ध्रवं स्थिरम् ), प्रवचनसारे तत्त्वदीपिका ( उपाध्यायेन संस्कृता ) "ध्रौव्यमवस्थिति"रिति। पञ्चास्तिसमयसारे ( रायचन्द्र जैन ग्रन्थमाला, द्वि स ) तत्त्वदीपिका, १० : २५ "पूर्वोत्तरभावोच्छेदोत्पादयोरपि स्वजातेरपरित्यागो ध्रौव्यम्"; सन्मति तर्कः (गुजरात-पुरातत्त्वमन्दिरम्), गाथा २, पृ ४१० : "ध्रौव्यं स्थिति"रिति।

३०। दृश्यतां भ गी. १२. ३ : "कूटस्थमचलं ध्रुवम्"।

३१। द्र ४. १२। ३०

३२। अयमर्थश्चिन्तितः सविस्तरमन्यत्र। द्र. ४. ११-१२ (पृ. ११०-१११)।

द्रष्टव्यतामयं श्लोको धृतो जयतीर्थेनाभिनवगुप्तकृतस्य तन्त्रालोकस्य (काश्मीरग्रन्थमालायास्तृतीये खण्डे, पृ. ३५) स्वटीकायां धृतः—

"प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः।
५ तेषामपाये सर्वार्थं तज्ज्योतिरविनश्वरम्॥ इति।

इह चित्त "मविनश्वरं ज्योति"रित्युच्यते।[३४]

इह "चित्तमविनश्वरं ज्योति"रुच्यत इति चिन्त्यम्।[३४] एवं चेदं शक्यं वक्तुं गौडपादस्य ब्रह्मेति चित्तमिति च विज्ञप्तिमात्रतायां योगाचाराणां वस्तुतो नात्यन्तं भिद्यते। अपि तु स भेदो
१० ऽत्यल्पक एव। स च ध्रुवत्वरूपनित्यत्वकृतः। ध्रुवत्वं नित्यत्वं च पूर्वं चिन्तितम्।

अजातिवादं प्रतिपिपादयिषताचार्येण गौडपादेनागमशास्त्रे पूर्वमेव प्रदर्शितो विज्ञानवादः। अयं च कश्चिन्महार्थो गौडपाद-दर्शनस्य। कोऽयमिति प्रथमं तृतीये प्रकरणे (३. २) ततश्च चतुर्थे
१५ प्रकरणे (४. ५) स्वयं स प्रख्यापयति समुपन्यस्यति च (४. ७१)—

"एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते।"

इति। विस्तरः पूर्वमेव प्रदर्शितः। इह तु द्वित्राणि गुरूणि वचांस्युच्यन्ते।

चिन्तितोऽयमर्थ आचार्येण वैदान्तिकदृष्ट्या द्वयोः स्थानयोः।
२० यथोक्तं प्राग् द्वितीये चतुर्थे च प्रकरणे। तत्राद्यो विशुद्धया वेदान्तदृष्ट्या

---

३४। द्रष्टव्यामीहैतानि वचांसि—

(क) "तत्रोत्पन्नप्रध्वंसि विज्ञानम् अनुत्पन्नप्रध्वंसि ज्ञानम्", ल. सू. पृ. २९७।

(ख) "अनादिनिधना शान्ता सर्वधर्मेश्वरी च सा।
बिभ्रती सर्वरूपाणि सत्यद्वयसमाश्रिता॥"

३० ज्ञानसिद्धिः १९. ९० (गो. ओ. सी.), पृ. ८९.

अत्र चित्तधारा परामृश्यते।

(ग) तत्रैव। पृ. ७९, "अनादिनिधनं शान्तं बोधिचित्तम्"।

(घ) तत्रैव। पृ. ८६, "ज्ञानममरणम् अनभिलप्यम्।"

३५ (ङ) सुजुकिनास्वकीये महायानबौद्धधर्मसारे (आउटलाइनस् अफ महायानबुद्धिजिम्), पृ. ३४८।

समर्थ्यते तेन स्वमतं श्रुतिभिर्युक्तिभिश्च तत्प्रतिष्ठिताभिस्तदनु-कूलाभिर्वा। एतासु च युक्तिषु काश्चित्स्फुटं सौगतानां तत्सदृश्यो वा। अत्र सदसदुभयं वा किञ्चिन्न जायते। अतोऽजातिरेव तत्त्व-मित्यद्वयवादिनो ( =बौद्धाः )। एतदेव चानुमोदतेऽस्माक मा चा र्यः (४. ४, ५)। पश्यति च स नात्र किमपि कारणं विवादस्य। प्रदर्शयति ५ च युक्तिपरम्परामाप्रकरणसमाप्तेः (४. १००)। अलमिह तत्कथनेन। इमाश्च युक्तयो बौद्धानाम्। गृहीताश्च तास्तेषां प्रामाणिकेभ्यो ग्रन्थेभ्यः। तदेतत्स्पष्टमस्यां वृत्तौ। अथ प्रसरति स आ चा र्यः समग्रे चतुर्थे प्रकरणे प्रदर्शयितुं युक्तीर्बौद्धानामेव। किं बहुना। स तेषां स्वकीयानि वचांस्यप्युद्धरति। तदेतद्वृत्तावेव द्रष्टव्यम्। १०

अयं तु कश्चिदर्थो निर्देष्टव्योऽत्र। आ चा र्ये ण चतुर्थे प्रकरणे न किञ्चिद्वेदान्तगतं साक्षाच्चिन्तितम्[३९]।

न खलु तत्र किञ्चिदुपलभ्यते तादृशम्। सोऽस्माकमा चा र्यः स्वमतेन तत्र किञ्चिद्वेदान्तसदृशं विवृण्वंस्तृतीये प्रकरणेऽजातिवादं प्रतिष्ठापयति। यथेदं दृष्टमस्माभिः प्राक्। ततश्चतुर्थे प्रकरणे स आचार्यो बौद्धान्परामृश्य १५ तमेवाजातिवादं समर्थयते। नात्र वैदान्तिकानां किमप्यस्ति गौ ड पा द-श्च ब्रवीति ( ४. ५)—

"ख्याप्यमानामजातिं तै रनुमोदामहे वयम्।
विवदामो न तैः सार्धमविवादं निबोधत॥" इति।

स्पष्टमिदमेतस्मात्प्रतीयेत अद्वयमतमिति यदिहोक्तं गौ ड पा दे न २० चतुर्थे प्रकरणे तत्तेन गृहीतमनुमोदितं वा। इदं तु कश्चित्पृच्छेत् ' अपि नामेवं सर्वथापि तथा। सौगताः खलु मध्यमकवादिनो मध्यमं पन्थानमनुसरन्ति परिहृत्य द्वावप्यन्तौ। यथा शाश्वतवादमुच्छेदवादं च। तदेतदतिस्पष्टं मूले ( ४. ५७-६० )। कथं पुनर्वैदान्तिको गौ ड पा द इदमभ्युपगच्छेत् यदा स स्वेन वचसा ब्रह्म नित्यमित्याह ( ३. ३३ )। २५ अत्रा चा र्यो मध्यमकमतमनुसरन्निव प्रतीयते। स्यादेतत्। गौ ड पा-दे ने ह बौद्धमतमात्रं प्रकाशितम्। यथा कृतमन्यत्र ( ४. ९० )।

अन्यच्चेदं विस्मयमावहति। सन्ति कानिचिन्मतानि यान्याचा र्ये ण विमृष्टानि प्रतिष्ठापितानि च। न त्वेतानि श्रेष्ठेषु प्रसिद्धेषु च वेदान्तग्रन्थेषु

---

३९। किमधिकेन। नात्र ब्रह्मशब्दोऽप्यात्मशब्दोऽपि वा दर्शनपथमापतेत्। ३०

दृश्यन्ते। किं बहुना। अद्वैतमतपोषकेष्वपि तेषु नोपलभ्यन्ते तानि। यथावस्थाविशेषापन्नस्य चित्तस्य ब्रह्मत्वम्। अजातिवादः। सर्वज्ञत्ववादः (४. ८५, ८६)। विज्ञानवादश्च। किञ्चानुमोदते गौडपादो ऽद्वयवादिनां (बौद्धानां) मतम्। शङ्करो ऽप्येतानि मतान्यभ्युपगच्छन्न प्रतीयते। आगमशास्त्रस्याद्यैस्त्रिभिः प्रकरणैर्मायावादः परं प्रकर्षमवाप्त इति कृतं कथनेन। तस्याध्यासवादस्तु यथा विवृतस्तेन शारीरकभाष्ये ऽन्यत्र च न तथा दृश्यत आगमशास्त्रे यद्यपि ज्ञायेत कश्चिद्विप्रकृष्टस्तत्संसर्गः।

बौद्धविज्ञानवादः कियत्प्राभवदाचार्यस्य गौडपादस्येति त्रिस्वभावं विवृण्वानः स्वयमेव स (४. ७४) स्फुटं प्रकटयति।

सन्त्याचार्यस्य परारायपि दर्शनान्यनेकानि यानि स्वातन्त्र्येण विमर्शनीयानि। भूयस्त्वभिया तु न तानि तथा क्रियन्ते। स्वयमेव तु सन्तस्तान्यवलोकयन्तु मूलाद्विशेषेण तु चतुर्थात्प्रकरणाद् वृत्तेश्चाभिनवायाः। वृत्तिकारोऽत्र बहूनस्पष्टानर्थान्स्पष्टयितुमयतत। पूर्णा तु सिद्धिरासादिता तेनेति न सोऽपि मन्तुमर्हति। एतत्तु सन्तोऽवगमिष्यन्ति कियन्नाम सौगताः प्राभवन्नाचार्यस्य गौडपादस्य कियच्च स तेषां सिद्धान्तः संन्यकृष्यत वेदान्तस्येति।[३६]

— —

३६। पश्यतु कश्चिद् भावप्रकाशं तत्त्वमुक्ताकलापस्य द्वितीयखण्डे, पृ. ४१९, आ. शा. ४. ११-१६)—

"ननु माण्डूक्यकारिकासु गौडपादाचार्यो माध्यमिकोक्तयुक्तिभिः कार्यकारण("कार्याकारण" मित्यशुद्धं मुद्रितम्) भावस्य सांवृतत्वं स्थापित"मिति।

ॐ

"योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥"[१]

५ नम ऋषिभ्यः । नम आचार्येभ्यः ।

॥ इति वृत्तिकृतो मङ्गलाचरणम् ॥

---

१ । श्रीध्रुवस्य । भा. पु ४. ९. ६ ।

गौडपादीयम्

# आगमशास्त्रम्

## प्रथमं प्रकरणम्

### आगमः

भगवद्गौडपादाचार्यस्य कृतेरागमशास्त्रस्य मयेयं समासतः काचिदभिनवा वृत्तिः क्रियते।

बह्वत्र चिन्तनीयं चिन्तितमवतरणिकायाम्। तत्तत्रैवावगन्तव्यम्।

अथ परमपुरुषार्थप्राप्तये प्रतिपत्तव्य आत्मेत्यागमे प्रथमे प्रकरणे स आत्मा तत्प्रतिपत्त्युपाय ओङ्कारस्तदुपासनं च निरूप्यते। सोऽयमात्मात्यन्तं दुरवगमः पुरुषेणासंस्कृतचित्तेनेत्याचार्य उपनिषदम् (छा. उ. ८. ७. ३-४) अनुसृत्यारुन्धतीदर्शन[1]न्यायात्क्रमेण स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमानां वस्तूनां दर्शनं सुकरं भविष्यतीति तथैव तत्प्रतिपादनायोपक्रमते। तत्र सन्ति पुरुषस्य प्रसिद्धास्तिस्रोऽवस्था जाग्रत्स्वप्नसुषुप्तरूपाः। अस्ति चैतत्त्रितयातीता तुरीयावस्था। यद्यप्यात्मा वस्तुत एक एव तथाप्येष तास्तिस्रोऽवस्था अपेक्ष्य शरीरेऽस्मिंस्त्रिधा प्रतीयते यथैक एवाकाशो घटाद्युपाध्यपेक्षया घटाकाशादिरूपेणावभासते। त एते त्रय आत्मान आदौ क्रमेण प्रदर्श्यन्ते—

बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थितः ॥१॥[2]

---

१। अयं न्याय आचार्यशङ्करेणेत्थं प्रदर्शितः स्वभाष्ये (छा. उ. ८. १२. १) "छायाद्यात्मनां चोपदेशे प्रयोजनमाचक्षते। आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यन्तबाह्यविषयासक्तचेतसोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति। यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कञ्चित्प्रत्यक्षमादौ दर्शयति पश्यामुमेष चन्द्र इति। ततोऽन्यं ततोऽप्यन्यं गिरिमूर्धानं च चन्द्रसमीपस्थमेष चन्द्र इति। ततोऽसौ चन्द्रं पश्यति। एवमेतस्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैरिति।"

२। १. २।

सर्वा अपि प्रागुक्ता अवस्था व्याप्नोतीति व्यापको **विभुः** स आत्मा यदा जाग्रदवस्थायां बाह्यान्विषयानुपलभत इति **बहिष्प्रज्ञ**स्तदा विश्वेषां पिण्डात्मना गोचरत्वाद् **विश्व** इत्युच्यते। एष एव चान्यत्र (मा. उ. ३) वैश्वानर इत्युक्तः। अस्यापि स एवार्थोऽभिप्रेतः।[३]
५ आगमशास्त्र मूले (बृहदारण्यके ४. २. २) पुनः स एष आत्मा इन्द्र इति वक्तव्ये परोक्षेणेन्ध इत्युच्यते।[४] अत्रायं शारीर एवात्मावगन्तव्यः। यदा त्वात्मा स्वप्नावस्थायामान्तरानेव विषयानुपलभत **इत्यन्तःप्रज्ञस्तदा तैजसो** नाम। जागरिते हि विषयप्रतिभासाय सूर्यादिरूपं यत्किमपि बाह्यं तेजोऽपेक्ष्यते। स्वप्ने तु न
१० तथा। अत्र ह्यात्मनः स्वेनैव तेजसा ज्योतिषा विषयाः प्रतिभासन्ते।[५] अथ सुषुप्तावस्थायामात्मानमाह **घने**ति। यदा सुषुप्ते प्रज्ञा प्रज्ञानमिदं तदन्यदित्यादिरूपं सर्वं ज्ञानं घनीभूतमिवाविविक्तं "यथा रात्रौ नैशेन तमसाविभज्यमानं सर्वं घनमिव"। तदा तदवस्थ आत्मा प्राज्ञस्तादृशज्ञानत्वात्। एवमेक एवात्मा त्रिधा स्थितः॥[६]

---

१५ ३। "विश्वश्चासौ नरश्चेति विश्वानरः। विश्वानर एव वैश्वानरः। पिण्डात्मानन्यत्वादिति" शङ्करः (मा. उ. ३)।

४। "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैवेति। परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष" इति सुप्रसिद्धमुपनिषत्सु (बृ. उ. ४. २. २.)। अत्राह सुरेश्वरः (बृ. भा.
२० वा. ४. २. ३७, पृ. १३६४)—

"प्रत्यक्षनामग्रहणं प्रद्विषन्ति जगत्यपि।
श्रेयांसोऽमुकमिश्रास्त इत्युक्तं कामयन्ति च॥"

वङ्गेषु स्त्रियः पत्युर्नाम न गृह्णन्ति। प्रायेण हि तास्तदर्थम् अमुक इति शब्दं प्रयुञ्जते। अत्र इन्धनादिन्धः। इन्धनं प्रकाशः। यतोऽयमात्मा
२५ स्थूलविषयान्प्रकाशयति बहिष्प्रज्ञत्वादत इन्धः। तदुक्तं तत्रैव सुरेश्वरेण—
"इध्यतेऽहर्निशं यस्मादिन्धनात्मा ततः पुमान्॥" इति।
आविष्कृतश्चास्यायमर्थं आनन्दगिरिणा तत्र "स्थूलार्थभोक्तृत्वेन सदा जागरे स्फूर्तेरिति।"

५। "स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य
३० स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति।" बृ. उ. ४. ३. १-९। पुनस्तत्रैव (४. ३. २३) "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्।"

६। १. २।

अथैतेषामात्मनां स्पष्टप्रतिपत्तये स्थानान्युच्यन्ते। तत्र प्रथमं शारीरस्यात्मनः स्थानम्—

दक्षिणाक्षिमुखे[1] विश्वो मनस्यन्तस्तु तैजसः।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥२॥[2]

यः स जाग्रदवस्थः शारीर आत्मा **विश्वो** नाम स **दक्षिणाक्षिमुखे** दक्षिणचक्षुर्गोलकाग्रभागे प्रतिबिम्बित इति भावः। क नु खलु विश्वो नामात्मेत्यात्मानं दिदृक्षुः पुरुष आहूयोच्यते। एहि। इदं मे दक्षिणं चक्षुः। पश्यैनत्। किमिह पश्यसीति। नूनं स तत्रात्मानमेव प्रतिबिम्बितं पश्येद् ब्रूयाच्च तथा। स खलु प्रदर्शयिता चक्षुषि प्रतिबिम्बितं पुरुषमुद्दिश्य पुनस्तं वदेदयं स आत्मा यं त्वं दिदृक्षस इति। तेदतदुपायकौशल्यमृषीणाम्[3]। विवृतं चैत च्छा न्दो ग्ये ( ८. ७—१२ ) प्रजापतीन्द्रविरोचनसंवादे। प्रतिबिम्बरूपेण शारीरस्यात्मनः प्रदर्शनं न केवलं दक्षिण एवाक्षण्यभप्रेतमपि तु वामेऽपि ( बृ. उ. ४. २. ३ )। दक्षिणोक्तिस्तु पुरुषस्य दक्षिणाङ्गस्योत्कर्षविशेषविवक्षया ( बृ. भा. वा. ५. २. ३७-३८ ; पृ. १३८५)। न चैतदस्ति केवलमक्षण्येवाग्रं पुरुषो दृश्यत इति। किन्तु बिम्बग्रहणसमर्थेषु येषु केषुचिदपि पदार्थेषु। यथादर्शेऽप्युदशरावेऽपि (छा. उ. ८. ७. १२) खड्गादिष्वपि ( छा. उ. ८. ७. ४ श. )। सोऽयं शारीर आत्मा छायारूपेणाक्षणि दृश्यत इति शङ्करेण क्वचित् ( छा. उ. ८. ७. ४ ) अक्षिपुरुष इति कच्छिायात्मेति कच्छिायापुरुष इति ( ८. १. ) क्वचित्पुनः शारीरात्मेत्युच्यते ( बृ. उ. ४. २. ३, पृ. ५१५ ; ४. ३. १, पृ. ५१८ )। स एवाचार्योऽन्यत्र ( छा. उ. ८. २. १-२ ) तैजसं स्वप्नात्मेति प्राज्ञं च सुषुप्तस्थ इत्याह (८. ११. १-२)। तुर्यः पुनरुपनिषदि (छा. उ. ८. १२. ३)

---

१। कौ. उ. ४. १७ ; मै. उ. ७. २ ; छा. उ. ४ १५. १, ७. ७. ४ ; बृ. उ. २. ३.४, ४. २. २, ५. ५. २, ४।

२। १. १।

३। द्रः टिप्पणी १।

उत्तमः पुरुष इति युक्तमुच्यते ।[1] अत्रोत्तमशब्दो नैकान्तेनोत्कृष्टवाची किन्तु चरमवाची । यस्मात्परं नापरं किञ्चिदस्ति तदुत्तमम् । तुरीयादात्मनो नापर आत्मेति स उत्तमः ॥

अथ त्रयाणामात्मनां त्रिविधं विषयानुभवं दर्शयति—

५ विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् ।[2]
आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥३॥

स्थूलान्बाह्यान्विषयान्भुङ्क्त इति स्थूलभुग् विश्वः । प्रविविक्तं सूक्ष्मम् । स्वप्ने स्थूलविषयाभावात् । तत्र ह्यसन्त एव रथादयः कल्प्यन्ते । ते च मनोमयत्वात्सूक्ष्माः । सुषुप्ते तु मनोमयानामपि विषयाणामसद्भावाद् १० आनन्दस्वरूपस्य स्फूर्तेः प्राज्ञ आनन्दभुक् । इत्थं भोगस्त्रिविधः ॥

स एवार्थोऽन्यथा वर्ण्यते—

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ॥४॥

यः पुमानेतत्तत्त्वं वेद स विषयोपभोगेन न बध्यत इत्याह—

१५ त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्त्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥५॥[3]

**त्रिषु धामसु** जाग्रत्स्वप्नसुषुप्तेषु स्थानेषु ॥

इहान्तरा पञ्चमीं षष्ठीं च कारिकामेकानेका वा कारिका कुतोऽपि त्रुटितेति प्रतिभाति । अनयोर्मिथोऽसम्बन्धात् ।

२० अथ प्रत्यक्षं प्रतीयमाना सृष्टिर्वक्तव्येति तत्र विदुषां साधारणं सिद्धान्तं दर्शयित्वा कमपि विशेषमाह—

---

१ । उक्तं च श्रीभगवद्गीतायां ( १५. १७-१८ )—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
२५ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

नात्र काचिदुदाहृता श्रुतिः शङ्करेण । श्रीधरेणोदाहृतापि न सा साधीयसी ।

२ । बृ. उ. ४. २. ३ ।

३ । चि. वि., पृ. २७ ।

**प्रभवः सर्वभूतानां सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोंऽशून्पुरुषः पृथक् ॥६॥**

अस्ति सर्वेषां भूतानां **प्रभव** उत्पत्तिरिति **सतां विनिश्चयः** । तत्र केचिदाहुः **प्राणः पुरुषः** प्रज्ञात्मा ( कौ. उ. ३. १-८ ; ब्र. सू. ३. १. २३, २८ ) **सर्वं जनयति** । तज्जनितं च सर्वं **पृथक्पृथग्वस्तु चेतोऽंशवः** । चेतश्चित्तं मनो विज्ञानमिति पर्यायाः । अतश्चेतसो विज्ञानस्यांशवः किरणा आभासाः । चित्तमेव हि तत्तदाकारेण पृथक्प्रकाशत इति भावः । "चित्तस्पन्दितमेवेद"मित्युत्तरत्र ( ४. ७२ ) वक्ष्यते व्याख्यास्यते च । स एवार्थोऽत्र भङ्ग्यन्तरेणोक्तः । यथा सूर्यकिरणाः शक्रधनुरात्मना विचित्रैर्वर्णैः प्रकाशन्ते तथा चित्तस्पन्दितानि विविधवस्त्वाकारेण । इदमेव स्वमतमाचार्यस्य । तच्चोपरिष्टात्स्पष्टीभविष्यति ॥

:

अथ सृष्टावन्येषां मतान्याह—

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥७॥**

**विभूतिर्बहुभाव** आत्मनः (तै. उ. २. ६. १. ) । **प्रसव** उत्पत्तिः । **अन्यैः** कैश्चित्स्वयूथ्यैः सौगतैश्च माध्यमिकैर्योगाचारैश्च ॥

**इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥८॥**

**प्रभोः** सत्यसङ्कल्पत्वात् (छा. उ. ३. १४. २ ) **इच्छामात्र**मित्यौपनिषदानां मतमित्याह रामानुजानुगः कूरनारायणः । **कालादि**ति ज्योतिर्विदः । श्वे. उ. १. १ ; मै. उ. ७ ; म. भा. ११. २२४. २२७ ; ष. स. १०-११ ; अ. स. १९. ५३-५४ ( कालसूक्तम् ) ॥

अथ सृष्टेः प्रयोजनमुच्यते—

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥९॥

**भोगार्थ**मित्युच्यते यथा "आत्मैवेदमग्र आसीदेक एव। सोऽकामयत
५ जाया मे स्यादथ प्रजायेय। अथ वित्तं मे स्यादथ कर्म कुर्वीयेति" (बृ. उ. १. ४. १७)। "अविद्योपाधेर्जीवस्य भोगार्थमीश्वरः सृष्ट्यादि करोतीति" श्री ध र स्वा मी (भा. पु. ३. ७. ४)। "हरेरतृप्तस्यैव भोगार्थं सृष्टि"रिति कू र ना रा य णः। रामानुजीयं मतमिदमिति म ध्वा चा र्या नुगः श्री नि वा स ती र्थः (मा. उ.)। **क्रीडार्थ**मितीह "विश्वक्रीडारतिर्देव"
१० इति (मै. उ. ६. १) "लोकवत्तु लीलाकैवल्य' मिति च (ब्र. सू. २. १. ३३) द्रष्टव्यम्। **आप्तकामस्ये**तीह द्रष्टव्यम् बृ. उ. ४. ४. ६ ॥

अत्रापि पूर्वोत्तरयोः कारिकयोः स्वारसिकसम्पर्कादर्शनादेकानेका वा कारिका त्रुटितेति प्रतिभाति ॥

जाग्रदादिस्थाना विश्वादयस्त्रय आत्मान उक्ताः। अथ
१५ तत्तत्स्थानातीतस्तुरीय आत्मोच्यते। तुर्यस्तुरीयश्चतुर्थ इत्यनर्थान्तरम् ॥

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।

अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥१०॥

स खलु द्योतनाद्**देवस्तुर्य**श्चतुर्थ आत्मा सर्वव्यापनाद्**विभु**र्व्यापी **स्मृतः**। स च **सर्वदुःखानां निवृत्तेरीशानः** समर्थः। अत एव
२० **प्रभुः**। न मनागपि स्वरूपाद् व्येतीति व्यपगच्छतीत्य**व्ययः**। **अद्वैत**श्च **सर्वभावानां** मध्ये। सर्वभावेष्वयमेवैको विद्यत इति भावः ॥

अथोक्ता विश्वादयश्चत्वारोऽपि सविशेषं विविच्यन्ते—

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।**

**प्राज्ञः कारणबद्धस्तु द्वे तु[1] तुर्ये न सिध्यतः ॥११॥**

**कार्य**मन्यथाग्रहणम्। **कारणं** तत्त्वाग्रहणम्। जागरिते स्वप्ने चात्मा न केवलं तत्त्वमेव ग्रहीतुं नेष्टे अपि तु तत्त्वमप्यन्यथा गृह्णाति। ५ अतस्तयोर्द्वयोरवस्थयोरात्मानौ विश्वतैजसौ कार्यकारणबद्धौ। सुषुप्ते तु तत्त्वाग्रहणमात्रं नान्यथाग्रहणमपि। "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्त"मिति हि सुषुप्तं (बृ. उ. ४. ३. १९; मा. उ. ५) वर्णयन्ति। अतः **प्राज्ञः कारणबद्धः। तुर्ये तु द्वे** अपि ते कार्यकारणे न **सिध्यतः** सिद्धिं प्राप्नुतः। तदुक्तमुपरिष्टात् १० (१. १५)। द्रः प. सा (क). ३१; प. सा (ख). ३४. ३५; नै. सि. ४. ४१, ४२ ॥

अथ प्राज्ञाद्भेदं दर्शयित्वा तुर्यस्य स्वरूपमाह—

**नात्मानं न परांश्चैव न सत्यं नापि चानृतम्।**

**प्राज्ञः किञ्चन संवेत्ति तुरीयः सर्वदृक्सदा ॥१२॥** १५

**नात्मानं° संवेत्ती**ति। तदुक्तम् (बृ. उ. ४. ३. २१) "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं वेद नान्तर"मिति। **तुरीयः** पुनः **सर्वदृक्** (४. ८४) सर्वज्ञ इति भावः। एतच्च सर्वदृक्त्वं सर्वज्ञत्वं वा तच्छक्तिमत्त्वेनैव। तदुक्तं शङ्करेण (ब्र. सू. १. १. ४) "सर्वज्ञानशक्ति-मत्त्वेनैव सर्वज्ञत्वमभ्युपगन्तव्य"मिति। "सर्वज्ञत्वलक्षणया प्रज्ञया २० नियतमवियोगा"दिति च (ब्र. सू. १. ३. ४२) ॥[2]

---

१। द्वौ तावित्यन्यत्र पाठः।

२। अयमर्थः सौगतैरेवं वर्णितो मिलिन्दनागसेनसंवादे (मि. प, पृ. १०२)—

"भन्ते नागसेन बुद्धः सर्वज्ञ इति।" २५

"ओं महाराज भगवान्सर्वज्ञः। न च भगवतः सततं समितं ज्ञानदर्शनं प्रत्युपस्थितम्। आवर्जनप्रतिबद्धं भगवतः सर्वज्ञत्वज्ञानम्। आवर्ज्य यदिच्छकं जानातीति।"—छाया।

अथ प्राज्ञतुर्ययोर्मिथो भेदो दर्श्यते—

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।**

**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥१३॥**

**उभयोः प्राज्ञतुर्ययोर्द्वैतस्याग्रहणं तुल्यं** समानम् । तथाप्यस्ति तयोर्मिथः कश्चिद्भेदः । तथाहि । **प्राज्ञो बीजनिद्रायुतो** भवति । विद्यते प्राज्ञे बीजभूता निद्रा । **सा च तुर्ये न विद्यते ।** न खलु तुर्यो बीजनिद्रायुतो भवति । अत्र निद्रा नाम तत्त्वाप्रतिबोधो "निद्रा तत्त्वमजानत" इत्युक्तेः (१. १५) । सा च स्वप्ने जागरे च विशेषप्रतिबोधस्य कारणमिति बीजम् । तदुक्तम् (उ. सा. १७. २६ ; नै. सि. ४. ४३)—

"सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।
आत्मबोधाग्निदग्धं स्याद्बीजं दग्धं यथाभवम् ॥"

इति । सेयं बीजनिद्रा नास्ति तुर्ये तस्य सर्वदा सर्वदृक्स्वरूपत्वात् ॥

स एवार्थः पुनर्विव्रियते—

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।**

**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥१४॥**

**आद्यौ** विश्वतैजसौ । **स्वप्नो**ऽन्यथाग्रहणम् (१. १५) । विक्षेपवृत्तिरिति भावः । इदमेवान्यत्रा चा र्ये ण "विक्षिप्त"मिति (३. ४२, ४३) 'विक्षिप्यत" इति (३. ४६) चोपरिष्टादुक्तम् । **निद्रा** तत्त्वाप्रतिबोधः । सा चा"भावप्रत्ययालम्बना वृत्तिः" (यो. सू. १. १०) । व्याख्यातं चैतदित्थं तत्र भो ज दे वे न "अभावप्रत्यय आलम्बनं यस्या वृत्तेः सा तथोक्ता ।° या सन्ततमुद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्तते वृत्तिः सा निद्रेति ।" इयमेव निद्रा लयावस्था (३. ३५, ४६)[१] मूढावस्थेति च प्रसिद्धा (यो. सू. १. १, भाष्यम्) । ताभ्यां **युतौ तावाद्यौ**

१ । उक्तं चा चा र्ये ण "लीयते हि सुषुप्ते तन्निगृहीतं न लीयते" इति (३. ३५), "यदा न लीयते चित्तं न च विक्षिप्यते पुन"रिति च (३. ४६) ।

विश्वतैजसौ। उभयोरपि वृत्त्योस्तयोः सद्भावः। **निश्चिताः** जातनिश्चयास्तत्त्वविदः **पुनस्तुर्ये न निद्रां** नैव च **स्वप्नं पश्यन्ति** ॥

अथाचार्यः स्वयमेव स्वप्ननिद्रास्वरूपमुक्त्वा तादृशविपर्यासापगमे तुरीयावस्थाधिगममाह—

**अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥१५॥** ५

**तत्त्वमन्यथा गृह्णतः** पुरुषस्य **स्वप्नो** भवति। न वस्तुतः स्वप्नोऽपि तु स्वप्नवत्स्वप्नः। तत्र हि यद्वस्तु यथा न तत्तथा गृह्यतेऽपि त्वन्यथा। एवं **तत्त्वमजानतः** पुरुषस्य निद्रेव **निद्रा**। सा च योगे "अभावप्रत्ययालम्बना वृत्तिः" (यो. सू. १. १०) यथा दर्शिताधस्तात् १० (१. १४)। इयमेवान्यत्र (३.३५, ४६) योगशास्त्रोक्ता (यो. सू. १.२ व्यास.) लयावस्था मूढावस्था[1] च। स्वप्नशब्देन तु विक्षेपावस्था ज्ञेया। **तयोः** स्वप्ननिद्रयो**र्विपर्यासे** तत्त्वाप्रतिबोधान्यथाग्रहणरूपे **क्षीणे** सति **तुरीयं पदमश्नुते** तुरीयावस्थामधिगच्छति[2]। यद्यपि स्वप्नो विपर्यासोऽन्यथाग्रहणरूपत्वान्न पुनर्निद्रापि तथा तथाप्युपचारान्निद्रापीह १५ विपर्यास इत्युक्तम् ॥

पुनरपि तुरीयावस्थामेव विवृणोति—

**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।**
**अजमनिद्रमस्वप्न[3]मद्वैतं बुध्यते तदा ॥१६॥**

**अनादिमायया** अनादिकालप्रवृत्तया तत्त्वाप्रतिबोधान्यथाग्रहण- २० लक्षणया। निद्रास्वप्नशब्दौ पूर्वं (१. १४, १५) व्याख्यातौ व्याख्यास्येते चोपरिष्टात् (३. ३६ ; ४. ३१) ॥

उक्तो बोधोऽद्वैतस्य परमार्थस्य। अथ द्वैतं न वस्तुसत्। माया-मात्रं हि तत्। अतो न तस्य प्रवृत्तिर्निवृत्तिर्वा। न हि वन्ध्यापुत्रो वस्तुतः प्रवर्तते निवर्तते वेत्याह— २५

---

१। "मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमदिति" वा च स्प तिः (यो. द. १. १)।

२। मै. सि. ४. ४२ ; उ. सा. १७. २६।

३। ३. ३६, ४. ८१।

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥१७॥

प्रपञ्चशब्द एवं व्याकृत श्च न्द्र की र्ति ना ( म. वृ., पृ. ३५० )—
"ते च विकल्पा अनादिमत्संसाराभ्यस्ताज्ज्ञानज्ञेयवाच्यवाचककर्तृकर्मक्रिया-
५ घटपटमुकुटरथरूपवेदनास्त्रीपुरुषलाभालाभसुखदुःखयशोनिन्दाप्रशंसादिल-
क्षणाद् विचित्रात्प्रपञ्चादुपजायन्त" इति। पुन स्तत्रैव (पृ. ३७३) "प्रपञ्चो
हि वाक् प्रपञ्चयत्यर्थानिति कृत्वा।" अन्यत्स्पष्टम्॥

स एवार्थोऽन्यथा विव्रियते—

विकल्पो विनिवर्तेत[1] कल्पितो यदि केनचित्।
१० उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥१८॥

एष द्वैतप्रपञ्चरूपो **विकल्पो** मिथ्याप्रत्ययो **विनिवर्तेत** स्याद्यदि स **केनचित्कल्पितः।** न पुनर्वस्तुतः केनचित्कल्पितः। यतो घटपटादिरूपो गुरुशिष्यादिरूपो वा वादः केवलमुपदेशायाज्ञानाम्। तदेतत्स्पष्टं यो ग वा सि ष्ठे (३. ८४. १६-२७) यत्र ( २५, २७ ) अर्थतः
१५ शब्दतश्च समुद्धृतमस्याः कारिकाया अन्तिममर्धम्। यथा—

"उपदेशाय शास्त्रेषु जातः शब्दोऽथवार्थजः।
प्रतियोगिव्यवच्छेदसंख्यालक्षणपक्षवान् ॥१६॥
भेदो दृश्यत एवायं व्यवहारान्न वास्तवः।
वेतालो बालकस्येव कार्यार्थं परिकल्पितः ॥२०॥
२० एवमादिमयी मिथ्यासङ्कल्पकल्पना मता।
अज्ञानामवबोधार्थं न तु भेदोऽस्ति वस्तुनि ॥२४॥
अविबोधादयं वादो ज्ञाते द्वैतं न विद्यते।
ज्ञाते संशान्तकलनं मौनमेवावशिष्यते ॥२५॥
विवदन्ते ह्यसम्बुद्धाः स्वविकल्पविजृम्भितैः।
२५ उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥२७॥"

---

१। न निवर्तेतेति कु र ना रा य णः पठति।

निर्णीत आत्मा। अथ तत्प्रतिपत्त्युपाय इति प्रणवापरनामक ओङ्कारो निर्णेतव्यः (१६-२४)। निर्णीते च तस्मिंस्तदुपासनं विधेयम् (२५-२९)। अत्रेदमवधेयम्। सुप्रसिद्धं प्रणवोपासनमुपनिषत्सु (छा. उ. १. १. १.; प्र. उ. ५. १. २; तै. उ. १. ८. १; मु. उ. २. २. ६; मै. उ. ४. ४. ३७)। इहोपासनशब्देन ध्यानविशेषोऽभिप्रेयते। यदुक्तं शङ्करेण (छा. उ. १. १. १) "उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरित"मिति। "उपासनं नाम समानप्रत्ययप्रवाहकरण"मिति (ब्र. सू. ४ १ ७) च। स्पष्टमिदमन्यत्रापि तदीये भाष्ये (प्र. उ. ५; ब्र. सू. १. १. ११)। तदेतदुपासनं[1] प्रागुक्तरूपं किमप्यालम्बनमुपादाय भवति। श्रेष्ठं त्वालम्बनमोङ्कार एव। तदुक्तम् (क. उ. १. २. १७)—

"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥" इति।

अत्राह सायणः (तै. आ. ७. ३., पृ. ५००)। "द्विविधान्युपासनानि। अहंग्रहयुक्तानि प्रतीकविषयाणि चेति। येषु परमात्मा सगुणः सन्नुपास्यते तान्यहंग्रहयुक्तानि। तद्यथा 'स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मय' इति (तै. आ. ७. ६.)। अत्र हृदयाकाशमध्यवर्ती परमात्माख्यः पुरुषो मनोमयत्वादिगुणयुक्त उपासितव्यः परमात्माहमिति।" परमात्मव्यतिरिक्तानि लौकिकानि वस्तून्युत्कृष्टदेवतादृष्ट्या ब्रह्मदृष्ट्या वा संस्कृत्य यत्रोपास्यन्ते तानि प्रतीकविषयाणि। तद्यथा। 'पृथिवी पूर्वरूपम्' (तै. आ. ७. ३) इत्यत्र भूदेवदृष्ट्या संस्कृतं पूर्ववर्णस्वरूपमुपास्यम्। 'मनो ब्रह्मेत्युपासीत' (छा. उ. ३. १८. १) इत्यादौ ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यम्। तच्च प्रतीकमुपासकेन न स्वात्मतया ग्रहीतव्यम्। प्रतीकस्य ब्रह्मकार्यत्वेनोत्कृष्टदृष्टिप्रत्यालम्बनत्वात्प्रतीकमित्युच्यत" इति (तै. आ. ७. ३. पृ. ५००)।

---

१। उपासनफलं तु शङ्करेण स्वभाष्ये समासादेवमुक्तं "कानिचिद्ब्रह्मण उपासनान्यभ्युदयफलानि कानिचित्क्रममुक्त्यर्थानि कानिचित्कर्मसमृद्ध्यर्थानीति" (छा. उ. १. १. १; ब्र. सू. १. १. १२)।

यथा "मनो ब्रह्मेत्युपासीत" (छा. उ. ३. १८. १) इत्यत्र मनो ब्रह्मतयोपास्यते तथा प्रकृतेऽपि प्रणव आत्मतयोपासितव्य इत्युच्यते (१. २५)। इयं च प्रणवस्यात्मता तयोः सामान्यधर्मयोगात्। यथा शौर्यादिगुणयोगादसिंहोऽपि माणवकः सिंह इति मन्यते।[1] के ते
५ सामान्यधर्मा इत्युच्यते **विश्वस्या**त्वादिभिः कारिकाभिः। तत्रात्तर-रूपस्य प्रणवस्य तिस्रो मात्रा अकारोकारमकारा विश्वतैजसप्राज्ञरूपास्त्रय आत्मानो भवन्तीति क्रमेण प्रतिपादयंस्तत्र युक्तिमुपन्यस्यति—

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम्।**

**मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥१६॥**

१० **मात्रासम्प्रतिपत्तौ। मात्रा** अक्षरावयवा अकारोकार-मकाररूपाः[2]। तासां **सम्प्रतिपत्तौ** विश्वादीनामन्यतमेनैकभावेनावगतौ विषये यदा वक्तुमिष्यते विश्वोऽकारो भवतीति तदा तयोस्तादृश ऐक्ये द्वौ सामान्यधर्मौ प्रकटौ। आदिमत्त्वमाप्तिश्च। यथा विश्वतैजसप्राज्ञानामादौ विश्वस्तथाकारोकारमकाराणामादावकार इत्यादिमत्त्वमुभयोः समानम्।
१५ किञ्च यथा विदिते विश्वस्याकारत्वे सर्वे कामा आप्यन्ते व्याप्यन्ते वेत्यस्ति तेन सम्बन्धेन विश्वस्याप्तिर्व्याप्तिर्वा तथाकारेण सर्वा वागाप्यते व्याप्यते वेत्यकारस्याप्तिर्व्याप्तिर्वा। तदुक्तं सायणेन स्वभाष्ये (ऐ. आ. ७. ४) "एतदप्यैतरेयके (ऐ. आ. २. ३. ६) समाम्नातम् 'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नाना भवती'"त्यस्त्यस्याप्तिरकारस्य।
२० एवं चोक्ताभ्यां सामान्यधर्माभ्यां विश्वाकारयोरैक्यम् ॥

---

१। अयमेव भक्तिवादो गुणवादो वोच्यते। "बहुभक्तिवादीनि ब्राह्मणानि भवन्तीति" निरुक्तम् (७. २४)। अत्राह दुर्गाचार्यः "भक्तिर्नाम गुणकल्पना। तेन केनचिद् गुणेन ब्राह्मणं सर्वं सर्वथा वर्णयति। तत्र तत्त्वमन्वेष्यम्।"

२। "°मात्रा परिच्छेदे। अक्षरावयवे द्रव्ये।" इति हैमः।
२५

अथ तैजसस्योकारत्वम्—

**तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम्।**
**मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥२०॥**

अत्र द्वौ सामान्यधर्मावुत्कर्ष उभयत्वं च। तत्राकारादुकारस्योत्कर्षस्तावद् गौ ड पा द कृतत्वेनोक्ते नृ सिं हो त्त र ता प न्यु प नि ष द्वि व र ण एवं व्याख्यातः[1]। "अकारादुत्कर्ष ऊर्ध्वमाकृष्ट इव ह्युकारः प्रणवे दृश्यते। तैजसश्च विश्वतः। अकारस्थानं कण्ठं व्याप्यातिक्रम्य ओष्ठस्थाने हि तस्याभिव्यक्तिः। तेनाकाराधिकव्याप्तिमत्त्वेनोक्त उकारो विराज इव हिरण्यगर्भः। बलातिशयत्वं च खरप्रयत्नव्यङ्ग्यत्वात्प्राणावस्थोकारस्य मन्दप्रयत्नव्यङ्ग्यमकारमपेक्ष्येति।" अयमस्याभिप्रायः। तिस्रो मात्राः प्रणवस्याकारोकारमकाराः। तत्राकारः कण्ठ्य उकारश्चौष्ठ्यः। अकारो मुखस्याधस्तात् कण्ठे व्यज्यते। उकारस्तूर्ध्वम् ओष्ठे। अस्मादुकारोऽकारादूर्ध्वमाकृष्ट इव। एवं स्फुट एवोत्कर्ष उकारस्य। अथवाकारस्थानं कण्ठमतिक्रम्यौष्ठेऽभिव्यङ्ग्यत्वादुकारस्य ततोऽधिकव्याप्तिमत्त्वेनाकारादुत्कर्षः। बलवत्तरप्रयत्नव्यङ्ग्यत्वाच्चोकरस्याकारादुत्कर्ष इति। विश्वतस्तैजसस्योत्कर्षस्त्वेवं यदेष सन्निकृष्टतरस्तुरीयस्य विश्वात्। उभयत्वं नामेह मध्यस्थत्वमभिप्रेतम्। यथा विश्वतैजसप्राज्ञानां मध्यस्थस्तैजसस्तथाकारोकारमकाराणां मध्यस्थ उकार इति॥

प्राज्ञस्य मकारत्वमाह—

**मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम्।**
**मात्रासम्पतिपत्तौ तु लयसामान्यमेव च ॥२१॥**

अत्रापि द्वौ सामान्यधर्मौ मानं लयश्च। तदर्थं विवृत्तु भा ष्य का र आह (मा. उ. ११) "मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्यां प्रस्थेनेव यवाः। तथोङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकार" इति। जाग्रत्स्वप्नयोस्तत्तादृशसृष्टिसद्भावादुत्पत्तिशब्देन तदवस्थाद्वयमभिप्रेयते। प्रलयशब्देन तु सुषुप्तम्। अत्र जाग्रत्स्वप्नसृष्टेरभावात्। प्रलये विश्वतैजसौ प्राज्ञे प्रविशतः। उत्पत्तौ पुनस्तौ तस्मान्निर्गच्छतः। तयोरवस्थयोः पुनस्तयोः प्रादुर्भावात्।

---

[1] यथाधिगम्यते हस्तलेखे।

भाभ्यां च प्रवेशनिर्गमाभ्यां विश्वतैजसौ प्राज्ञेन मीयेते परिमीयेते इव। यथा प्रस्थेन यवाः। प्रस्थेन यवानां माने यवा आदौ प्रस्थं प्रविशन्ति पश्चात्पुनस्तस्मान्निर्गच्छन्ति। प्रकृतेऽपि विश्वतैजसौ सुषुप्ते प्राज्ञं प्रविशतः। जाग्रत्स्वप्नयोस्तु पुनस्तौ तस्मान्निर्गच्छतः। अथाकारो-
५ कारमकाररूपस्योङ्कारस्य निरन्तरमुच्चारणेऽकारोकारौ मकारं प्रविशत इव निर्गच्छत इव च। एवं च मकारेणाकारोकारौ मीयेते इव। ततश्चैवं मानरूपेण सामान्यधर्मेण प्राज्ञो मकारो भवति। यथा विश्वतैजसौ सुषुप्ते प्राज्ञे एवमकारोकारावपि तादृशोच्चारणे मकारे लीयेते इवेतीदृशेन लयरूपेण सामान्यधर्मेण मकारः प्राज्ञो भवति॥

१० अथैतासु तिसृष्वप्यवस्थासु यत्सदृशं साधारणं चात्मरूपं तस्य वेत्ता प्रशस्यते—

**त्रिषु धामसु यस्तुल्यं सामान्यं वेत्ति निश्चितः।**
**स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः॥२२॥**

अथोङ्कारस्य तिसृणां मात्राणामेकैकस्या उपासनेन यत्फलं लभ्यते
१५ तदाह—

**अकारो नयते विश्वमुकारश्चापि तैजसम्।**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः॥२३॥**

**अमात्रे** तुरीय इति भावः। न हि तत्र कापि मात्रेति। तत्रात्मनः स्वरूपेणावस्थानादुपशमाच्च द्वैतस्य (१. २९) न गतिरिति॥

२० ओङ्कारोपासनमेव पुनः प्रपञ्चयति—

**ओङ्कारं पादशो विद्यात्पादा मात्रा न संशयः।**
**ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत्॥२४**

चतुर्धाविभक्तस्य वस्तुन एकैको भागः पाद इत्युच्यते। "पशुपाद प्रकृतित्वाद्" (नि. २. ७) इति ह्याहुः। एक एव ह्यात्मा विश्वतैजसप्राज्ञतुर्य-
२५ रूपेण चतुर्धा व्याख्यातः। त एव चत्वारः पादा इत्युच्यन्ते। तुर्ये तु न किञ्चिच्चिन्तयितव्यमस्तीत्युच्यते **न किञ्चिदिति**। एतदेवोक्तमन्यत्रापि (भ. गी. ६. २५) "आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेदिति।" एवं श्रीमद्भागवतेऽपि (२. १. १९)॥

निर्णीतः प्रणवः । अथ तदुपासनं विधत्ते—

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥२५॥

प्रणवे चेतो युञ्जीतेति प्रणवं ध्यायेदित्यर्थः ॥

स एव प्रणवः स्तूयते शिष्टाभिः कारिकाभिः— ५

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः परमोऽव्ययः ॥२६॥

न पूर्वं कारणमस्य विद्यत इत्यपूर्वः । नास्य किञ्चिदन्तरमभ्यन्तरं बाह्यं वेत्यनन्तरोऽबाह्यः[1] । अपरमस्मात्किञ्चन न विद्यत इत्यनपरः । न चायं व्येति विनश्यतीत्यव्ययः । १०

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥२७॥

तदिति पदेन पूर्वकारिकागतं ब्रह्म परामृश्यते ॥

प्रणवं ह्नीश्वरं विद्यात्सर्वस्य हृदि संस्थितम्[2] ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति[3] ॥२८॥ १५

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः[4] शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥२९॥

---

१ । "अनन्तरोऽबाह्यः", बृ. उ. ४. ५. १३ । द्रः २. ५. १९ ; ३. ८. ८ ।

२ । "हृदि सर्वस्य धिष्ठितम्," भ. गी. १३. १७ ; "सदा जनानां हृदये सन्निविष्टः", क. उ. २. ३. १७ । २०

३ । क. उ. १. २. २२ ; २. १. ४, ३. ६ ।

४ । २. ३५ ।

O. P. 81—3

स एव मुनिर्नेतरो जनो येनोङ्कारो विदितो यः खल्वोङ्कारोऽमात्रो मात्राहीनस्तुरीयोऽनन्तमात्रश्च तस्य परिच्छेत्तुमशक्यत्वात्। स एव द्वैतस्योपशमोऽत एव च शिवः॥

॥ इति गौडपादीय आगमशास्त्र आगमाख्यं प्रथमं प्रकरणं समाप्तम्॥

५

———

# द्वितीयं प्रकरणम्

## वैतथ्यम्

सिद्धे वैतथ्ये प्रपञ्चस्य वक्ष्यमाणस्तदुपशमः (२. ३५) सिध्येदित्य-स्मिन्द्वितीये प्रकरणे प्राधान्याद्युक्तिबलेन तस्य वैतथ्यं साध्यते।

यथा स्वप्नदृश्या भावा वितथा जाग्रद्दृश्या अपि तथैव वितथा इत्य-नुपदमेव (२. ४) प्रदर्शयिष्यते। तदर्थमादौ सुप्रसिद्धेऽपि वैतथ्ये स्वप्नदृश्यानां भावानां युक्तिप्रमाणाभ्यां पुनस्तत्प्रदर्श्यते— ५

**वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः[1]।**
**अन्तःस्थानात्तु भावानां[2] संवृतत्वेन हेतुना[3] ॥१॥**

हस्तिनो वा पर्वतादयो वा ये ये भावाः स्वप्ने दृश्यन्ते ते सर्वेऽपि मिथ्याभूता इत्याहुर्**मनीषिणः**। यथा बृहदारण्यके (४. ३. ८-१०) "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत" इति। तेषां वैतथ्ये हेतुः **संवृतत्वेन हेतुने**ति। यतस्ते १० स्वप्नदृश्या भावाः हस्तिपर्वतादयः संवृता आच्छादिताः। संवृतत्वे हेतुर**न्तःस्थानात्** (२. ४)। स्थानादवस्थानात्। यस्मात्ते हस्ति-पर्वतादयो भावा देहाभ्यन्तरे चित्तेऽवतिष्ठन्ते न तु देहाद्बहिस्तस्मात्ते संवृताः। तादृशाश्च सन्तो वितथा मिथ्याभूताः। न ह्यतिमहान्तो हस्ति-पर्वतादयस्तावत्यतिक्षुद्रे चित्ते मातुमर्हन्ति। अत्र तुकारोऽवधारणार्थः। १५ अयमेवार्थोऽन्यत्राप्युक्त आचार्येण "सर्वे धर्मा मृषा स्वप्ने कायस्यान्त-र्निदर्शनादिति" (४. ३३)। अयं तु विशेषो यदत्र भावानां संवृतत्वं तत्र तु प्रदेशस्य। स्वप्नदृश्यानां भावानां वैतथ्ये हेतुद्वयमन्तःस्थानं संवृतत्वं चेति केषाञ्चिदभिप्रायः॥ २०

---

१। अत्र मनीषिण ऋषयोऽभिप्रेताः। "आहुर्मनीषिण"इत्युक्तिः प्रसिद्धा अत्र (२. ९; ४. ९४) चान्यत्र च (क. उ. ३. ४; भ. गी. १८. ३)।

२। २. ४।

३। "अन्तःस्थानसंवृतत्वादिहेतुनेति" (शा.)।

स्वप्नदृश्यानां भावानां वैतथ्येऽपरां युक्तिमुपन्यस्यति—

**अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति।**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥२॥**

स्वप्नद्रष्टा कदाचित् स्वस्थानादतिदविष्ठेषु देशेषु स्वप्नान्पश्यति। न चैतद् भवति स खलु तान् देशान् गत्वा तत्रत्यान् भावान्पश्यतीति। यतोऽदीर्घः स कालः। न खलु तावतातिस्वल्पेन कालेन तावानतिमहानध्वा शक्यतेऽतिक्रमितुम्। किञ्च। न सर्वोऽपि स्वप्नदृक् स्वप्ने यस्मिन्देश आत्मानं पश्यति प्रतिबुद्धः संस्तस्मिन्नेवात्मानं पश्यति। नहि मथुरायां स्वप्ने माहिष्मतीं गतः प्रबोधे माहिष्मत्यां दृश्यते। तस्मात्स्वप्ने सर्वभावानां वैतथ्यम्॥

अथात्र श्रुतिमाश्रित्योच्यते—

**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम्।**
**वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥३॥**

इतश्च स्वप्नदृश्या भावा वितथा यतः स्वप्नदृश्यानां **रथादीनामभावो न्यायपूर्वकं** युक्त्या **श्रूयते**। तथाहि। "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजत" इति (बृ. उ. ४. ३. १०)।[1] **तेन** च स्वप्नदृश्यानां भावानां **प्राप्तं वैतथ्यं प्रकाशितमाहु**र्मनीषिणः। अयमेवात्र विवक्षितो न्यायो यद् यत्र यद्वस्तुत एव न सम्भवति तत्र चेत्तत् प्रतिभासते शुक्तिकायामिव रजतं तत्र तेनावश्यं वितथेन भवितव्यमिति।[2]

---

१। अपिच—

"स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि।
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्॥"

इति। तत्रैव (४. ३. १३)।

२। पुरुषोत्तमस्त्वाह "स्वप्नान्त उच्चावचमीयमान" (बृ० उ० ४.३. १३) इति मन्त्रेणानेकरूपकरणमुक्त्वा "तन्नायतं बोधयेद् दुर्भिषज्यं हास्मै भवति (४. ३. १४)" इत्यनेन छन्नस्य निर्बन्धेन जागरणे कष्टमाह यद्यन्यत्र गतो भवेत्तत्करणं न भवेद्दुर्भिषज्यं (च ?)। यत्र छन्नस्तत्रैव स्त्रिया स्वप्ने रममाणः स्खलिते जाग्रत्तां बहिः पश्येत्। यतो न पश्यति ततः करोति ततो रथाद्यभावः। एवं च स्वप्ने रथाद्यभावः पश्चात्तत्करणादित्यादिन्यायपूर्वकमित्यर्थः।" अशुद्ध इह पाठः। "योग्यदेशाद्यभावो युक्तिरिति" आनन्दगिरिः।

तयैवैकया युक्त्या स्वप्नदृश्या इव जाग्रद्दृश्या अपि भावा वितथा इत्युच्यते—

**अन्तःस्थानात्तु भेदानां तथा जागरिते स्मृतम्।**
**यथा तत्र तथा स्वप्ने संवृतत्वं न भिद्यते ॥४॥**[1]

अयमर्थः। **जागरिते** जाग्रदवस्थायां **भेदानां** भावानाम्। इह भाव- (२. १३, १६, १७, १६, ३३)- भेद- (३. ४, ५, ११, १२)- भूत- (४. ३३) शब्दाः पदार्थवाचका इत्यर्थतो न भिद्यन्ते। **तथा** वैतथ्यं **स्मृतम्**। तत्र हेतुर**न्तःस्थानात्**। यतस्तेऽपि जाग्रद्दृश्यभावा देहमध्य एव चित्तेऽवतिष्ठन्ते। कथं तदित्यनुपदमेवोच्यते (२. ५, ६, १०)। तेषामन्तःस्थानाच्च यथा स्वप्ने तथा **तत्र** जागरिते **संवृतत्वं** न भिद्यते। संवृतत्वेन च तेषां जाग्रद्दृश्यानां भावानां वैतथ्यं यथा प्राग्वर्णितम् ॥[2]

---

१। २. १; ४. ३३।

इह परीक्षितेषु सर्वेष्वपि मुद्रितेष्वमुद्रितेषु वा पुस्तकेषु चतुर्थे पादे संवृतत्वेन भिद्यत इत्येव पाठः। न पुनरेष युक्तः प्रतिभाति। न ह्यस्मात्कश्चित्साधुरर्थोऽधिगम्यते। न च संवृतत्वेनेति पदेन भिद्यत इति पदं तथा सुष्ठु सङ्गमयितुं शक्यते। किं नु खल्वत्र कर्तृपदम्। अथ वैतथ्यमिति पूर्वकारिकातोऽनुवर्तेत। तदा कथञ्चिदेवं व्याख्यायेत। यथा स्वप्ने तथा जागरिते भावानां संवृतत्वे सिद्धे वैतथ्यं न भिद्यते। उभयोरप्यवस्थयोः समानं वैतथ्यमिति भावः। न पुनरेतदपि व्याख्यानं तथा श्लिष्यते। न चात्र किञ्चित्स्पष्टीकृतं भा ष्य का रे ण। इयं चात्र भाष्यपङ्क्तिः "अन्तःस्थानात्संवृतत्वेन च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेद" इति। अत्र भेद इत्येव पाठो गृहीतो व्याख्यात आ न न्द गि रि णा। वस्तुतस्त्वभेद इत्येव पठनीयम्। इह हि स्वप्नदृश्येभ्यो भावेभ्यो जाग्रद्दृश्यानां भावानामभेद एव प्रतिपिपादयिषितो न पुनर्भेदः ॥

२। अयमेवार्थः (२. १-४) समासेनोक्तो ब्र ह्म सू त्र भा ष्ये (३. २. ३) श ङ्क रे ण "नहि संवृते देहदेशे रथादयोऽवकाशं लभेरन्निति।"

अथ स्वप्नजागरितावस्थयोर्न मिथो भेदोऽपि त्वभेद एव। तेन च स्वप्नदृश्यानामिव जाग्रद्दृश्यानामपि भावानां वैतथ्यमित्याह—

**स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः।**
**भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥५॥**

५ स्वप्नस्थानं जागरितस्थानं च वस्तुत एकमेव न भिन्नमित्याहु-**र्मनीषिणः।** यथा "अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति" (बृ. उ. ४. ३. १४)। अस्यां श्रुतावेष इति पदेन स्वप्नः परामृश्यत इति शङ्करः। इयं चापरात्र श्रुतिः (बृ. उ. ४. ३. ९) "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत" १० इति। तयोर्द्वयोः स्थानयोरैक्ये हेतुमाह **भेदानामिति**। यत उभयोरप्यवस्थयोर्दृश्यानां **भेदानां** भावानां समत्वं साम्यमैक्यमिति भावः। समाना हि ते भावा वैतथ्यरूपेण। [1]प्रसिद्धश्चात्र हेतुरन्तः-स्थानात्संवृतत्वरूपो यथा प्राक् प्रदर्शितः। अन्तःस्थानात्संवृतत्वेन स्वप्नजागरितस्थानयोर्दृश्यानां भावानां साम्यमैक्यम्। तेन च तयोः १५ स्थानयोरप्यैक्यमिति भावः। अत्रोक्तं मानसोल्लासे (१. ८-११) —

"अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत्।
बहिर्वन्मायया भाति दर्पणे प्रतिबिम्बितम् ॥
स्वप्ने स्वान्तर्गतं विश्वं यथा पृथगवेक्ष्यते।
तथैव जाग्रत्कालेऽपि प्रपञ्चोऽयं विविच्यताम् ॥
२० स्वप्ने स्वसत्तैवार्थानां सत्ता नान्येति निश्चिता।
को जाग्रति विशेषोऽस्ति जडानामाशुनाशिनाम् ॥
स्वप्ने प्रकाशो भावानां स्वप्रकाशान्नहीतरः।
जाग्रत्यपि तथैवेति निश्चिन्वन्ति विपश्चितः" ॥ इति।

१। ब्रह्मसूत्र-शाङ्करभाष्यम्, १. १. २२।

जाग्रद्दृश्या भावा अवितथत्वेन प्रतीयमाना अपि वस्तुतो नावितथाः। कथं नु खल्वेतद् भवतीत्युच्यते—

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः॥६॥**[1]

**यदादौ नास्ति न चान्ते वर्तमाने** मध्येऽपि **तत्तथा** नास्ति। अतो जागरिते भावा वस्तुतो **वितथै**रसत्यैः **सदृशाः सन्तोऽप्यवितथा इव लक्षिताः।** न पुनर्वस्तुत एवावितथाः॥

स्वप्नजागरितयोर्भावानां मिथो भेदान्न स्वप्नभावा इव जागरितभावा वितथा इत्याशङ्क्य स दोषः परिह्रियते—

**सप्रयोजनता तेषां स्वप्नेऽपि प्रतिपद्यते[2]।**
**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः॥७॥**[3]

अस्ति जागरिते भावानां **सप्रयोजनता।** दृश्यन्ते ह्यन्नपानादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तः। एवं स्वप्नदृश्यानामपि भावानां सप्रयोजनत्वमस्त्येव। न हि स्वप्ने सलिलं पिबतोऽन्नं वा भुञ्जानस्य तत्र पिपासायाः क्षुधो वा निवृत्तिर्न भवतीति। तस्मान्न वक्तव्यं जाग्रद्दृश्यानामेव भावानां सप्रयोजनत्वं न पुनः स्वप्नदृश्यानामपीति। तस्माद् द्वयोरप्यवस्थयोर्भावानां पूर्वोक्तं (२. ५) साम्यं सुस्थितम्। ततश्च स्वप्नदृश्या इव जाग्रद्दृश्या अपि भावा मिथ्याभूताः। किञ्च तेषा**माद्यन्तवत्त्वे**नापि **ते खलु मिथ्यैव स्मृताः।** यथाद्यन्तवन्तो मरुमरीचिकादयो मिथ्या। यथा वाद्यन्तवन्तः स्वप्नदृश्यभावा मिथ्या॥

---

१। उपरिष्टात्पुनरपीयं कारिका वक्ष्यते (४. ३१)।

२। परीक्षितेषु मुद्रितामुद्रितेषु पुस्तकेषु द्वितीये पादे स्वप्ने विप्रतिपद्यते इत्येव पाठो दृश्यते। अपेक्षितस्त्वर्थः स्वप्नेऽपि प्रतिपद्यते इत्येव पाठं समर्थयते। उपलभ्यते चायं वस्तुतोऽप्येकस्मिन् हस्तलेखे($D^2$)ऽन्यत्र (४. ३२)। इहापि कश्चिद्धस्तलेखः (Vn) स्वप्ने च प्रति° इति पठति। समर्थितश्चायं पाठः कथञ्चिदेकेन हस्तलेखेन (आनन्दाश्रमसंस्कृतस्य भाष्यस्य छ-संज्ञकेन) स्वप्ने प्रतिपद्यते इति पठता।

३। ४. ३२।

पुनरप्याह जाग्रद्दृश्यानां भावानां वैतथ्यमिति—

**अपूर्वाः[1] स्थानिधर्मा हि यथा स्वर्गनिवासिनाम् ।**
**तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥**

**स्थानिधर्माः** स्थानिनः स्वप्नस्थानवतः स्वप्नदृशो धर्मा भावाः
५ पदार्थाः (४. १)। यान् खलु पदार्थान्स्वप्नदृक्पश्यति त इति भावः। ते धर्माः कदाचिद**पूर्वा** अद्भुता भवन्ति **यथा स्वर्गनिवासिना**मिन्द्रादीनां सहस्रनयनत्वादिरूपा धर्माः। स **चायं** स्वप्नदृक तांस्तान्देशान् **गत्वा** (२. २) **तान्**धर्मान्**प्रेक्षते। यथा खल्विह** कश्चि**त्सुशिक्षितो** देशविशेषान् गत्वा कांश्चिदद्भुतान्भावान्प्रेक्षते। एवं च
१० तादृशाः स्वप्नदृश्या भावा वितथाः। तत्साम्याच्च जाग्रद्दृश्या अपि भावा वितथा इति प्राक्प्रदर्शितमपि पुनर्दृढीकृतम् ॥[2]

स्वप्नावस्थायां जाग्रदवस्थायां वा चेतसा यदन्तर्गृह्यते तदसदिति। यत्पुनर्बहिर्गृह्यते तत्सदिति मन्यते। वस्तुतस्तु द्वयमप्येतदसद्वितथम्। अन्तर्बहिश्च चेतःकल्पितत्वाविशेषाद् इत्युत्तरकारिकयोराह—

१५ **स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।**
**बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥९॥**
**जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।**
**बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ॥१०॥**

**स्वप्नवृत्तिः** स्वप्नावस्था। **जाग्रद्वृत्ति**र्जाग्रदवस्था। स्वप्ने वा
२० जाग्रति वा चित्तमेव केवलं वर्तते न पुनस्तयोरवस्थयोर्दृश्यास्ते ते भावाः।

---

१। अत्र पाठभेद आङ्ग्लसंस्करणदर्शिते पाठविवेके द्रष्टव्यः। तृतीये पादे तानिति दर्शनात्तदनुगमाय अपूर्वा इत्येव पाठो मे युक्तः प्रतिभाति। स्वप्नदृशोऽपूर्वोऽयं धर्मः। "तानेवंप्रकारानपूर्वान्स्वचित्तविकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षत" इति च भाष्यपङ्क्तिरिहेमं पाठमुपोद्बलयति ॥

२५ २। वस्तुतस्तु कारिकेयं मे तिरोहितार्था प्रतीयते। तथापि कथञ्चिद् व्याख्याता। न पुनरियं व्याख्या ममापि प्रीतये।

यथा दर्शयति (२. ५) प्राक्प्रदर्शितो मा न सो ह्ला सः (१. ७, ८)। दर्शयिष्यति चोपरिष्टात् (४. ६३-६४) कारिकाद्वयार्थः ॥

अत्राह। नैतद्युक्तं वक्तुं स्वप्नजागरितयोः सर्वेऽपि भावा वितथा इति। एकेनापि तावत्केनचिदवश्यमवितथेन भवितव्यम्। अन्यथैषां भावानां बोद्धा वा विकल्पको वा कश्चिन्नोपपद्येतेति— ५

**उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि।**
**क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः ॥११**

**एतान**न्तर्बहिश्चेतःकल्पितान् **भेदान्** (२. ४)। **तेषां** भेदानाम्

अत्रेदं प्रतिवचनम्—

**कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया।** १०
**स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥१२॥**

देवो द्योतमानः (बृ. उ. ४. ३. १३ शा.) प्रकाशमान **आत्मा आत्मना** स्वयमात्मानं स्वं **स्वमायया** वक्ष्यमाणया विविधाकारया (२.१९-३०) **कल्पयति। स एव** च तान् **भेदान्बुध्यते इति वेदान्तनिश्चयः**। आत्मशब्दस्यायमर्थः सुप्रसिद्धः। यथा श्री म द्भ ग- १५ व द्गी ता दिषु (२. ५५; ४. १७; ६. ५. ६)। ईदृशेषु स्थानेषु देवो नाम न कश्चित्सुरामरादिशब्दवाच्यो जीवः। दीव्यतीति देवः। ततश्च केनचिदसाधारणेन तेजसा वा प्रभावेण वोपेतो यः कश्चन भावस्तेन शब्देनोच्यते। तथा ह्युपनिषत्सु (प्र. उ. २. १, २) आकाशो वायुः पृथिवी वाक्चक्षुः श्रोत्रं प्राणो (८) मनो (४. १, २, ५, ६) ऽग्न्या- २० दयश्च (११) देवशब्देनोक्ताः।

इदं चेह शक्यं वक्तुं प्रसङ्गात्। प्रभु-(१. ८, १०)-विभु-(१. १, १०) -शब्दावपि न प्रागुक्तदेवशब्दवदमरव्यञ्जकौ। अपि तु केवलं यं कमपि विलक्षणप्रभावं भावं द्योतयतः। यथा श्री भ ग व द् गी ता या म् (५. १४, १५) अन्यत्र चास्य शास्त्रस्य (२. १९; ४. ८२, ८४)। २५ भगवच्छब्दार्थोऽप्येवमवगन्तव्यः॥

कथं नु खल्वात्मा तथात्मानं कल्पयतीत्याह—

**विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान् ।[1]**
**नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥१३॥**

एष आत्मा **अन्त**र्देहमध्ये **चित्ते** कांश्चिद**परान्** स्वतोऽन्यान्
५ **अव्यवस्थितान्** अस्थिरान् अनियतानिति भावः । **भावान्**
**विकरोति** नानारूपेण निर्मिणोतीति कल्पयतीति भावः ।[2] स्वप्नकल्पिता
भावाः कदाचित्परस्मिन्नेव क्षणे रूपान्तरेण परिवर्तन्ते तिरोभवन्ति वा ।
गजोऽप्यश्वो भवति । दृष्टश्च गजः क्षणादन्तर्धत्त इति । अतः स्वप्नदृष्टा
भावा न व्यवस्थिता इत्यव्यवस्थिताः । तानेष आत्मा विकरोति ।
१० यथैषोऽन्तश्चित्तेऽव्यवस्थितान् भावान्विकरोति तथा **बहि**र्देहा**च्चित्ते**
**नियतान्** व्यवस्थितान् भावान्विकरोति । बहिःकल्पिता घटपटादय-
स्तत्तद्रूपेणैव कञ्चित्कालं वर्तन्त इति नियता इत्यभिप्रायः । द्विविधा
भावाः स्वप्नदृश्या जाग्रद्दृश्याश्च । उभयेऽप्येते चित्त एव कल्पिताः ।
इयांस्तु विशेषो यत्प्रथमेऽन्तःकल्पिताः । द्वितीयास्तु बहिःकल्पिताः ।
१५ किञ्च प्रथमेऽव्यवस्थिताः । द्वितीयास्तु कञ्चित्कालं व्यवस्थितास्तेन
चास्माकमर्थक्रियाकारिण इति ॥

---

१। इह द्वितीये पादे बहूनि संस्करणानि पुस्तकानि चानेकानि हस्त-
लिखितानि ऽव्यवस्थितान् इत्यत्र व्यवस्थितानिति पठन्ति । सम्मतश्चैष पाठो
भा ष्य का र स्य । न पुनरेष युक्तः प्रतीयते । तृतीये पादे नियतांश्चेति नियत-
२० शब्दप्रयोगाद् इह द्वितीये पादे तद्विपरीतार्थक एव कश्चिच्छब्दोऽपेक्षितः ।
स च न व्यवस्थितशब्दः । उभयोस्तुल्यार्थकत्वात् । अतोऽत्र तादृशोऽव्य-
वस्थितशब्दपाठ एव साधीयान् । पु रु षो त्त मो ऽप्येतदेव पठति ।

किञ्च यथा द्वितीये पादे ऽन्तश्चित्ते इति सप्तम्यन्तः पाठस्तथा तृतीयेऽपि पादे
बहिश्चित्ते इति सप्तम्यन्त एव पाठो व्याख्येयो न पुनर्बहिश्चित्तः इति प्रथमान्तो
२५ यथा व्याख्यातो भा ष्य का रे ण ।

२ । विकरोति नाम कल्पयति (२. १२), कल्पयते (२. १३, १६)।
चिन्त्योऽत्र कल्पितशब्दार्थः ( १. १८, २. ९, १४, १९, ३०, ३३ ) ।

उभयेषामप्येषां चित्तकल्पितत्वेन न कश्चिद्भेद इत्याह—

**चित्तकालाश्च येऽन्तस्तु द्वयकालाश्च ये बहिः।**
**कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥१४॥**

**ये** खलु भावा **अन्त**रेव स्थिता विद्यन्ते **च** तावन्तं **कालं** यावद्विद्यते तत्तच्चित्तम्। तत्तच्चित्तनाशे तु न ते भावा विद्यन्त इति भावः। ५ **ये च** भावा **बहिः** स्थिता विद्यन्ते च यावद्विद्यते **द्वयं** ग्राह्यग्राहक-रूपम्। ग्राह्यं विषयो ग्राहको विषयी। **ते सर्वे कल्पिता एव।** नात्र कश्चिद्धेतुरस्ति येन तेषामन्योन्यं भेदः स्यात्।

इह शास्त्रे द्वयशब्दोऽसकृत्प्रयुक्तः (२. १४; ३. २९, ३०; ४. २४, ६१, ७२, ७५, ८७)। स चेद्वशेषु स्थानेषु ग्राह्यं ग्राहकञ्च सूचयति। १० तदाहाचार्यः (४. ७२) कण्ठेनैव "ग्राह्यग्राहकवद्द्वय"मिति। अतिसुप्रसिद्धं चैतत्सौगततन्त्रेषु। तथाहि (म. सू. अ. १४. २८, पृ. ९४)

"द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तरं
निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः ॥" इति।

"°**द्वयग्राहविसंयुक्तं** ग्राह्यग्राहकग्राहविसंयोगादिति" तत्रैव १५ तद्व्याख्या।

"स्वधातुतो द्वयाभासाः साविद्याक्लेशवृत्तयः।
विकल्पाः सम्प्रवर्तन्ते द्वयद्वयविवर्जिताः ॥"

"**द्वयाभासा** इति ग्राह्यग्राहकाभासाः। **द्वयद्वयविवर्जिता** इति ग्राह्यद्वयेण ग्राहकद्वयेण चेति" तत्रैव। म. सू. अ. ११. ३२ (पृ. ६३)। २० आर्यद्रढाशयपरिपृच्छायाम् (म. वृ., ४६३ पृ.)—

"न हि कुलपुत्र द्वयप्रभाविता तथागतधर्मता। तत्र ये द्वये चरन्ति न ते सम्यक्प्रयुक्ता मिथ्याप्रयुक्तास्ते वक्तव्याः। कतमञ्च कुलपुत्र द्वयं। अहं रागं प्रहास्यामीति द्वयमेतत्। अहं द्वेषं प्रहास्यामीति द्वयमेतत्। अहं मोहं प्रहास्यामीति द्वयमेतदिति ॥" २५

तत्त्वसंग्रहे (३५३८) च—

"प्रकृत्या भास्वरे चित्ते द्वयाकाराकलङ्किते ।

द्वयाकाराविमूढात्मा कः कुर्यादन्यथामति (? मतिम्) ॥"

"द्वयाकाराविमूढात्मेति प्रहीणग्राह्यग्राहकाभिनिवेश"इति पञ्जिका । ५ स्वप्नजाग्रद्भावानां समानेऽपि चित्तकल्पितत्वे विद्यते तेषां व्यक्ताव्यक्तत्वेन कश्चिद्विशेषः । विद्यते च विशेषस्तेषां ग्रहणेऽपि कश्चिदित्याह—

**अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।**

**कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥१५॥**

ये खलु भावा **अन्तश्चित्ते अव्यक्ता** अस्फुटा एव प्रतिभासन्ते । १० ये च भावा **बहिश्चित्तात्स्फुटाः** प्रतीयन्ते **ते सर्वे कल्पिता एव** । तेषामुभयेषामपि मनःस्पन्दनमात्रत्वात् । अतः स्फुटास्फुटत्वेन विद्यमानेऽपि कस्मिंश्चिद्विशेषे कल्पितत्वेन न कश्चित्तत्र विशेषः । केवलं स्वाप्निकभावानां मनोमात्रसम्बन्धाज्जाग्रद्भावानां तु बहिरिन्द्रियैरपि सम्बन्धादेकेषामस्फुटत्वमन्येषां तु स्फुटत्वमिति विवेकः । सत्यप्येवं १५ विद्यते कोऽपि विशेषः । स च विभिन्नेन्द्रियकृतः । तथाहि स्वाप्निकभावा अन्तरिन्द्रियेण जाग्रद्भावास्तु बहिरिन्द्रियेण गृह्यन्त इत्येष विशेषः ।

अत्राह आनन्दगिरि: "मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिता" २० इति । स्वयं ग्रन्थकृदेव वक्ष्यति (४. ७२) "चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद् द्वय"मिति । अस्मिञ्छास्त्रे वेदान्तविज्ञानवादः प्रतिपिपादयिषितः। तदेतदुत्तरत्र क्रमेणाधिकाधिकं स्फुटीभविष्यति (३. २६; ४. २८, ३६, ४७, ५१, ५४, ७७) ॥

बाह्याश्चाध्यात्मिकाश्च भावाः कल्पिता एवेत्युक्तम् । अथ तेषां २५ कल्पनायाः क्रमं प्रकारं चाह—

**जीवं कल्पयते पूर्वं ततो भेदान्पृथग्विधान्**

**बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥१६॥**

**पूर्वं** प्रथमम् आत्मेत्यध्याहार्यः पूर्वकारिकातः (१ १२, १३)। यथा जानाति तथा स्मरन् **जीव**मात्मानं[1] **कल्पयते । ततः पृथग्विधान्** विविधान् **बाह्यान्** घटपटादीन् **आध्यात्मिकान्** दैहिकान्मानसिकांश्च[2] वक्ष्यमाणान् प्राणादीन् ( २. १६-२८ ) **भावान्** पदार्थान् कल्पयते ॥

अत्राह भा ष्य का रः। "जीवकल्पना सर्वकल्पनामूल"मिति। कल्पिते हि जीवे पश्चादन्यत्सर्वं कल्प्यते। येयं जीवकल्पना सैव सौगतशास्त्रे सत्कायदृष्टिः ( पालौ सक्कायदिट्ठि ) स्वकायदृष्टिरिति वा प्रसिद्धा[3]। इयमेवात्मदृष्टिरात्मवाद इति ( पालौ अत्तवादो ) चोच्यते। इयं च सत्कायदृष्टिश्चतुर्धा। यथा रूपम् आत्मा। रूपवानात्मा। रूप आत्मा। आत्मनि च रूपमिति।[4] एवं वेदनां संज्ञां संस्कारं विज्ञानं चाधिकृत्य वक्तव्यम्।

---

१। आत्मसत्त्वजीवजन्तुपुरुषपुद्गलादिशब्दाः पर्यायाः। म. व्यु. २०७; अ. प. ९७; शि. स., पृ. १७२, २३६ ; न्या. सू. भाष्यं, १. १२।

२। "तत्र ग्राहकभूतं कायादिकमाध्यात्मिकं ग्राह्यभूतं बाह्यम्।" म. सू. अ २१. ५ ( पृ. ५५ ) ; सा. त. कौ. १।

३। म. का. २३. ५।

४। स्तोकमुदाह्रियते। यथा ध स. १८२-१८६ (पृ), § १००३ ; म. नि. १. ३००; स. नि. ३. १६ ; ४२, ४४, ४६, ५६, १०२ इत्यादि ; म. व्यु. (२) २०८ "रूपमात्मा स्वामिवत्। रूपवानात्मालङ्कारवत्। आत्मीयं रूपं भृत्यवत्। रूप आत्मा भाजनवत्।" एतत्पुनस्तन्मतं निरस्यति

"रूपं नात्मा रूपवान्नैव चात्मा।
रूपे नात्मा रूपमात्मन्यसच्च ॥" इति।

ब. स., पृ. २० ; म. वृ., पृ. ३३९।

इयं च जीवकल्पना सत्कायदृष्टिर्वा सर्वानर्थमूलमिति तत्परिहार आवश्यकः म. का. १८. २; म. वृ. ३४६, ३६१ पृ. ; शि. स. २४७ पृ.।

कथं नु खल्वियं जीवकल्पना सत्कायदृष्टिर्वा सर्वानर्थमूलमित्युक्तं
५ बो धि च र्या व ता र प ञ्जि का याम् (४९१—४९३ पृ.)। "तथा ह्यात्मानं पश्यतः संस्कृतेषु स्कन्धधात्वायतनेष्वहमिति दृढतरमुत्पद्यते स्नेहः। ततस्तद्दुःखप्रतिकारेच्छया सुखाभिलाषाद्दोषं प्रच्छाद्य तदर्थितया गुणाध्यारोपात्तत्साधनेषु प्रवर्तते। स्वोपकारिणि वयमिति बुद्धिर्जायते। अहं ममेति च दर्शनात्। परिपन्थिनि विद्वेषः।
१० ततः समस्तदुःखनिदानं सर्व एव क्लेशोपक्लेशा लब्धप्रसराः प्रवर्तन्ते। इत्यात्ममोहप्रवर्तितो दुःखहेतुरहङ्कारो भवति। तदुक्तमा चा र्य पा दैः

"यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतस्नेहः।
स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते॥
गुणदर्शी परितृष्यन्ममेति तत्साधनान्युपादत्ते।
१५ तेनात्माभिनिवेशो यावत्तावत्तु संसारः॥
आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ।
अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते॥"[1] इति।

---

१। प्र. वा. २. २१७-२१९। सन्तीह केचन स्तोकाः पाठभेदाः (बो. च. प. ४९१-४९२)। तथाहि। प्रथमश्लोके प्रथमार्धे तत्रास्याहम् इत्यत्र
२० बो. च. प. तस्यात्राहम् इति। द्वितीयश्लोके प्रथमार्धे परितृष्यन् इत्यत्र बो. च. प परितृषन् इति। द्वितीयार्धे च स इत्यत्र बो. च. प. तु इति। अत्रान्तिमः श्लोकोऽन्यत्राप्युदाहृतः (अ. अ. आ. ६७ पृ. ; न्या. क. २७९ पृ.)। उपमीयतामिह कापिलानां दृष्टिः दृश्यतां चा नि रु द्ध वृ त्तिः (सा. सू. ९. ७, ९) ; अ. को. ९. २३०

२५ "साहङ्कारे मनसि न शमं याति जन्मप्रबन्धो
नाहङ्कारश्चलति हृदयादात्मदृष्टौ तु सत्याम्।
अन्यः शास्ता जगति च यतो नास्ति नैरात्म्यवादी
नान्यस्तस्मादुपशमविधेस्त्वन्मतादस्ति मार्गः॥" इति
श्लोकस्यास्य मा तृ चे ट स्ये यं कृतिरिति वदन्ति।

जीवो वात्मा वा भावाश्च विविधाः कल्प्यन्त इत्युक्तं प्राक्। कथं नु सा कल्पना भवतीतीदानीमुच्यते—

**अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता।**
**सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥१७॥**

**यथा रज्जुरन्धकारे** स्वरूपेणा**निश्चिता**नवधारिता **सर्पधारादिभिर्भावैः** सर्पोऽयमुदकधारेयमित्यादिभिर्विविधैः पदार्थै**र्विकल्पिता** भवति **तद्वद् आत्मा** वक्ष्यमाणैः प्राणादिभिरनन्तैर्भावैः (२. १९-३०) र्विकल्पितो भवति ॥[1]

अथ कथं सा कल्पना निवर्तत इत्याह—

**निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते।**
**रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥१८॥**

**रज्ज्वां** स्वरूपेण **निश्चितायां** सत्यां **यथा** सर्पधारादिरूपो **विकल्पो** विनिवर्तते। भवति च तत्र **रज्जुरेव** केवल**मित्यद्वैतं तद्वदात्मविनिश्चयो** भवति। आत्मनि विनिश्चिते प्राणादिविकल्पो विनिवर्त्तते भवति च तत्रात्मैवेत्यद्वैतबोधः ॥[2]

---

१। अस्ति शान्तिरक्षितकृता मध्यमकालङ्कारकारिका तद्वृत्तिश्च। साम्प्रतं केवलमियं भोटभाषायामेव लभ्यते। इह (९३तमकारिकायां वृत्तौ) शान्तिरक्षितोऽस्यागमशास्त्रस्य द्वितीयात्तृतीयाच्च प्रकरणात् काश्चित्कारिका उद्धरति। तास्वन्यतमेयमनिश्चितेत्यादिः। भोटपाठे प्रथमपादे अन्धकार इत्यत्र अन्धकारबिल इति लभ्यते। नूनमिह स्तोकमधिकं संयुक्तं छन्दोऽनुरोधात्। द्वितीये तु सर्पधारेति सर्पस्य धारेति व्याख्यातम्।

२। इह कारिकायां तृतीये पादे रज्जुरेवेत्यत्र रज्जुरेकैवेति, चतुर्थे च पादे आत्मविनिश्चय इत्यत्र आत्मा विनिश्चित इति तत्रैव भोटभाषासम्मतः पाठः।

यद्यात्मैवैक इति निश्चयः कथमेषोऽनुपदमेव वक्ष्यमाणैः प्राणादिभिरनन्तैर्भावैर्विकल्पितो भवतीत्याह—

**प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः ।**
**मायैषा तस्य देवस्य ययायं मोहितः स्वयम् ॥१९॥**[1]

५ स आत्मा **प्राणादिभि**[2]**रनन्तैर्भावैर्विकल्पितो** भवतीत्येषा **तस्य** पूर्वोक्तस्य **देवस्य** द्योतमानस्यात्मनो **माया** । **यया** माययायं देव[3] आत्मा **स्वयं मोहितो** भवति ॥[4]

भिद्यते दृष्टिः पुंसाम् । एकमेव हि वस्तु बहुभिर्बहुधा दृश्यते । इहाप्यात्मकल्पना पुरुषभेदाद्भिद्यते । अतो यैः पुरुषैर्यैश्च भावैरात्मा
१० विकल्पितस्तान्कांश्चिदाह—

**प्राणा इति प्राणविदो भूतानीति च तद्विदः ।**
**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥२०॥**[5]

प्राणशब्दो वायुविकारवचनो ब्रह्मवचनो वा । अत्र तु ब्रह्मवचन इति शक्यते व्याख्यातुम् । तथा च श्रुतिः । "प्राणो ह्येषः यः सर्वभूतैर्विभाति" ( मु. उ. ३.४ ) । "प्राणे सर्वं प्रतिष्ठितम्" ( प्र. उ. २.४ ) ।
१५ "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" ( छा. उ. १. ११. ४-५ ) । इत्यादिरनेका । बृ. उ. ४. ४. १८ । दृश्यतां ब्र. सू. १. १. २३ ।[6]

---

१ । २. १२ ।

२ । २. २०-३० ।

२० ३ । श्रुतावप्यात्मा देव इत्युच्यते ( बृ. उ. ४. ४. १९ ) यथा "यदैतमनुपश्यन्त्यात्मानं देवमञ्जसे"ति । दृश्यतामत्र द्वितीये प्रकरणे द्वादशकारिकावृत्तिः ।

४ । अस्या अपि कारिकाया भोटपाठो लभ्यते । तत्र तु चतुर्थपादे अस्ति किञ्चित्स्खलितम् ।

५ । इयमपि कारिका भोटभाषायामुक्ते स्थाने गृहीता ।

२५ ६ । आ न न्द गि रि स्त्वाह "प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा । स जगतो हेतुरिति प्राणविदो है र ण्य ग र्भा वा वै शे षि का वा श्च कल्पयन्तीति ।"

**भूतानी**ति पृथिव्यादीनि पञ्च सुप्रसिद्धानि। मा ध्य मि का नां सौ त्रा न्ति का नां चाकाशं बिना चत्वार्येव भूतानि (च. श. १. ३, ५)। वै भा षि का स्त्वाकाशमप्यभ्युपगच्छन्ति (अ. को. १. ८)। भू त वि दो नाम लौ का य ति काः। ते हि पृथिव्यादीनि चत्वारि भूतानि जगतः कारणानीत्याहुः। ५

**गुणाः** सत्त्वरजस्तमोरूपाः। साम्येनावस्थितास्त एव प्रकृतिरूपेण जगतः कारणमिति **गुणविदः** सा ङ्ख्या मन्यन्ते।

**तत्त्वानि** त्रीणि आत्मा विद्या शिवश्चेति **तत्त्वविदः** शै वाः (भा)॥[1]

> **पादा इति पादविदो विषया इति तद्विदः।** १०
> **लोका इति लोकविदो देवा इति च तद्विदः॥२१॥**

**पाद**श्चतुर्थो भागः। "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" (ऋ. स. १०. ९०. ३)। "पादोऽस्य सर्वा भूतानि" (छा. उ. ३. १२. ६)। "वाक्पादः प्राणः पादश्चक्षुः पादोऽग्निः पादो वायुः पादः" (छा. उ. ३. १८. २; ४. ६-८) इत्यादिभ्यः श्रुतिभ्यो ज्ञेयः पादः। १५ आ न न्द गि रि स्त्वाह पादशब्देनात्र विश्वतैजसादय आत्मनश्चत्वारः पादा इति। **विषया** नाम शब्दादय इन्द्रियविषयाः। "शब्दादयो विषया भूयो भूयो भुज्यमानास्तत्त्वमिति वा त्स्या य न प्रभृतीनां मत"मिति (आ)। अत्र प्रभृतिशब्देन लौ का य ति काः केचिद्बौद्धा ब्राह्मणिकाश्च ता न्त्रि काः स्युः। ते हि विषयोपभोगं प्रशंसन्ति।[2] **लोकविदः**[3] २०

---

१। इयमपि कारिका भोटभाषायामुक्ते स्थाने गृहीता।

२। सु स. ३७ पृ; चि प्र, पृ २। अत्रेदमुक्तम्—

> "स्वाधिदैवतयोगात्मा जगदर्थकृतोद्यमः।
> भुञ्जानो विषयान्भोगी मुच्यते न तु लिप्यते॥ १७॥
> यथैव विषतत्त्वज्ञो विषमालोक्य भक्षयन्। २५
> केवलं मुच्यते नासौ रोगमुक्तस्तु जायते॥ १८॥" इति।

३। अन्येऽपि केचन लो क वि दः उपरिष्टाद् (२. २७) वक्ष्यन्ते।

पौराणिकाः। ते हि भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीत्याहुः (आ)। **देव-विदो** नाम ते ये देवताकाण्ड-(निघण्टु-निरुक्त, ७) मनुसरन्तो देवताकाण्डीया इत्युच्यन्ते। अग्नीन्द्रादयो देवास्तत्तत्-फलदातारो नेश्वर इति देवताकण्डीया इति (आ)॥

५ वेदा इति वेदविदो यज्ञा इति च तद्विदः।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः॥२२॥

**वेदविदो** वेदपाठकाः (आ)। **तद्विदो** यज्ञविदो याज्ञिका बौधायन प्रभृतयः (आ)। **भोक्तृविदः** साङ्ख्याः (आ)। तन्मत आत्मा भोक्ता न तु कर्ता। अन्यथापि शक्यमिदं व्याख्यातुम्।
१० यथा "भोक्तारं यज्ञतपसामिति" (भ. गी. ५. २९)। "भोक्ता च प्रभुरेव चेति" (९. २४)। "भर्ता भोक्ता महेश्वर इति" च (१३. २२)। द्रष्टव्या च मदीया वृत्तिः (१. ६)। **भोज्य-विदो** नाम सूपकाराः। तेषां मते भोज्यमेव वस्तु (आ)। अत्रेयं श्रुतिः "अन्नं ब्रह्मेति व्यजानादिति" (तै. उ. ३. २)। "अन्ने हीदं सर्वं
१५ स्थितमिति" (छा. उ. १. ३. ६) च॥

सूक्ष्मा इति सूक्ष्मविदः स्थूला इति च तद्विदः।
मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः॥२३॥

**सूक्ष्मविदो** नाम ते ये खल्वात्मानं सूक्ष्ममणुपरिमाणमातिष्ठन्ते (ब्र. सू. शाङ्करभाष्यम्, २. ३. १९-३२)। यथा निम्बार्क-
२० रामानुज-मध्व-वल्लभास्तदनुगामिनश्च। अत्राह श्रुतिः। "सूक्ष्माच्च तत्सूक्ष्मतरं विभातीति" (मु. उ. ३. १. ७)। "एषोऽणुरात्मा चेतसा वेदितव्य" इति (मु. उ. ३. १. ९)। "स वा एष सूक्ष्मोऽग्राह्य" इति (मै. उ. २. ५) च॥ **स्थूल-विदो** नाम केचिल्लौकायतिकाः। ते हि स्थूलं देहमेवात्मेत्यभ्युपगच्छन्ति। **मूर्तविद** आगमिकाः
२५ शैवा वैष्णवा वा। "मूर्तस्त्रिशूलधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिका" इति (आ)। इयं च श्रुतिरत्र स्मरणीया "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेति" (बृ. उ. २. ३. १)।

"अमूर्तः सर्वाकारः शून्यो निःस्वभावः परमार्थ इति शू न्य वा दि न" इति (आ)। उदाहृता बृ ह दा र ण्य क श्रुतिरपीह स्मर्तव्या॥

काल इति कालविदो दिश इति च तद्विदः।
वादा इति वादविदो भुवनानीति तद्विदः॥२४॥

**कालविदो** नाम ये कालं जगत्कारणं मन्यन्ते। ते च ५ ज्योतिर्विदः (आ)। एषां मते कालः परमार्थः। अ. स. ११. ५३, ५४; श्वे. उ. १. २; ष. स. गुणरत्नटीका (पृ. १०)। **तद्विदो** दिग्विदः। एते च स्वरोदयविदो ये विहङ्गादीनां स्वरेण शुभाशुभं निमित्तं जानन्ति (आ)। तेषां मते दिशः परमार्थाः। वा द वि दो नाम धातुवादमन्त्रवादादिवादिनः (आ)। नै या यि का नां वादो (न्या. सू. १० १. १. १, २-१) ऽप्यत्र गृहीतः। भु व न वि दो नाम ये चतुर्दश भुवनानि वस्तूनीति मन्यन्ते। ते च भुवनकोशविदः (वि. पु. ३३-४० भुवनविन्यासो ज्योतिष्प्रचारश्च)॥

मन इति मनोविदो बुद्धिरिति च तद्विदः।
चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः॥२५॥ १५

**मनोविदो बुद्धि-विद श्चित्तविद** इति त्रयोऽप्येते विज्ञानवादिनो बौद्धाः। बुद्धिशब्देनेह विज्ञानं लक्षितम्। "चित्तं मनोऽथ विज्ञानमेकार्थ"मिति व सु ब न्धुः (अ. को. २. ३४; त्री. नि. १. २१; सं. नि. ६४)। एकमेव चित्तं क्रियाभेदाद्बहुधोच्यते। **धर्माधर्म-विदो** नाम मी मां स काः॥ २०

पञ्चविंशक इत्येके षड्विंश इति चापरे।
एकत्रिंशक इत्याहुरनन्त इति चापरे॥२६॥

पञ्चविंशतिसंख्यकः प्रपञ्चो वस्त्विति सा ङ्ख्याः। ते च पञ्चविंशतिः पदार्थाः। यथा प्रधानं मूलप्रकृतिः। महदहङ्कारपञ्चतन्मात्राणीति

सप्त प्रकृतिविकृतयः। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च विषयाः मनश्चैकमिति षोडश विकाराः। न प्रकृतिर्नविकृतिः पुरुषश्चेति साकल्येन पञ्चविंशतिः। **षड्विंश इति चापरे।** अत्र **अपरे** पा त ञ्ज लाः। ते किलेश्वरमधिकं पश्यन्तस्तेन सार्धमुक्तान्पञ्च-
५ विंशतिं पदार्थानभ्युपगच्छन्तीति षड्विंशतिपदार्थवादिनः। **एकत्रिंशक इत्याहुः** पा शु प ताः। तेषां नये ह्येकत्रिंशत्तत्त्वानि। यथा १। शिवः। २। शक्तिः। ३। सदाशिवः। ४। ईश्वरः। ५। विद्या।[1] ६। पुरुषः। ७।[3] माया। ८। कालः। ९। नियतिः। १०। कला। ११। अविद्या।[2] १२। रागः।[3] १३।
१० प्रकृतिरव्यक्तं वा। १४। महत्। १५। अहङ्कारः। १६। मनः। १७—२१। पञ्च ज्ञानेन्द्रियाणि। २२—२६। पञ्च कर्मेन्द्रियाणि। २७—३१। पञ्च तन्मात्राणि। ३२—३६। पञ्च च भूतानीति[4] साकल्येन षट्त्रिंशत्। तथापि यथोक्तं म हा र्थ म ञ्ज री-( पृ. ५० ) टीकाकारेण अष्टमादीनि ( ८—१२ ) पञ्च तत्त्वानि केवलं मायाया
१५ विभूतिरूपाणीति शक्यानीहागणयितुमिति लभ्यत इहापेक्षितै-कत्रिंशत्संख्या॥

इदमन्यच्चिन्त्यम्। त त्त्व प्र का शे ( ४. २ ) अव्यक्तमहतोर्मध्ये गुण इत्यपरं तत्त्वं दृश्यते। न पुनस्तन्म हा र्थ म ञ्ज र्या म्। स र्व द र्श न सं ग्र ह सङ्कलिते शैवदर्शने ( पृ. ८७ ) त्वपरः कश्चिद्भेदो द्रष्टव्यः॥

२० न वस्तूनामियत्तास्तीति मन्यमानाः केचिदनन्तः पदार्थमेव इत्याहुः ( आ )।

---

१। एतत्पञ्चकं पतिरित्युच्यते।

२। यथा म हा र्थ म ञ्ज र्या म् ( पृ. ५० )। अन्यत्र ( त. प्र. ३,४ ) तु स्पष्टमेव विद्येति पठ्यते विव्रियते च टीकाकृता शुद्धविद्येति।

२५ ३। ६-१२ तत्त्वानि पशुरिति कथ्यते।

४। १३-३६ तत्त्वानि पाशनाम्ना प्रसिद्धानि। म. म. १३-२९ ; त. प्र. २.१-११ ; ३.४, १२।

लोकाल्लोँकविदः प्राहुराश्रमा इति तद्विदः।
स्त्रीपुंनपुसकं लैङ्गा परापरमथापरे ॥२७॥

लोकविदो[1] लौकिकाः। ते खलु लोकानुरञ्जनमेव तत्त्वमिति मन्यन्ते (आ)। आश्रमविदो दत्तप्रभृतयो धर्मशास्त्रकाराः। लैङ्गा लिङ्गविदो वैयाकरणाः। ते किल स्त्रीपुनपुंसकं शब्दजातं तत्त्वमिति वदन्ति (आ)। अथ अपरे ब्रह्मवादिनो परं चापरं चेति परापरं ब्रह्म प्राहुः। तदुक्तं (मै. उ. ६. २२) "द्वे ब्रह्मणी वेदितव्ये परं चैवापरं चेति॥"

सृष्टिरिति सृष्टिविदो[2] लय इति च तद्विदः।
स्थितिरिति स्थितिविदः सर्वं[3] चेह तु सर्वदा ॥२८॥ १०

सृष्टि-स्थिति-लय-विदः पौराणिकाः (आ)। पूर्वोक्तमेतत्सर्वं च कल्पनाजातमिह आत्मनि सर्वदा वर्तते॥

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति।
तं चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥२९॥

यस्य पुरुषस्य सम्बन्धे कश्चिदाचार्योऽन्यो वा यं भावं १५ प्राणादिरूपं दर्शयेद् अयमात्मा प्राण इत्यादिना स पुरुष आत्मानं तं तद्भावरूपं पश्यति। असौ च आत्मा तस्य पुरुषस्य सम्बन्धे स तत्तत्प्राणादिरूपो भूत्वा तं पुरुषमवति प्रीणयति। ततश्च तद्ग्रहः तस्मिन् दर्शिते भावे ग्रहो निर्बन्धोऽभिनिवेशो यस्य स तथोक्तः सन् तं भावं समुपैति समुपगच्छति। तस्य २० पुरुषस्य तस्मिन्दर्शिते भावे अयं प्राणादिरूप एवेत्यभिनिवेशो जायत इति भावः॥

---

१। एते पूर्वोक्तेभ्यो (२. २१) भिद्यन्ते

२। सृष्टिचिन्तकाः, १. ७।

३। सर्वं इति पाठे सर्वे कल्पिता भावा इति व्याख्येयम्।

एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः।
एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः ॥३०॥

**एष** आत्मा वस्तुतो**ऽपृथग**भिन्नोऽपि पूर्वोक्तैः प्राणादिभिर्भावैः **पृथग्** भिन्न **एव लक्षितो** दृष्टो विकल्पितो भवति। रज्जुरिव ५ सर्पादिभिर्भावैः। उक्तं हि प्राक् (२. १९) "प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पित" इति। **यः** पुरुष **एवं तत्त्वेन वेद** वेत्ति **सोऽविशङ्कितो** दोषाशङ्कारहितः **कल्पयेत्** कल्पयितुमर्हतीति भावः। स आत्मानं प्राणादिरूपेण कल्पयन्नपि तत्तत्कल्पनादोषेण न स्पृश्यते। रज्जुसर्पस्थले केवलं रज्जुरेव वर्तते न पुनः सर्पोऽपि। १० अतो न तत्र कश्चिद्वस्तुतो भेदः। यः सर्पः सा रज्जुरेवेति। य एवं वेत्ति न स तत्र सर्पदर्शनाद्बिभेति। प्रकृतेऽप्येवं केवलमात्मैव विद्यते न पुनः प्राणादिरपि। अतः प्राणादिकल्पनां कुर्वन्नपि पुरुषो न दोषभाग्भवतीति द्वितीयार्धाभिप्रायः॥

उक्तकल्पनागत एव विशेषश्चिन्त्यते—

१५ भावैरसद्भिरेवायमद्वयेन च कल्पितः।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥३१॥(३३)[1]

यथा**सद्भिरेव** सर्पधारादिभि**र्भावैरद्वयेन** च रज्ज्वादिद्रव्येण सर्पोऽयं धारेयमिति कल्प्यते एवमसद्भिरेव प्राणादिभिरनन्तैर्भावैरद्वयेन ग्राह्यग्राहकरहितेन विकल्पास्पदभूतेनात्मना चायमात्मा कल्प्यते। उक्तं २० हि पूर्वं (२.१२) "कल्पयत्यात्मनात्मानमात्मा देवः स्वमायये"ति। कल्प्यन्ते चाद्वयेनैवात्मना **भावाः** अप्यनन्ताः। नास्ति निरास्पदा

१। यद्यपीयं कारिका परीक्षितेषु पुस्तकेषु संस्करणेषु चास्मिन्प्रकरणे त्रयस्त्रिंशी (३३) तथाप्यत्रैकत्रिंशीति(३१) पठितुं युक्तेति प्रतिभाति। तयैव हि संगत-कारिकासम्बन्धः दिक्ष्यते। न चानया "न निरोध" इत्यादिकया २५ द्वात्रिंशा(३२)कारिकया वर्तते कश्चित्सम्बन्धः। अत उत्तरकारिकाणामपि संख्या यथोचितं परिवर्तनीयेति मया तथैव कृतम्।

क्वापि कल्पना। कल्पनायां हि कल्प्यमानायां यत्कल्प्यते यत्र च कल्प्यते तद्द्वयमपेक्ष्यते। प्रकृते कल्पनास्पदभूतेनाद्वयेनात्मना प्राणादिभिश्चासद्भिर्भावैरात्मा कल्प्यते। भावा अपि च तादृशा अद्वयेनात्मना कल्प्यन्ते। अत उभयकल्पनायामप्यद्वयस्याव्यभिचारा-
द्वयता शिवा॥ ५

**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।**
**तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥ ३२(३१)**

**यथा स्वप्नमाये दृष्टे यथा** वा **गन्धर्वनगरं**[1] **दृष्टं वेदान्तेषु विचक्षणैरिदं विश्वम**पि **तथा दृष्टम्।** मिथ्या कल्पितमिति
भावः। १०

गन्धर्वनगरोपमा दुर्लभा प्राग् बौद्धेभ्यः। एतत्कारिकार्थोऽपि बहुशस्तद्ग्रन्थेषूपलभ्यते। दिङ्मात्रमुदाह्रियते—

"यथैव गन्धर्वपुरं मरीचिका
यथैव माया सुपिनं यथैव।
स्वभावशून्या तु निमित्तभावना १५
तथोपमाञ्जानथ सर्वभावान्॥" स. सू. ६ (पृ. २१)।

एवं म. वृ., पृ. १७८ ; चि. प्र. १६ ; म. का. १७. ३३—
"गन्धर्वनगराकारा मरीचिस्वप्नसन्निभाः।"

ल. सू. १०. १४४ ( पृ. २८३ )
"गन्धर्वनगरस्वप्नमायानिर्माणसादृशाः।" २०

तत्रैव च १०. ८७५ ( पृ. ३७४ )—
"मायास्वप्ननिभा भावा गन्धर्वनगरोपमाः।
मरीच्युदकचन्द्राभाः स्वविकल्पं विभावयेत्॥"

---

१। को वेत्ति कीदृशं नाम गन्धर्वनगरं भवतीति। न पुनरेतत्सर्वथैव न भवति। असत्स्वपि सौधादिषु न खलु न तानि दृश्यन्ते। युरोपपयोधितटेषु २५ विपर्यस्ताः पोतप्रतिमूर्तयो नासाधारणदर्शनाः। सौधाश्चाट्टाश्च भूभागाश्चोर्वरास्तत्र च चरन्त्यो गावः परे चैतादृशा भावाः प्रायस्तत्र तत्र दृश्यन्ते यद्यप्येते न वस्तुसन्तः। यथाहुर्विचक्षणाः। दि प्याकेटेस अफ् केमार्री मरगाणा, पृ ६४९।

अन्यदपि तत्रैव (१०. २७६, २६१ ; पृ. ३०१, ३०३)। उक्तं च भगवता शङ्करेण स्वकीये ब्रह्मसूत्रभाष्ये (२. २. २८) प्रदर्शयता बौद्धमतम्—"स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्तीति।"

५ उक्तमाचार्येण मतमिदं वेदान्तेषु विचक्षणानामिति। एतेन स्वमतमेव तेन प्रशंसितम्। सन्ति पुनरन्ये वैदान्तिका ये नेदमनुवर्तन्ते॥

दर्शितः समासेन वेदान्तसिद्धान्तः। अथ परमार्थतया तद्विशेषो वर्ण्यते—

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**१० न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ ३३(३२)**

यदेदं विश्वं स्वप्नमायादिसङ्काशं तदा वक्तव्यं न कस्यापि **निरोधो** भङ्गो नाशः। न चास्ति कस्याप्युत्**पत्ति**र्जातिः। न कश्चिज्जायते भावो न च निरुध्यते। अत्रोत्पत्तिशब्दात्प्राङ् निरोधशब्दप्रयोगादुत्पत्तेरत्यन्तमसद्भावो व्यज्यते। यथोक्तं चन्द्रकीर्तिना १५ मध्यमकवृत्तौ (पृ. ३)। एवं न कश्चिद्**बद्धो** जीवो न च कश्चित् **साधको** बन्धनतो मुक्तेः। एवं न कश्चिन्**मुमुक्षुर्न वै** कश्चिन्**मुक्तः**।

निष्कर्षोऽयं बौद्धमहायानसिद्धान्तस्य। "न निरोधो न चोत्पत्ति"रित्युक्तिस्तु वस्तुतो नागार्जुनस्य मध्यमककारिकायां (पृ. ३) प्रथमकारिकायाः। "अनिरोधमनुत्पाद"मिति सुप्रसिद्धं २० तत्र तद्वचनम्। उक्तं च बोधिचर्यावतारे (९. १५०)—

"एवं च न निरोधोऽस्ति न च भावोऽस्ति सर्वदा।
अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत्॥" इति।

लङ्कावतारे (पृ. १६१) च "अनिरुद्धा अनुत्पन्नाश्च भगवता सर्वधर्मा देश्यन्त" इति।

२५ पुनरपि तत्रैव (२. १ ; १०. १)—

"उत्पादभङ्गरहितो लोकः खपुष्पसन्निभः ॥" इति।
प्रागुक्तयोर्बन्धमोक्षयोरप्येवमेव बौद्ध सिद्धान्तः। यथोक्तं च तुः-शतके (१७१)

"कस्यचित्केनचित्सार्धं बन्धो नाम न विद्यते।
परेण सह बन्धस्य विप्रयोगो न युज्यते॥" इति। ५

लङ्कावतारेऽपि "नात्र कश्चिन्महामते बध्यते न च मुच्यते।" इति। पुनरपि तत्रैव (१०.१७५) "न मोक्षो न च बन्धनम्" इति। द्रष्टव्यं च आर्यरत्नकूटसूत्रं यथोद्धृतं मध्यमकवृत्तौ (पृ. ४१, ३३१)। बन्धमोक्षपरीक्षापरिच्छेदश्च (१६) मध्यमककारिकाया तद्वृत्तिश्च तत्रत्या। इदमिह स्तोकमुद्धियते वृत्तितः (पृ. २९०)— १०
"यद्यपि त्वया संसारनिर्वाणे प्रतिषिद्धे तथापि बन्धमोक्षौ विद्येते। न चाविद्यमानस्य भावस्वभावस्य बन्धमोक्षौ सम्भवतः। तस्माद्बन्धमोक्षसद्भावाद्विद्यत एव भावानां स्वभाव इति। उच्यते। स्याद्भावानां स्वभावो यदि बन्धमोक्षावेव स्याताम्। न तु स्त इत्याह (म. का. १६. ५)— १५

'न बध्यन्ते न मुच्यन्त उदयव्ययधर्मिणः।'

आर्यरत्नकूटे (म. वृ. ४६ पृ.) च—
"अथायुष्मान्सुभूतिस्तान्भिक्षूनेतदवोचत्। कुत्रायुष्मन्तो गताः। कुतो वागताः। तेऽवोचन्। न कचिद्गमनाय न कुतश्चिदागमनाय भदन्त सुभूते भगवता धर्मो देशितः। आह। को नामायुष्मतां शास्ता। आहुः। २० यो नोत्पन्नो न परिनिर्वास्यति। आह। कथं युष्माभिर्धर्मः श्रुतः। आहुः। न बन्धनाय न मोक्षाय।" इति।

उक्तं च महायानसूत्रालङ्कारे (६. २, पृ. २२)—

"न सन्न चासन्न तथा न चान्यथा
न जायते व्येति न चावहीयते। २५
न वर्धते नापि विशुध्यते पुन-
र्विशुध्यते तत्परमार्थलक्षणम्॥" इति

इयं तु कारिकास्मदाचार्यस्य बह्वीष्वर्वाचीनासूपनिषत्सु धर्मग्रन्थेषु दर्शनग्रन्थेषु च कचित्कचित्पाठभेदेनोद्धृता। यथा अवधूतोपनिषदि(८)

---

१। उपमाह्वयकारिका ६२— ३०

"तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।" इति।

आत्मोपनिषदि (३१) त्रिपुरातापन्युपनिषदि (५. १०) ब्रह्मबिन्दूपनिषदि (१०) च ॥

उक्ताद्वयता(२. ३१—३३)। अथोत्तरकारिकायां तद्विशेष उच्यते—

**नान्यभावेन[1] नानेदं न स्वेनापि कथञ्चन ।**
५ **न पृथङ् नापृथक्किञ्चिदिति तत्त्वविदो विदुः ॥३४॥**

इदं किल श्रूयते "नेह नानास्ति किञ्चने"ति (बृ. उ. ४. ४. १९ ; क. उ. ४. ११)।[2] तदेवेह व्याख्यायते। **इदं** दृश्यमानं विश्व-**मन्यभावेन** परभावेन **कथञ्चन** केनापि प्रकारेण **न नाना** पृथक्। **स्वेन** स्वभावेनापि **कथञ्चन न** नाना। सर्वमभिन्नमद्वयमित्यर्थः।

१० जपाकुसुमादिसन्निधानात्स्वच्छोऽपि स्फटिकोऽस्वच्छः प्रतिभाति। न पुनस्तावता स स्वभावेन परभावेन वा वस्तुतोऽस्वच्छो भवति। न खल्वस्य स्वाभाविकं स्वच्छत्वं कथमप्यपगच्छति। तदुक्तं शारीरकभाष्यकारेण शङ्करेण (ब्र. सू. ३. २. ११) "नहि स्वच्छः सन्स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति। भ्रममात्रत्वादभिनिवेशस्य।
१५ उपाधीनां चाविद्याप्रत्युपस्थापितत्वादिति।" एवमिहापि न किञ्चिदिदं कथञ्चन स्वभावेन परभावेन वा नानास्ति। "विद्यते नहि नानात्वं तेषां क्वचन किञ्चनेति" निराकृतमाचार्येण नानात्वमन्यत्रापि (४. ९१)। किञ्चित्खलु भवत्स्वभावेन वा भवेत्परभावेन वा। नान्यथा। प्रकारान्तराभावात्। न पुनस्तदुभयथापि सम्भवति। स्यादेतद्यदि स्वभावः
२० परभावो वा नाम कश्चित्स्यात्। न त्वस्ति। किञ्च। सति स्वभावे परभावः स्यात्। यदा तु स्वभाव एव नास्ति कुतस्तदा परभावः। तदेतन्मीमांसितं विस्तरेण नागार्जुनेन मध्यमककारिकायां

---

१। परीक्षितेषु सर्वेषु पुस्तकेषु संस्करणेषु च नात्मभावेन इत्येव पाठ उपलभ्यते न पुनर्नान्यभावेनेति। तथाप्यर्थपर्यालोचनयैष एव पाठः साधीया-
२५ निति प्रतिभाति। तथा हि। आत्मभावो नाम स्वभावः। पर्यायशब्दावेतौ। कारिकायां स्वेनेति स्वशब्देन स्वभाव एव लक्ष्यते। तथा च यदि आत्मभावेनेत्येव पाठो गृह्यते स्वेन (स्वभावेन) इत्युक्तिः पुनरुक्ता भवेत्। न चायं पाठो विवक्षितमर्थं बोधयेत्। अन्यत्रेह (४. ९३) प्रयुक्त आचार्येणान्यभावशब्दः।

३० २। "नेह नानास्ति वाङ्मनानादित" नानात्वनिषेधः पुनर्वक्ष्यते (३. २४)।

स्व भा व प री क्षा भिधाने पञ्चदशे (१५) परिच्छेदे व्याख्यातं च तद्वृत्तौ च न्द्र की र्त्ति ना। एव मा चा र्यः पूर्वार्धेन श्रुतिमूलकं मतं प्रदर्श्यापरार्धेन केषाञ्चित्तत्त्वविदां मतमनुमन्यते **न पृथङ्गिति। तत्त्वविदो विदुः किञ्चिदपि न पृथङ् न वापृथग्** भवतीति। त एते तत्त्वविदो मा ध्य मि का एवेति सुस्पष्टम्। यथा ना गा र्जु न स्य "अनिरोधमनुत्पाद" ५
मित्यादि प्रतीत्यसमुत्पादलक्षणमुद्धृतमिहोत्तरकारिकावृत्तौ (२. ३५) व्याख्यातं च च न्द्र की र्त्ति ना (म. वृ., पृ. ३, ११)। "अनेकार्थ-मनानार्थ"मिति ना गा र्जु न स्य पदद्वयम्। विवृतं चेदमित्थं च न्द्र-की र्त्ति ना "एकश्चासावर्थश्चैकार्थोऽभिन्नार्थः। न पृथगित्यर्थः। नानार्थो भिन्नार्थः। पृथगित्यर्थ" इति। इदं चोक्तं ना गा र्जु ने न (म. का. १०. १६)- १०

"आत्मनश्च सतत्त्वं ये भावानां च पृथक् पृथक्।
निर्दिशन्ति न तान्मन्ये शासनस्यार्थकोविदान्॥"

एवं च स्फुटमिह यदा चा र्ये णादौ कारिकायाः प्रथमार्धेनोपनिषन्मतं प्रदर्शितम्। तत्राप्यनुसृता युक्ति र्मा ध्य मि का ना म्। ततो द्वितीयार्धे तत्त्वविदां मा ध्य मि का नां "न पृथङ् नापृथगि"ति मतमनुमोदितं यथो- १५
त्तरत्रापि (४. ५) करिष्यते। इदं पुनर्द्रष्टव्यं यदस्मदा चा र्य स्य म ध्य म क नयव्यञ्जकं "न पृथङ् नापृथगि"ति वचनं ना गा र्जु न स्य च "अनेकार्थमनानार्थ"मिति कथनमर्थत एकमेव। नानयोर्मनागप्यर्थतो भेदः। द्र : ४. ६१, वृत्तिश्च तत्रत्या॥

सेयमद्वयतैव प्रपञ्चोपशमो नाम चरमः पुमर्थ इत्याह— २०

**वीतरागभयक्रोधैर्[1]मुनिभिर्वेदपारगैः[2]।**
**निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः॥३५॥**

सोऽयं प्रागुक्तो **निर्विकल्पः** प्राणादिरूपसर्वविकल्पशून्यो**ऽद्वयो** ग्राह्यग्राहकभूतरूपद्वयविरहितः **प्रपञ्चोपशमो**ऽनुपदमेव व्याख्यायमानस्य प्रपञ्चस्योपशमोऽप्रवृत्ति**र्वीतरागभयक्रोधैर्वेदपारगैर्मुनिभिर्दृष्टः।** २५

---

१। "वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" इति भ. गी. २. ५६।

२। किमेष वेदपारगशब्दो वेदपार-ग इति वेद-पारग इति वा व्याख्येयः। आद्ये "वेदान्तेषु विचक्षणै"रिति (२. ३१) यत्प्रागुक्तं तेनैव संवदेत्। अन्त्येऽर्थः सुविस्पष्टतरः।

प्रपञ्चोपशमशब्दो बौद्ध पूर्ववर्तिषु ग्रन्थेष्वतिमात्रं दुर्लभः। दृश्यते त्वर्वाचीनासूपनिषत्सु[1] ग्रन्थेषु वा।

अयं प्रपञ्चशब्दो व्यक्तीकरणार्थाद्वा विस्तारकरणार्थाद्वा प्रपूर्वकात्पञ्चतेर्धातोः। अस्यैवापरं रूपं पञ्चतिर्यतः पञ्जिकेति। राजशेखरस्त्वाह (का. मी., पृ. ५) "विषमपदभञ्जिका पञ्जिके"ति। हेमचन्द्रोऽप्येवमेवाभिप्रैति (अ. चि. २. १६८, १७०) "निरुक्तं पदभञ्जनं पञ्जिका पदभञ्जिकेति" ब्रुवन्। इतः प्रतीयते पञ्जिकेति पदं भञ्जेर्धातोरिति।[2] तथा च भञ्जिकैव पञ्जिकाकारेण परिणता। यथा वास्त्वस्य प्रपञ्चशब्दस्य व्युत्पत्तिः। भूयानस्य प्रयोगोऽर्वाचीनेषु वैदान्तिकेष्वन्येषु च ग्रन्थेषु। तत्सम्मतोऽस्यार्थो जगत्तद्विस्तारो वा। समासेनेदं दृश्यं जगदेव वा प्रपञ्च्यत इति कृत्वा प्रपञ्चः। बौद्ध नये त्वस्य व्युत्पत्तिलभ्योऽर्थो वाक्। प्रपञ्च्यतेऽनेन प्रपञ्चयतीति वा प्रपञ्चः। ततश्च यत्किमपि वाचा प्रकाश्यते स प्रपञ्चः। यथा विस्पष्टं व्याचष्टे चन्द्रकीर्तिः (म. वृ., पृ. ३७३)—"प्रपञ्चो हि वाक्प्रपञ्चयत्यर्थानिति कृत्वा। 'प्रपञ्चैरप्रपञ्चितम्' (म. का. १८. ९.) वाग्भिरव्याकृतमित्यर्थः।" द्रष्टव्यः प्रागेव (१.१७) प्रदर्शितो विस्तरोऽस्य व्याख्यानस्य (म. वृ., पृ. ३५०)।

प्रपञ्चोपशमः प्रपञ्चोपरमः (म. वृ., पृ. ११) प्रपञ्चविलयश्चाभिन्नार्थाः। अयं च शिवः प्रपञ्चोपशमो गौडपादानुगामिनां वैदान्तिकानां मोक्षो[3] बौद्धानां तु निर्वाणं वा शून्यं वा। इदमेव च प्रयोजनं समग्रस्य मध्यमकशास्त्रस्य। तदुक्तं चन्द्रकीर्तिना (म. वृ., पृ. ४)—

---

१। नृ. पू. उ. ४. १; नृ. उ. उ. १; रा. उ. उ. २; मा. उ. ७ (इयमुपनिषच्छारीरकभाष्यकर्तुर्भगवच्छङ्कराचार्यात्प्राचीनेत्यतिमहान्संशयः। प्रपञ्चशब्दः पुनः श्वेताश्वतरे (६. ६) कैवल्ये (१७) च दृश्यते।

२। अत एव संस्कृते पालौ च सौगतग्रन्थेषु विशदव्याख्यानार्थस्य विभङ्गशब्दस्य तावानतिप्रचुरः प्रयोगः।

३। चिन्तितोऽयमर्थो वेदान्तोक्तदिशा स्वकीये शारीरकभाष्ये (३. २. २१) शङ्करेण।

"सर्वप्रपञ्चोपशमशिवलक्षणं निर्वाणं शास्त्रस्य प्रयोजनं निर्दिष्ट"मिति।
स्वयं चाह ना गा र्जु नः ( म. वृ., पृ. ११ )—

"अनिरोधमनुत्पादमनुच्छेदमशाश्वतं।
अनेकार्थमनानार्थमनागममनिर्गमं॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवं। ५
देशयामास सम्बुद्धस्तं वन्दे वदतां वरं॥" इति।

अस्य शिवस्य प्रपञ्चोपशमस्य ( मा. उ. ७ ) बौ द्ध नयेन व्याख्यानमाह ना गा र्जु न श्च न्द्र की र्ति श्च ( म. का. २५. २४ )—

" 'सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः॥'

इह हि सर्वेषां प्रपञ्चानां निमित्तानां य उपशमोऽप्रवृत्तिस्तन्निर्वाणम्। स १० एव चोपशमः प्रकृत्यैवोपशान्तत्वाच्छिवः। वाचामप्रवृत्तेर्वा प्रपञ्चोपशमश्चित्तस्याप्रवृत्तेः शिवः। क्लेशानामप्रवृत्त्या वा प्रपञ्चोपशमो जन्म[नो]ऽप्रवृत्त्या शिवः। क्लेशप्रहाणेन वा प्रपञ्चोपशमो निरवशेषवासनाप्रहाणेन शिवः। ज्ञेयानुपलब्ध्या वा प्रपञ्चोपशमो ज्ञानानुपलब्ध्या शिवः॥" इति। १५

इदं चोक्तं ल ङ्का व ता रे ( १०. १३०, पृ. २६५ )—

"सर्वप्रपञ्चोपशमाद्भ्रान्तो नाभिप्रवर्तते।
प्रज्ञा यावद्विकल्प्यन्ते भ्रान्तिस्तावत्प्रवर्तते॥" इति।

निर्विकल्पशब्दस्त्वेवं व्याख्यायते ( म. वृ., पृ. ३७४ ) च न्द्र की र्ति ना— २०

"निर्विकल्पं तत् ( तदिति तत्त्वं, म. का. १८. ९ )। विकल्पश्चित्तप्रचारः। तद्रहितत्वात्तत्त्वं निर्विकल्पम्। यथोक्तं सूत्रे। परमार्थसत्यं कतमत्। यत्र ज्ञानस्याप्यप्रचारः। कः पुनर्वादोऽक्षराणामिति। एवं निर्विकल्पम्॥" इति।

एवं प्रपञ्चोपशममुक्त्वा कर्तव्यमुपदिशति—

तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम् ।
अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥३६॥

यस्माद्द्वयः प्रपञ्चोपशमः शिवः **तस्मादेनं** प्रपञ्चोपशम**मेव** **विदित्वा स्मृतिमद्वैते योजयेत्** ध्यायेदिति भावः। तया च स्मृत्या**द्वैतं समनुप्राप्य** समधिगम्य **जडव**ज्जड इव अप्रख्यापय-न्नात्मन महिमानमहमेवंविध इति भावः। **लोकमाचरेद्** व्यवहरेत्।

अत्र स्मृतिर्नाम नानुभूतविषयासम्प्रमोषः संस्कारजन्यं ज्ञानमेव वा। अपितु ध्यानम्। सौगततन्त्रे स्मृतिः पञ्चसु बलेषु सप्तसु च बोध्यङ्गेषु पठ्यते (ध. स. ६३, ६१ ; म. व्यु. ३८, ३१)। इदं चोक्तं छान्दोग्ये (७. २६. ७) "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति" रिति। अत्र ध्रुवा स्मृतिर्नाम "विच्छिन्नमविस्मरण"मिति तद्भाष्ये शङ्करः। तदेतद्ध्यानमेव। यथाह विस्पष्टं रामानुजो ब्रह्मसूत्रभाष्ये (१. १. १., पृ. १)। वाचस्पतिमिश्रोऽप्याह कण्ठतस्तत्त्ववैशारद्यां (यो. सू. १. २०) "स्मृतिर्ध्यानमनाकुलमविक्षिप्त"मिति ॥

**जडवल्लोकमाचरेद्**िति विस्तरेण व्याख्यातं शङ्करेण ब्रह्मसूत्रभाष्ये (३. ४. ५०)। अत्र च तेन धृतेयं वसिष्ठ(?)स्मृतिः—

"गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत्।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥" इति।

इयं चापरा स्मृतिस्तेनैव दर्शिता—

"यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥" इति।

सन्तीह बह्व्य ईदृश्य उक्तयः। यथा जा. उ. ६ ; आ. उ. ४।

अथ तस्यैवापरान्कांश्चिदाचारानाह—

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥३७॥

स न कस्यापि स्तुतिं नमस्कारं च कुर्याद् गृह्णीयाद्वा। न च पितृभ्यः स्वधाकारं कुर्यात्। स **चलाचलनिकेतो** भवेत्। चलाचल[1]-श्चञ्चलो ऽस्थिरो निकेतो निकेतनं वासस्थानं यस्य सः। नैकस्मिन्स्थाने चिरं वसेदिति भावः। अयमेवार्थो भगवद्गीतायाम् (१२ १९) "अनिकेत" इति। बोधिचर्यावतारे (८. २९, ८८) "अनिलय" इति। "अपूर्व इव सर्वत्रे"ति (बो. अ. ८. १६) चोक्तः। तत्र तत्र च सौगतेषु आर्हतेषु च ग्रन्थेषु (औ. सू. २७,५७) प्रयुक्तोऽनगारशब्दोऽपि तमेवार्थं परिदीपयति। **यादृच्छिको** नाम यदृच्छालब्धग्रासाच्छादनादिमात्रदेहस्थितिर्न पुनर्यथेच्छाचारः। न खल्वीदृशस्य पुरुषस्य यथेच्छाचरणं सम्भवति। यथा व्याख्यातं शङ्करेण (ब्र. सू. ३. ४. २४—३१, ४७-५०)। एष च **यतिः** सर्वेषामिन्द्रियाणां यमनात्। उक्तं चेदमन्यत्रापि (नृ. पू. उ., पृ. १४७, १५३)—

"निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च।" इति।

"कस्यापि वन्दनमकृत्वा न-नमस्कारो न-स्वधाकारो न-निन्दास्तुतिर्यादृच्छिको भवेदि"ति च तत्रैव ॥

---

[1] चलाचलशब्दोऽत्र न खलु चलाचलशब्दयोः समासात्। यथा भाष्यकारो मन्यते प्रयतते च व्याख्यातुम्। वस्तुतस्तु पदमिदमसमस्तम्। यथाहुर्वैयाकरणाः (पा. सू. ६. १. १२, महाभाष्ये वार्त्तिकम् ६)। प्रयुञ्जते किल कवयः "चलाचलैरनुपदमाहताः खुरै"रिति (शि. व. १७. ६३); "जन्मिनोऽस्य स्थितिं विद्याल्लक्ष्मीमिव चलाचला"मिति (कि. अ. ११. ३०); 'चलाचले च संसारे धर्म एको हि निश्चल" (चा. नी. ५. ५०) इत्यादि।

अथ चरमं कर्तव्यं निर्दिदिक्षु रा चा र्यः प्रकरणार्थमुपसंहरन्नाह—

**तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ।**

**तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥३८॥**

॥ इति गौ ड पा दी ये आ ग म शा स्त्रे वै त थ्या ख्यं
द्वितीयं प्रकरणम् ॥

५

अत्र तत्त्वं नाम प्रदर्शितः (२. ३५) प्रपञ्चोपशमः । स च वस्तुतो वे दा न्ति नां मोक्षो ब्रह्म वा । बौ द्धानां तु निर्वाणं शून्यं वेत्यवोचाम पूर्वम् (२. ३५, वृत्तौ) । तत्तत्त्वमाध्यात्मिकं यथा स्यात्तथा अन्तरिति भावः । तच्च तत्त्वं बाह्यतश्च दृष्ट्वा तत्त्वीभूतः तत्स्वरूपीभूतः तदारामश्च स्याद् यथा तस्मात् तत्त्वान्न प्रच्यवेत ।

१०

अत्रेदं मूलभूतं बु द्ध वचनम् (म. वृ., पृ. ३४८)—

"शून्यमाध्यात्मिकं पश्य पश्य शून्यं बहिर्गतम् ॥" इति ।[1]

---

१ । इदं पुनरस्योत्तरार्धम्—

"न विद्यते सोऽपि कश्चिद्यो भावयति शून्यताम् ।" इति ।

१५

पूर्वार्धे पश्य पश्य इत्यत्र पश्यन्पश्येति चीनभाषासम्मतः पाठः । अ. को. ९. २६०।

# तृतीयं प्रकरणम्

## अद्वैतम्

वैतथ्ये बह्वीभिर्युक्तिभिः (२. १-३०) स्वप्नमायागन्धर्वनगरदृष्टान्तैश्च (२. ३१) विश्वस्य वैतथ्यं दर्शितम्। दर्शितश्च तेन प्रपञ्चोपशमः। तं च "विदित्वाद्वैते योजयेत्स्मृतिम्" (२. ३६) इत्यद्वैतस्मरणं ५
विहितम्। अथास्मिंस्तृतीये प्रकरणेऽद्वैते प्रधानतया जातिवादेन तदद्वैतं पुनश्चिन्त्यते—

**उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते।**
**[1]प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥१॥**

यो नाम **धर्म उपासनां**[2] ध्यानलक्षणा**माश्रितः** प्रवर्तते कश्चित्कि- १०
मप्युपासीतेत्यादिप्रकारः स **ब्रह्मणि जाते** सति **व र्त ते**। न तु पूर्वं ब्रह्मण्यजाते। "सोऽकामयत बहु स्यां प्रजायेयेति" (तै. उ. २, ६) "तदैक्षत बहु स्यां प्रजायेयेति" (छा. उ. ६. २. १-३) "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"त्यादिभिः (छा. उ. ६. ३-२३) श्रुतिभिर्ब्रह्मणो जातिः १५
प्रजातिर्बहुभावो वा (ब्र. सू. १. १. २, ५) प्रसिद्धः। जातावेव च द्वैतभावः। तत्रैव च भवेत्किञ्चिदुपास्यं कश्चिद्वोपासको नान्यथा। अत एवाह **प्रागुत्पत्तेरजं सर्व**मिति। उत्पत्तेर्जातेः **प्राक्** पूर्वं तु सर्वं यदिदं किञ्चित्तदजमनुत्पन्नमेव। अतो नास्त्युपास्योपासकभेदः। **तेन हेतुनासौ** धर्मो द्वैताश्रयेण प्रवृत्तत्वाद् द्वैतस्य च वाचारम्भणमात्रत्वेना- २०

---

१। प्रागुत्पत्तेरितीदमन्यूनमष्टकृत्वः प्रयुक्तं श ङ्क रे ण छा न्दो ग्य भा ष्ये (६. २. १)।

२। उपासना वोपासनं वा नार्थान्तरम्। "उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बनमुपादाय तस्मिन्समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरितम्" इति छा न्दो ग्य भा ष्ये (१. १. १) श ङ्क रः। द्रष्टव्यं चान्यत्र २५
(प्र. ३. ९ ; ब्र. सू. १. १. ११) तदीयं भा

तात्त्विकत्वात्कृपणः करुणार्हो दीनोऽत्यल्पकः क्षुद्र इति भावः। धर्मस्य कार्पण्याद्यस्तं धर्मं चरति तस्यापि कार्पण्यमित्यनुक्तमपि स्पष्टम्॥

जातिसम्पर्कादेव कार्पण्यमित्युक्तम्। वक्तव्यं त्विष्टमकार्पण्यम्। तच्च निसर्गतो जात्यभावादेव भवेदित्याह—

५ **अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम्।**
**यथा न जायते[1] किञ्चिज्जायमानं समन्ततः॥२॥**

यस्मात्तस्मादृशमतोऽहं तदकार्पण्यं वक्ष्यामि यदजाति नास्ति जातिर्यस्य तत्। यत्र जातेः सम्बन्धोऽपि नास्तीति भावः। जातिरुत्पत्तिरुत्पाद इति पर्यायाः। यस्मात्तदजाति तस्मात्समतां गतं समं समानमेव

१० सर्वदेति भावः। समतां गतमित्युक्तम्। एतच्च सर्वस्याजातिलक्षणेन सामान्यधर्मेण। तदुक्त मा र्य स त्य द्व या व ता रे (म. वृ., पृ. ३७४) "परमार्थतः सर्वधर्मानुत्पादसमतया परमार्थतः सर्वधर्मात्यन्ताजातिसमतया परमार्थतः समाः सर्वधर्माः। तत्कस्माद्धेतोः। परमार्थतो निर्वाणा[नाना]करणा हि देवपुत्र सर्वधर्मा अत्यन्तनिरुत्पादतामुपादाय।

१५ तद्यथापि नाम देवपुत्र यच्च मृद्भाजनस्याभ्यन्तरमाकाशं यच्च रत्नभाजनस्याभ्यन्तरमाकाशं आकाशधातुरेवैषः। तत्परमार्थतो न किञ्चिन्नानाकरणम्। एवमेव देवपुत्र यः [सं]क्लेश[ः स] परमार्थतोऽत्यन्तानुत्पादता। यदपि व्यवदानं तदपि परमार्थतोऽत्यन्तानुत्पादता। संसारोऽपि परमार्थतोऽत्यन्तानुत्पादता। यावन्निर्वाणमपि परमार्थतोऽत्यन्तानुत्पादता। नात्र

२० परमार्थतो नानाकरणं। तत्कस्माद्धेतोः। परमार्थतोऽत्यन्तानुत्पादत्वात्सर्वधर्माणामिति।" स द्ध र्म पु ण्ड री (४. ८३, पृ. १४३):

"सर्वधर्मान्समाञ्शून्यान्निर्नानाकरणात्मकान्।
न चैतान्प्रेक्षते नापि किञ्चिद्धर्मान्विपश्यति॥
सर्वधर्माः समाः सर्वे समाः सर्वसमाः सदा।
२५ एवं ज्ञात्वा विजानन्ति निर्वाणममृतं शिवं॥" इति।

परमार्थतो न किञ्चिज्जायत इति मा ध्य मि का ना मिवास्या चा र्यस्यापि मतमिति स्फुटमिह। उक्तं (३. ४८) च तेन स्वयमेव कण्ठतोऽस्य प्रकरणस्यान्ते (३. ४८) ऽन्यत्र च (४. ७१)—

[1] ३. ३८; ४. ९३, ९९, १००।

"न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते॥" इति।

इयमेवाजातिरनुत्पादो वा प्राधान्येन प्रतिपिपादयिषितश्चिन्तितश्चा चा र्ये ण महतायासेन शिष्टे ग्रन्थे। दृश्यताम् २. ३२ ; ३. १०, ३८, ४८ ; ४. ५, ७१। तत्प्रसङ्गेन चाजातिशब्दो नवकृत्वोऽत्र ( ३. २, ३८ ; ४. ४. , ५, १६, २१, २६, ४२, ४३ ) प्रयुक्तः॥

अस्मिन्प्रकरणे प्रथमायां कारिकायां ब्रह्मणो जातिरुद्दिष्टा। द्वितीयायां त्वविशेषेणैव सा प्रतिषिद्धा। प्रतिज्ञातं चाजातिकथनम्। अत्र तावद् "यतो वा इमानि भूतानि जायन्त" इत्यादि ( तै. उ. ३. १. १ ) पठन्त औपनिषदाः स्पष्टमेव जातिवादिनः।[1] तत्र जीवात्मनां परस्मादात्मनो जातिर्वेदान्तेषु श्रूयते ( ब्र. सू. २. ३. १७ श. भा, रा. भा. ; बृ. उ. २. २. २० ; मु. उ. २. १. १ )।[2] का पुनरियं जातिर्वस्तुत इतीहोच्यते—

१। "तस्माद्विराडजायत विराजो अधिपूरुषः।"
"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।"
"तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥"

इत्यादिभ्य ( ऋ. १०. ९०. ५, ८, १० ) आ मन्त्रवर्णेभ्य आ च
"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं मनो ज्योतिरापः पृथिवी विश्वस्य धारिणी॥" इति।
"अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः।
अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा॥"

इत्यादिभ्य ( मु. उ. २. १. ३. ९ ) उपनिषद्वचनेभ्यः सर्वत्रैव सुप्रसिद्धो जातिवाद एव। न पुनः क्वाप्यजातिवाद इति ध्येयम्।

२। आचार्यो ब्र ह्म द त्त स्तु समुच्चयवादी न केवलं ब्रह्मण उत्पत्तिमपि तु तस्य लयमपि मन्यते। द्रष्टव्यमिह ब्र. सू. १. ४. २ रा. भा ; म. ना. उ. १. ४ ; वि. पु ६ ४०. ३९। प्रसीडिंग्स एण्ड ट्रान्स्याक्शन्स अफ दि फोर्थ अल इण्डिआ ओरिएण्टाल कन्फारेन्स, पृ. १८८-९।

**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ।**
**घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥३॥**

यथाकाशो घटाकाशरूपेणोदेति तथात्मापि जीवरूपेणोदेति । घटाकाशोदये यथा घटा एवं जीवात्मन उदये देहेन्द्रियादिसङ्घाता हेतवो भवन्ति । एतदेव **जातावुत्पत्तौ निदर्शनं** दृष्टान्तः । यथा महाकाशो घटैः सम्बन्धाद् घटाकाशरूपेणोत्पद्यते आत्मापि तथा देहेन्द्रियादिसङ्घातसम्बन्धाज्जीवरूपेणोत्पद्यते । वस्तुतस्तु नेह जातिः । व्यवहारमात्रं ह्येतदिदम् ।

तदुक्तमन्यत्र ( मान. उ. ३. ६ )—

"घटाकाशो महाकाशो घटोपाधिकृतो यथा ।
देहोपाधिकृतो भेदो जीवात्मपरमात्मनोः ॥" इति ।

अन्यदपि तत्रैव ( ३. २५. २६ )—

"देहेन्द्रियमनोबुद्धिप्राणाहङ्कारसंहतम् ॥
आत्मसङ्कलनादज्ञैरात्मत्वं प्रतिपाद्यते ।
वह्निधीः काष्ठलोहादौ वह्निसङ्कलनादिव ॥" इति ।

एवं त. ज्ञा. ८. १० ; उपः त्रि. ता. उ. ५. १२

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥" इति ।

उक्त एवार्थो भूयः परिष्क्रियते—

**घटादिषु प्रलीनेषु घटाकाशादयो यथा ।**
**आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि॥४॥**[1]

---

१ । कारिकेयं शान्तिरक्षितेन मध्यमकालङ्कारकारिकाव्याख्याने ( ९७ ) धृता । तत्र च भोटपाठे प्रभ्रष्टो द्वितीयः पादो वलेश्वरेण विदुषा पुनरुद्धृतः ।

नेह किञ्चित्तिरोहितार्थम्। तदेतदुक्तमन्यत्र (भा. पु. १२. ५. ५)—

"घटे भिन्ने घटाकाश आकाशः स्याद्यथा पुरा।
एवं देहे मृतो जीवो ब्रह्म सम्पद्यते पुनः॥" इति।

यद्येक एवात्माकाशवद्बहुघटाकाशैर्बहुभिर्जीवैरुदेति तर्ह्येकस्य जीवस्य सुखे दुःखे वा किं न सर्वे जीवाः सुखं दुःखं वानुभवेयुः। अत्रोत्तरमाह— ५

**यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते।
न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः॥५॥[1]**

स्पष्टोऽर्थः।

घटकरकापवरकप्रभृतिषु पदार्थेषु भिद्यमानेष्वप्याकारेण कर्मणा नाम्ना च न तदवच्छिन्न आकाशो भिद्यते। एवं भिन्नेष्वपि जीवेष्वात्मा न १० भिद्यत इत्याह—

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै।
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः॥६॥**

घटकरकापवरकादीनां कृत्स्नानां भाजनानां **रूपाणि कार्याणि समाख्याश्च** नामानि भिद्यन्ते। घटस्य यद्रूपं न तदेव करकस्यापवर- १५ कस्य वा। न च घटेन यत्कृत्यं जलाहरणादि क्रियते तदेव सर्वं करकेणापवरकेण वा। नाप्येषां नामान्येकान्येवेति रूपादीन्येषां **तत्र तत्र** भिद्यन्ते। भिन्नेष्वप्येतेषु तदवच्छिन्न आकाशः पुनर्न भिद्यते। सर्वत्रैव स एवैक आकाशः। **जीवेष्वपि** तथैव **निर्णयो** ज्ञेयः। तत्तद्रूपादिना जीवा भिद्यन्ते। न पुनस्तेष्वात्मा। इयमत्रानुरूपा २० कारिका तर्कज्वालायाम् (८. ११)—

---

[1] एतेयं कारिका भव्येन (म. हृ. का. ८. १३)। विज्ञानभिक्षुणा तु (सा. द. १. १५२) तृतीये पादे न च सर्वे प्रयुज्यन्ते इति पाठेन विष्णुपुराणस्येति कृत्वा पठिता। न पुनरत्रेयं लभ्यते। द्रष्टव्यं वि. स. ना, पृ. १६। भव्य एतभोटपाठच्छाया त्वेवम्— २५

यथैकस्मिन्घटाकाशे रजोधूमैः [समा]वृते।
न भवन्ति तथा सर्वे न सुखादि तथात्मनि॥

"भिन्नेष्वपि घटाद्येषु मृदि भेदो न कश्चन ।
तथा देहेषु भिन्नेषु न कश्चिद्भेद आत्मनि ॥"[1]

अवितथमिदमात्मा जीवरूपेण जायत इति । न पुनस्तावता जीव आत्मनो विकारोऽवयवो वेति युज्यते । यथा घटाकाशो महाकाशस्य न विकारो न वाऽवयव इत्याह—

**नाकाशस्य घटाकाशो विकारावयवौ यथा ।**
**नैवात्मनः सदा जीवो विकारावयवौ तथा ॥७॥**

स्पष्टोऽर्थः ॥

किञ्च नित्यशुद्धस्वभावोऽयमात्मा । अतो वस्तुतोऽसत्यप्यस्मिन्क्लेश-कर्मादिमलसम्पर्के मूढानामयं मलिनः प्रतिभातीत्याह—

**यथा भवति बालानां गगनं मलिनं मलैः[2] ।**
**तथा भवत्यबुद्धानामात्मापि मलिनो मलैः ॥८॥**[3]

निःसङ्गतया नित्यनिर्मलस्वभावतया च न कदाचित् कथञ्चिद्गगनस्य मालिन्यं सम्भवति । एवमपि तु केचन बाला मन्यन्ते **गगनं** रजो-धूमादिभिर्**मलै**(३. ५)**र्मलिन**मिति । न च तावता गगनं वस्तुतस्तथा भवति । एवमेव केचन **अबुद्धा** अज्ञा मन्यन्ते **आत्मा** क्लेशादिभिर्**मलै**-**र्मलिन** इति । न चैतावतात्मनो वस्तुतो मालिन्यं जायते ॥

सर्वास्ववस्थास्वेव आत्मा सर्वशरीरेष्वाकाशवदविकार एवेत्याह—

**मरणे सम्भवे चैव गत्यागमनयोरपि ।**
**स्थितः सर्वशरीरेषु आकाशेनाविलक्षणः ॥९॥**

यथा घटानामुत्पत्तौ वा विनाशे वा तेषामानयनेऽपनयने वा तदुपहित आकाशो न मनागपि विक्रियते एवमात्मापि मरणादिषु तासु तास्ववस्थासु **सर्वशरीरेषु स्थितः** । नात्मोत्पद्यते म्रियते वा । गच्छत्यागच्छति वा । शरीराणामेवैते धर्माः । तदुक्तं (छा. उ. ६. २. ३) "जीवापेतं किलेदं वाव म्रियते न जीवो म्रियत" इति ॥

१ । इयं वृत्तिकृत्कृता भोटपाठस्य संस्कृतच्छाया।
२ । "आकाशे बालास्तलमलिनताद्यध्यस्यन्तीति" शा. भा. (ब्र. सू. १. १. १) ।
३ । इयमपि कारिका धृता शान्तरक्षितेन ( म. अ. का. टीका. ९३ ) ।

किञ्च। घटसम्बन्धाद्यथाकाशो घटाकाश एवं सङ्घातसम्बन्धादात्मा जीव इत्युक्तम् (३. ३)। यथा च सङ्घाता अपि न वस्तुसन्तस्तथोच्यते—

**सङ्घाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः।**
**आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥१०॥**

**सर्वे** देहेन्द्रियादि**सङ्घाताः स्वप्नवदात्मनो मायया विसर्जिताः** ५
प्रत्युपस्थापिताः। न पुनरेते परमार्थतः सन्ति। यदा चैते सङ्घाता एव परमार्थतो न सन्ति तदा तेषु कस्यचि**दाधिक्ये** श्रेष्ठत्वे सर्वेषां वा **साम्ये** समत्वे **न** का**प्युपपत्ति**र्युक्तिर्वि**द्यते** ॥

पुनरपि जीवं निर्णिनीषुरुपनिषद्वाक्येनाह—

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके।** १०
**तेषामात्मा परो जीवः स-यथा[1] सम्प्रकाशितः ॥११॥**

भवति कस्यचिदसेः कोशः। स च कोशोऽसिमपेक्ष्य बाह्यः। कोशं त्वपेक्ष्यासिरान्तरः। एवमस्मिन्देह उत्तरोत्तरं पञ्च कोशाः सन्तीति मन्यते। एकस्यान्तरन्यः। तस्यान्तरपरः। तस्याप्यन्तरितर इति क्रमेण यावत्पञ्च। एते हि वस्तुतो न कोशाः। अपि तु कोशा इव। तत्तदन्तरसेरिव १५
पुरुषस्यावस्थानात्। ते च कोशा अन्नं। तदुपचितो देह इति भावः। प्राणो मनो विज्ञानमानन्दश्चेति। प्रायेण च ते यथाक्रममन्नमय प्राणमयो मनोमयो विज्ञानमय आनन्दमयश्चेत्यपि ख्याताः। ते च कोशा लोकेऽनुभवसिद्धाः। यथा अहमस्मि स्थूलः कृशो वेत्यन्नमयः। एवमहं

---

१। तद्यथेत्यर्थे सयथेति पाठः सुप्रसिद्ध ब्राह्मणेषूपनिषत्सु च काश्चित् २०
(प्र. उ. ४. ७, ६. ५; मु. उ ३. २. ८; श. ब्रा. १. २. ५. २४, ७. ३. २; बृ उ. २. १. २०)। अयमेव चात्र पाठः केषुचिदादर्शपुस्तकेषु। एतत्त्व-जानानाः केचिद्व्याख्यानवैयाकुलीमापन्नाः। सयथा शब्दः पालौ सेय्यथाकारमा-पन्नः। किञ्च तद्यदीत्यर्थे स-यदि शब्दोऽपि लभ्यते (प्र. उ ५. १)। पालौ च स चेद् इत्यर्थे सचे शब्दश्चिन्त्यः। शुद्धसंस्कृते त्विदं तच्चेदिति भवेत्। २५
स-यथेत्यत्र खं यथेतिपाठो बहुषु पुस्तकेषु। अयं च खं यथेति पाठो ऽव्यवहितोत्तरकारिकायां (३. १२) यथाकाशः प्रकाशित इत्यनेन संवादमीहमानस्य साधीयस्त्वं सूच्यत इति कश्चिद् ब्रूयात्।

जीवामि प्राणिमीति वा प्राणमयः। अहं मन्ये सन्दिहे वेति मनोमयः। अहमनुभवामि विजानामीति वा विज्ञानमयः। अहं मोदे नन्दामीति वेत्यानन्दमयः। तदुक्तं मा न सो ल्ला से (३. २७-३१) सु रे श्व रे ण—

"देहमन्नमयं कोशमाविश्यात्मा प्रकाशते।
स्थूलो बालः कृशः कृष्णो वर्णाश्रमविकल्पवान्॥
"प्राणकोशेऽपि जीवामि क्षुधितोऽस्मि पिपासितः।
संशितो(?) निश्चितो मन्य इति कोशे मनोमये॥
विज्ञानमयकोशस्थो विजानामीति तिष्ठति।
आनन्दमयकोशाख्ये त्वहङ्कारे पुराकृतैः॥
पुण्यैरुपासनाभिश्च सुखितोऽस्मीति मोदते।
एवं कञ्चुकितः कोशैः कञ्चुकैरिव पञ्चभिः॥
परिच्छिन्न इवाभाति व्यापकोऽपि परमेश्वरः।" इति।

तत्तत्कोशस्थः पुरुषोऽपि तत्तन्नाम्नोच्यते। यथान्नमयः पुरुषः प्राणमयः पुरुष इत्यादि। अन्नरसमय इति वक्तव्येऽन्नमय इति संक्षेपोक्तिः। एवमन्नरसमयादीति वक्तव्ये रसादीति संक्षेपोक्तिः। एतच्च सर्वं तै त्ति री यो प नि ष दि (२. १-६) विवृतम्। तत्र तै त्ति री य के (२. १-६) रसादयो ये **कोशा व्याख्यातास्तेषा**मन्नमयाद्या-नामानन्दमयान्तानां यः **परः** सर्वान्तरोऽन्तरतम **आत्मा** स **जीवः**। **सयथा** तद्यथा तत्र तै त्ति री य के **सम्प्रकाशितः** प्रकटीकृतः। "आत्मा ह्याकाशवज्जीवै"रित्यादिविभि(३. ३)र्यदुक्तं तस्यैवायं प्रपञ्चः॥

इदं त्विह प्रसङ्गादवगन्तव्यम्। आनन्दमयाधिकरणे (ब्र. सू. १. १. १२-१९) श ङ्क रे ण आनन्दमय एव परमात्मेति प्रथमं वृ त्ति का र मतं प्रदर्शितम्। ततः "इदं त्विह वक्तव्य"मित्यादिना तत्प्रतिषिध्यानन्दमया-द्यन्योऽन्तरो य आत्मा स एव परमात्मेति स्थापितं स्वमतम्। तदेव सम्मतमस्मदा चा र्य स्ये ति स्पष्टमस्यां कारिकायामिति॥

तै त्ति री य श्रुतिं श्रुत्यन्तरेण सङ्गमयति—

**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्।**
**पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः॥१२॥**

अस्ति मधुविद्या। सा च तन्नाम्ना बृहदारण्यके (२. ५) प्रसिद्धा काचिद्विद्या। असकृन्मधुशब्दप्रयोगेणोपदिष्टत्वादस्या विद्याया मधुविद्येति नाम। तत्र मधुरूपेण विवक्षिते द्वे द्वे वस्तुनी उपादाय विविधैः पर्यायैः परं ब्रह्म प्रकाशितम्। यथा "इयं पृथिवी सर्वेषां भूतानां मधु। अस्यै पृथिव्यै सर्वाणि भूतानि मधु। यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदं सर्वम्॥ इमा आपः सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु।" एवम् "अग्निश्च भूतानि च। वायुश्च भूतानि च। आदित्यश्च भूतानि च" इत्यनेके पर्यायाः। एतदेवाधिकृत्योच्यते **द्वयोर्द्वयोः** स्थानयोर्यथा **पृथिव्यां** बाह्यायामिति भावः। **उदरे चैवेति** उदरमभ्यन्तरं तत्र देहेऽध्यात्ममिति भावः। **परं ब्रह्म** प्रकाशितं यथोक्तमुदाहृतश्रुतौ। तत्रोपमामाह। **यथाकाशः प्रकाशित** इति। यथा घटाकाशमहाकाशयोराकाशस्यैक्यं तथा तयोस्तयोर्द्वयोर्वस्तुनोः पुरुषस्यैक्यमिति भावः॥ द्रष्टव्यम् ब्र. सू. १. १. २२, ३. ४१ (शा. भा.)॥

उक्त एव सिद्धान्तः श्रुतिपर्यालोचनया समर्थ्यते—

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते।**
**नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम्॥१३॥**

यत्खलु "तत्वमसि" (छा. उ. ६. ८. ७) "अहं ब्रह्मास्मि" (बृ. उ. १ ४ १०) "अयमात्मा ब्रह्म" (२. ५. १९) "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" (मु. उ. ३. २. ९) इत्यादिभिः श्रुतिभि**रभेदेन जीवात्मनोरनन्यत्व**मैक्यं **प्रशस्यते। यच्च** "द्वितीयाद्वै भयं भवति" (बृ. उ. १. ४. २) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (बृ. उ. ४. ४. १९; क. उ. २. ४. १०-११) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" (तै. उ. २. ७.) इत्यादिभिः श्रुतिभिस्तयो**र्नानात्वं** भेदो **निन्द्यत** इति। **तदे**तदुभय**मेवं हि** महाकाशो घटाकाशेनेवात्मैव जीवरूपेण जायत इत्यभ्युपगमेन

सुसमञ्जसं स्फुटं सुगमं न्याय्यं वा भवति अन्यथा दुर्निवारो विरोधः श्रुतीनाम् ॥

यदि जीवात्मनोरपृथक्त्वमेव तत्त्वं विवक्षितं किमित्युत्पत्तेः प्राक्तयोः पृथक्त्वमुक्तमित्याशङ्क्याह—

५ **जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्त्तितम् ।**
**भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥१४॥**

इदं श्रूयते ( ऋ. वे. १. १६४. २० ; श्वे. उ. ४. ६ ; मु. उ. ३. १. १ )—

द्वा सुपर्णा सयुजा सखाया
१० समानं वृक्षं परिषस्वजाते
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्यो अभिचाकशीति ॥" इति

इदं च ( श्वे. उ. ४. ७ ; मु. उ. ३. १. २ )—
"समाने वृक्षे पुरुषो निमग्नो-
१५ ऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीश-
मस्य महिमानमिति वीतशोकः ॥" इति ।

एतादृशेन वचनेन[१] **जीवात्मनोरुत्पत्तेः प्राग्यत्पृथक्त्वं प्रकीर्त्तितं तद्भविष्यद्वृत्त्या** भविष्यन्तीं वृत्तिमवस्थामभिसन्धायेति भावः । यथौदनं पचतीति वाक्ये भविष्यन्तमोदनभावमभिसन्धाय
२० प्रयुज्यत इति गौणः स ओदनभावो न तु मुख्यः । यथावाह

१ । अथ कथमिदं गम्यते यद्वचनद्वयमिदमुत्पत्तेः प्रागवस्थाया न पुनरुत्तराया इति । यतो नात्र लेशतोऽपि सृष्टिसम्बन्धः । न चास्ति किञ्चिद्येन सृष्टेरूर्ध्व-मिदमिति प्रतीयेत । अथवा मृग्यतामनुरूपमपरं तत्किञ्चिद्वचनं येनावश्यं भवितव्यम् । आचार्यवचनात् । आचार्यवचनं च नः प्रमाणम् ।
२५ ब्रवीति चा वा यौ "जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्त्तित"मिति ॥

महाभाष्ये (३. १. १०२) भगवान् पतञ्जलि "कश्चित्कञ्चित्तन्तु-वायमाह अस्य सूत्रस्य शाटकं वयेति। स पश्यति यदि शाटको न वातव्योऽथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेतेति ॥" एवं पृथक्त्वमपि जीवात्मनोर्गौणमेव न तु मुख्यम्। अयमात्मायं जीव इत्युत्पत्तेरूर्ध्वं यत्पृथक्त्वं भविष्यति तदेव सन्धाय प्रागुत्पत्तेस्तयोः पृथक्त्वमुक्तम्। तच्च गौणं न पुनस्तस्य **मुख्यत्वं** युज्यते ॥ ५

अस्तु तावत्प्रागुत्पत्तेर्जीवात्मनोर्भेदाभावः। ऊर्ध्वं तूत्पत्तेः सम्भाव्य-मानः सर्वोऽपि भेदः स्पष्ट एवेत्याशङ्क्याह –

**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा। १०**
**उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥१५॥**

**या च सृष्टि**र्वक्ष्यमाणै**र्मृल्लोहविस्फुलिङ्गाद्यै**र्दृष्टान्तै**रन्यथा** प्रकारान्तरेण **उदिता** कथिता श्रुतिषु, तथापि न भेदोऽभिप्रेयते। अपि तु **स** तत्त्वे**ऽवताराया**वगमाय, तत्त्वावगमार्थ**मुपायः** साधनम्। अत्रावतारो नाम वस्तुतो बौद्धानां तत्त्वावतारणाभिसन्धिरेव (४. ४२, १५ वृत्तिः)। तादृशसृष्टिकथनेन तत्त्वावगमः सुकरो भवतीति तत्रैव सृष्टेस्तात्पर्यं न पुनः केनापि प्रकारेण भेद इत्युच्यते **नास्ति भेदः कथञ्चने**ति।

इमे च ते मृल्लोहादिदृष्टान्ताः। "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्या"दिति (छा. उ. ६. १. ४)। "यथा सोम्यैकेन २० लोहमणिना सर्वं लोहमय"मिति (छा. उ० ६. १. ५); "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा व्युच्चरन्ती"ति (बृ. उ. २. १. २०)। एवम् (मु. उ. २. १. २)

"यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः। २५
तथाक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति" ॥ इति।

अत्र सृष्टिशब्देन सृष्टिः क्रिया भावप्रधाननिर्देशात्। कर्मप्रधाननिर्देशात्तु सृष्टं वस्त्विति च द्वयमपि भवेत्॥

कथं नु खलु सा सृष्टिर्भेदो वा तत्कृतोऽसत्योऽपि तत्त्वावताराय भवतीत्याह—

५ आश्रया[1]स्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः।
उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥१६॥

उपासनाधर्माश्रयादा**श्रया** उपासका अधिकृता इति यावत्। ते **त्रिविधा** भवन्ति। केचिद्धीनदृष्टयः केचिन्मध्यमदृष्टयः केचिच्चोत्तमदृष्टयः। **तदर्थं** तेषामाश्रयाणां कृते **अनुकम्पया** कृपया सृष्टिश्रुत्या[2]

१० **इयमुपासनोपदिष्टा।** यद्यप्युपास्योपासकयोर्जीवात्मनोर्वा न मनागपि भेदस्तथापि परमार्थभूततदभेदोपलब्धिसामर्थ्यं दुर्लभं विनोपासनयेति भेदाभ्युपगमेन विहितोपासना। तया चानुकम्पिता अधिकृताः॥

अथाहास्मदाचार्यः। यद्यपि स्वसिद्धान्तग्रहिलाः सांख्यवैशेषिकादयो
१५ द्वैतिनो वादिनोऽन्योन्यं विवदमाना विरुध्यन्ते तथाप्यद्वैतरूपोऽस्मदीयः सिद्धान्तस्तदीयैः सिद्धान्तैर्न विरुध्यत इति—

---

१। सर्वेष्वादर्शपुस्तकेष्वत्र आश्रमा इत्येव पाठो न तु आश्रया इति। "आश्रमा आश्रमिणोऽधिकृता इति" (श)। वस्तुतस्तु महायानसूत्रालङ्कारसंवादेन (१६. ६९) आश्रया इत्येव साधीयान्पाठः। तदुक्तं तत्र

२० "निकृष्टमध्योत्तमवीर्यमन्यद्
यानत्रये युक्तजनाश्रयेण।" इति।

इयं च तद्व्याख्यानरूपा तत्रत्या गद्यपङ्क्तिः—"अत्राश्रयभेदेन वीर्यभेदो निर्दिष्टः" इति। साधनाधर्माश्रयादाश्रयाः पुरुषा अधिकृताः। वीर्यादिभेदात्ते त्रिविधाः। केचिन्निकृष्टाः। केचिन्मध्यमाः। केचिच्चोत्तमा इति।

२५ २। यथा "उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते" (३. १) इत्यादिना प्रागुक्तम्।

**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।**
**परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥१७॥**

अयमस्मदीयः सिद्धान्तः । अन्यत्स्पष्टम् ।

कथं न विरुध्यत इत्युच्यते—

**अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।** ५
**तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥१८॥**

**हि** यस्मा**दद्वैतं परमार्थः** । तत्तच्छ्रुतेरुपपत्तेश्च । "स्वचित्त-स्पन्दनाभावे समाधौ मूर्छायां सुषुप्तौ चाभावात्" द्वैतस्य (श) । **द्वैतं तु तद्भेदः** तस्याद्वैतस्य भेदो विशेषोऽवस्थाविशेष इति भावः । यथा शुक्तिरजते रजतं शुक्तेरेवाविद्याकृतोऽवस्थाविशेषस्तथा द्वैत- १० मद्वैतस्य । न वयं सर्वथैव द्वैतं नाभ्युपगच्छामः । अभ्युपगच्छाम एव न पुनस्त इव परमार्थतया । तेनायमस्मदीयः सिद्धान्तस्तेषां सिद्धान्तेन **न विरुध्यते** । अयं तु विशेषो यत्**तेषां** सिद्धान्त **उभयथा** "परमार्थतश्चापरमार्थतश्च द्वैतमेव" (श) । अस्माकं त्वपरमार्थत एव । ततश्चास्मत्पक्षोऽशतो न विरुध्यते ॥ १५

अद्वैतमेव परमार्थः । द्वैतं पुनरद्वैतस्यैव भेद इत्युक्तम् । अयं च भेदो मायिको न तु तात्त्विक इति युक्त्या प्रतिपादयन्नाह—

**मायया भिद्यते ह्येतन्नान्यथाजं कथञ्चन ।**
**तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥१९॥**

एतत्परमार्थसदजमद्वैतं मायया **भिद्यते नान्यथा कथञ्चन** २० अन्येन केनापि प्रकारेण न भिद्यते । तथा च मायिकोऽयं भेदो न तात्त्विकः । अत्र युक्तिमाह । **हि** यस्मादद्वैते **तत्त्वतो भिद्यमाने** भेदं गच्छति सति यद**मृतं** नित्यं त**न्मर्त्यता**मनित्यतां **व्रजे**द्गच्छेत् । नित्यमनित्यं भवेत् । न च तद्युज्यते । न खलु कश्चित्किञ्चित् कदाचित् कथञ्चिद्वोदकं दहनो भवेत् । किञ्चाद्वैतं चेद्वस्तुतो द्वैतं भवेन्ननु २५ वक्तव्यं प्रकृतिः परिवर्तत इति । न च तत्संगच्छते । वक्ष्यति ह्याचार्यः (३. २१, ४. ७) स्वयमेव "प्रकृतेरन्यथाभावो न कदाचिद्भविष्यतीति ।" विस्तर उपरिष्टाद् वक्ष्यते (४. ६) ॥

अद्वैतं परमार्थः। तच्चाजं नास्य जातिरस्तीति कृत्वा। यथैतन्मायया भिद्यते (३. १९) तथा माययैव जायते (३. २४)। न तत्त्वतः। वक्ष्यति हि (३. २७) "तत्त्वतो जायते यस्य जातं तस्य हि जायत" इति। न च जातिर्नाम कस्यापि क्वापि विद्यते। तथापि लोके यदि नाम ५ कश्चित्किञ्चित्कदाचिज्जायेत तदजातमेव जायेत। न पुनर्जातम्।[1] न च तदपि सङ्गच्छत इत्याह—

**अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः।**
**अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥२०॥**[2]

लोकः किल मन्यते यदजातं वस्तु जायत इति। सर्व एवाजातस्यैव १० पुत्रस्य जातिमिच्छन्ति। न ह्यस्ति जातस्य पुनर्जातौ किमपि प्रयोजनम्। तदुच्यते **वादिनः** पुरुषा **अजातस्यैव भावस्य** पदार्थस्य **जाति**मुत्पत्ति**मिच्छन्ति**। इच्छन्तु नाम। किं तेन। नैतद्युज्यते। कुतः। यद्येतदेव स्यान्ननु वक्तव्य**मजात**स्तत एव **चामृतो** नित्यो **भावो मर्त्यता**मनित्यता**मेष्यति** गमिष्यति। १५ जनिष्यत इत्यभिप्रायः। नित्योऽनित्यो भविष्यतीति भावः। कथं नु खलु पुनरेतद्भवेत्। न कथञ्चिदजं नित्यमद्वैतमनित्यं जातं वा भवेत्॥

अयमेवार्थः पुनरुत्तराभ्यां कारिकाभ्यां विव्रियते—

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।**
**प्रकृतेरन्यथाभावो न कदाचिद्भविष्यति ॥२१॥**[3]

२० अतिरोहितोऽर्थः। **यद्यमृतं मर्त्यं** भवेन्मर्त्यं **वामृतं** भवेत्तदा **प्रकृतिः** स्वभावो वा नाम न कश्चिद्भवेत्। न च तत्सङ्गच्छते॥

१। अत्र विस्तर उपरिष्टाद् (४. ६) वक्ष्यते।

२। द्रश्यताम् ४. ६। एतदाद्याश्रितास्तिस्रः कारिकाः (३. २०. २१. २२) इत एवाकृष्य पुन र ला त शा न्तौ पठिताः (४. ६. ७. ८)। अस्ति त्वत्र स्तोकः पाठभेदः। तथा हि तत्र षष्ठाष्टमयोः पूर्वार्धे भावशब्दस्थाने धर्मशब्दो २५ विन्यस्तः। अत्र यन्मन्तव्यं तदन्यत्रोक्तम् (४. १) इति तत्तत एव ज्ञेयम्।

३। ४. ७, २९।

**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम्।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥२२॥**[1]

**यस्य** पुनर्वादिनो मते **स्वभावेन** प्रकृत्या**मृतो** नित्यो **भावो मर्त्यतां गच्छ**त्यनित्यो भवति परमार्थतो जायमानः सन्। **तस्य** मतेऽ**मृतो** नित्यो भावः **कथं** केन प्रकारेण **निश्चलः** स्थिरो निष्परिवर्तनो नित्य इति भावः। **स्थास्यति**। न स्थास्यति। कुतः। **कृतकेन** कृतकत्वेनेति भावः (४. ८ वृत्तिः)। कृतकश्च नित्यश्चेति विप्रतिषिद्धम्॥

न जातिरस्तीत्युक्तम्। वक्ष्यते चासकृद् (३. ४३, ४. ७२) "एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते" इत्यादिना। निराकर्तव्यो हि सर्वथा जातिवादः। अत्र कश्चिन्मन्येत। यदा स्पष्टमेव सृष्टिप्रतिपादिका श्रुतिरधिगम्यते तदा कथं नु खलु जातिर्नाङ्गीक्रियेतेति। अत्राह—

**भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।**
**निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥२३॥**

सृष्टिरुत्पत्तिर्जातिश्चेति नार्थान्तरम्। तत्र सृष्टिर्नाम भवन्ती सतो वा पदार्थादसतो वा पदार्थाद्भवेन्नान्यथा। प्रकारान्तराभावात्। तत्र नोभयथाप्येषा सङ्गच्छत इत्युच्यते। तथा हि **सृज्यमाने** वस्तुनि विषये **भूततः**[2] सतः पदार्था**दपि वाभूततो**ऽसतः पदार्थाच्छ्रुतिः **समा** तुल्या। यथा सतः पदार्थात्सृष्टिः श्रूयते तथैवासतोऽपि पदार्थात्।[3] तथाहि। "सदेव सोम्येदमग्र आसी" दित्यादिना (छा. उ. ६. २. १) सतः सृष्टिः प्रतिपाद्यते। अन्यत्र तु "असद्वा इदमग्र आसीत्। ततो वै सदजायत" इत्यादिना (तै. उ. २. ७. १) असतः सृष्टिरुच्यते। किमत्र तर्हि प्रतिपत्तव्यमित्याह **निश्चित**मिति। **यद् युक्तियुक्तं** युक्त्युपेतं **निश्चितं** निर्णीतं च भवति **तद् भव**त्युपादेयमिति भावः। **न पुनरितरद्**युक्तियुक्तम्। यथाधस्ताद्युक्तिर्दर्शिता दर्शयिष्यते चोपरिष्टादपि तथा परमार्थतः सृष्टिरेव नास्तीति निश्चयः। का तर्हि गतिः सृष्टिश्रुतेः।

१। ४ ८।
२। "भूततः परमार्थतः। अभूततो मायये"ति भाष्यकारः। अन्यत्र (४ ३) तु "भूतस्य विद्यमानस्य"। "अभूतस्याविद्यमानस्ये"ति स एव।
३। ४. ३।

अस्त्यस्या अपरोऽभिप्रायः। "उपायः सोऽवताराय" (३. १५) इति प्रागेवाबोचदाचार्यो[१] वक्ष्यति चानन्तरकारिकायाम्। श्रुतेर्युक्तिर्गरीयसीत्यभिप्रैतीहा- चा र्यः।[२] स्मर्यते च (यो. वा. २. १८. २-४) व सि ष्ठे न—

"अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम्।
५ अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्यायैकसेविना॥
युक्तियुक्तमुपादेयं वचनं बालकादपि।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना॥
योऽस्मत्तातस्य कूपोऽयमिति कौपं पिबत्यपः।
त्यक्त्वा गाङ्गं पुरस्थं तं को न शास्त्यतिगर्हितम्॥" इति।

१० निश्चितं युक्तियुक्तं यत्तद्भवति नेतरद् इत्युक्तम् (३. २३)। किं पुनस्तन्निश्चितं युक्तियुक्तं चेत्याह—

**नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।**
**अजायमानो बहुधा मायया जायते तु सः॥२४॥**

**इह नाना** पृथक् किञ्चन **न** अस्तीति **आम्नायाच्छ्रु**तेः (बृ. उ. १५ ४. ४. १९; क. उ. ४. ११)।[३] **इन्द्रो मायाभिः** (पुरुरूपो बहुरूप ईयते गच्छति) **इति अपि** चाम्नायात् (ऋ. स. ६. ४७. १८; बृ. उ. २. ५. १९)[४] **स** प्रजापतिर्वस्तुतो**ऽजायमानो मायया बहुधा** जायते।[५] ततश्च मायिकीयं जातिर्न पुनः पारमार्थिकी। इदमेव निश्चितं युक्तियुक्तं च।

१। ३. १५।
२० २। युक्तिसहकृतायुक्तिसहकृतयोः श्रुत्योः प्रथममेव बलीयसीति सिद्धान्तः। श्रुतियुक्तिबलाबले यदाह श ङ्क र स्तदन्यत्र (ब्र सू० २ १. ४, ११) द्रष्टव्यम्।
३। "नेह नानास्ति किञ्चन।"
४। "रूपंरूपं प्रतिरूपो बभूव
तदस्य रूपं प्रतिचक्षणाय।
२५ इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता ह्यस्य हरयः शता दश॥"
५। कारिकायाम् "अजायमानो बहुधा मायया जायते" इत्यस्येदं मूलम् (वा. स ३१. १९)—
"प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
३० तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥" इति।

किञ्च जातिर्नाम श्रुतावतिस्पष्टं प्रतिषिध्यत इत्याह–[1]

**सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते ।**
**को न्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥२५॥**

वाजसनेयिन आमनन्ति (ई. उ. १२)–

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते । ५
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥

अत्र द्वितीयार्धे **सम्भूत्यां** सम्भवे जातावित्यर्थः । ये रमन्ते तेषामधिकतरतमःप्रवेशकथनात् **सम्भूतेः** सम्भवस्य **अपवादो** निन्दा भवति । तस्मादपवादात् **सम्भवः प्रतिषिध्यते ।** किञ्च "जात एव न जायते को न्वेनं जनयेत्पुन" रित्याम्नानाच्च (बृ. उ. ३. ९. २८) १० सम्भवस्य **कारणं** जनयितृरूपं **प्रतिषिध्यते ।** ततश्च जनयितुर्जननस्य चोभयोः प्रतिषेधः ॥

१। अत्राचार्यमते सम्भूतिसम्भवशब्दावुत्पत्त्यर्थाविति स्पष्टम् (३. ९, ४८ ; ४. १६, ३८)। अन्ये तु व्याख्यातारो बहुधा व्याचक्षते । तदेतद्रमणीयमिति समासत इहोदाह्रियते— १५

"अन्धं तम" इत्यादिर्मन्त्रो वाजसनेयिसंहितोपनिषदिति प्रसिद्धाया मीशावास्योपनिषदि (१२)। वस्तुतस्तु समग्रैय मीशावास्योपनिषद् वाजसनेयिसंहितायाः (शुक्लयजुर्वेदापरनाम्ना प्रसिद्धायाः) चरमोऽध्यायः । संहितोपनिषदोर्मन्त्रपाठक्रमो मनाग्भिद्यते । अत्रादावुपनिषत्पाठसंख्या । ततश्च संहितापाठसंख्या ( ) ईदृशे कोष्ठे प्रदर्शिता । २० ततश्च सम्भूत्यसम्भूतिसम्भवासम्भवशब्दानां तत्प्रसङ्गागतविनाशशब्दस्य चार्थाः संगृहीताः । यथा—

शाङ्करः

| मन्त्रसंख्या | शब्दः | अर्थः | |
|---|---|---|---|
| १२ | असम्भूतिः | प्रकृतिः कारणमविद्याव्याकृताख्या । | २५ |
| | सम्भूतिः | कार्यब्रह्म । हिरण्यगर्भः । | |
| १३ | सम्भवः | सम्भूतिः । कार्यब्रह्म । | |
| | असम्भवः | असम्भूतिः । अव्याकृतम् । | |
| १४ | विनाशः | विनाशवत् । कार्यम् । | |
| | सम्भूतिः (सकृत्तु असम्भूतिरिति पाठो गृहीतः) | अव्याकृतम् । अव्याकृतोपासना । | ३० |

श्रुत्यन्तरेणाऽपि जातिः प्रतिषिध्यत इत्याह—

**स एष नेति नेतीति व्याख्यातं निह्नुते यतः ।**
**सर्वमग्राह्यभावेन हेतुनाजं प्रकाशते ॥२६॥**

एवं किल श्रूयते ( बृ. उ. २. ३. १—६ ) "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च ।° अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति ।"[1] परामृष्टश्चायमर्थ उपरिष्टादसकृत् ( ३. ६. २६ ; ४.२ ४, ४. २२, ५. १५ ) । "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यत" इति इमामेव श्रुतिमाश्रित्य प्रवृत्तेयं कारिका । अयमस्याः श्रुतेरर्थः ।

उवटः

| मन्त्रसंख्या | शब्दः | अर्थः |
|---|---|---|
| १२ (९) | असम्भूतिः | मृतस्य सतः पुनः सम्भवो नास्ति । मृत आत्मनोऽभावः । |
| | सम्भूतिः | आत्मास्तित्वम् । |
| १३ (१०) | सम्भवः | सम्भवपरिज्ञानम् (=सम्भूति०) । |
| | असम्भवः | असम्भवपरिज्ञानम् । |
| १४ (११) | सम्भूतिः | जगतः सम्भवैकहेतुः परं ब्रह्म । |
| | विनाशः | विनाशि शरीरम् । |

महीधरः

| मन्त्रसंख्या | शब्दः | अर्थः |
|---|---|---|
| १२ (९) | असम्भूतिः | असम्भवं । मृतस्य पुनः सम्भवो नास्ति । |
| | सम्भूतिः | आत्मा । |
| १३ (१०) | सम्भवः | सम्भूतिः । कार्यब्रह्म । |
| | असम्भवः | अव्याकृतम् । |
| १४ (११) | सम्भूतिः | परं ब्रह्म । |
| | विनाशः | विनाशधर्मकं शरीरम् । |

मध्वाचार्यरङ्गरामानुजयो व्याख्यानं तद्ग्रन्थत एव ज्ञेयम् । रामानुजभाष्यम् आनन्दाश्रमग्रन्थमालायाम् । मध्वाचार्यभाष्यं तु हिन्दुधर्मग्रन्थमालायाम् । प्रकृते तु सम्भूतिसम्भवशब्दयोर्व्याख्यानं प्रथममस्मदाचार्येणैव कृतम् । तच्चार्वाचीनेभ्यो व्याख्यानेभ्यः कियद्भिद्यत इति ध्येयम् ।

१ । इह "सत्यस्य सत्यमिति° एष सत्य"मिति प्राक्पठितमपि पुनरिह पठ्यत इति द्रष्टव्यम् ।

**यतो** यस्मात् "स एष नेति नेतीति' श्रुतिः" "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे"त्यादिना (बृ. उ २. ३. १) **व्याख्यातं** विवृतं **सर्वं** मूर्तामूर्तभूतं रूपद्वयं प्रपञ्च**मग्राह्यभावेन** अग्राह्यत्वेन तस्य सर्वस्य कल्पितत्वेन वस्तुत्वाभावेनेति भावः।² निह्नुतेऽपलपति। तत इत्यध्याहार्यम्। **अजं** तत्त्वं **प्रकाशते** स्पष्टं भवति। असति ह्यपह्नवे मूर्तामूर्तरूपो जातिमान्प्रपञ्च एव भवेत्। तेन च श्रुत्यभिप्रायो व्याहन्येत॥

यदिह अजं प्रकाशत इति तदेवान्यत्र (३. ३३) अजं विबुध्यत इत्युक्तमाचार्येण॥

जातिर्न युज्यत इत्यपरां युक्तिमाह। तत्र तावदेष जातिवादी पृष्टो व्याचष्टाम्। किं जातिर्विद्यमानस्य भावस्येष्यतेऽविद्यमानस्य वा। उभयथापि नोपपद्यत इति क्रमेण दर्शयति—

---

१। "अथात आदेशो' एष सत्यम्" इत्यत्र "नेति नेतीति" नकारद्वयं वीप्सार्थमिति बृहदारण्यकभाष्ये शङ्करभगवत्पादा बहवश्च तदनुगामिनः। मनीषी सत्यानन्दस्त्वेवं मन्यते। प्रथमं तावत्स श्रुतेरस्या वाक्यान्येवं छिनत्ति। अथात आदेशो नेति नेति। न ह्येतस्मादिति नेति। अन्यत्परमस्ति। अथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यम्। तेषामेष सत्यमिति। अथ व्याचष्टे। अथात आदेशो निर्देशः। कस्य। ब्रह्मणः। कः। न इति न इति। नात्र वीप्सा। अपि त्वयमर्थः। ब्रह्म (आत्मा वा) न विद्यत इति न इति। अपि तु विद्यत एव। अत्र प्रथम इतिशब्दो वाक्यार्थद्योतक। द्वितीयस्तु समाप्तिद्योतकः। उत्तरत्राप्येवमेव वेदितव्यम्। एतदेव विवृण्वती श्रुतिः स्वयं ब्रवीति "न ह्येतस्मादिति नेति"। हि यस्मादेतस्मात्पूर्वोक्तान्मूर्तामूर्तरूपादन्यन् न विद्यत इति न। अपि तु विद्यत एव। ततः किमित्याह। यदि विद्यते किं तस्य नामधेयमित्याह "सत्यस्य सत्यमिति।" कोऽस्यार्थ इति। स्वयं श्रुतिरेव प्रत्युत्तरयति "प्राणा वै सत्य"मिति। सत्यशब्देनेह प्राणा विवक्षिताः। ततश्च तेषां प्राणानामेष आत्मा सत्यं भवति। अत उच्यते "सत्यस्य सत्य"मिति।

अस्मदाचार्यस्तु "स एष नेति नेत्यात्मे"त्यत्र (बृ. ३. ३. ९. २६) नकारद्वयस्य वीप्सार्थत्वमेव स्पष्टमिह कारिकायां विवक्षति। तथैव हि सम्भवति निह्नवो व्याख्यातस्य। अतः सुस्पष्टं प्रतीयते बृहदारण्यके प्रागुक्तं शाङ्करभाष्यमाचार्यस्यैव तत्कारिकामेवानुसृत्य प्रवृत्तमिति।

२। "अग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थ" इति (श)। "उपायस्य कल्पितत्वेन वस्तुत्वाभावा"दिति (आ.)।

**सतो हि मायया जन्म युज्यते न तु तत्त्वतः।**
**तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥२७॥**

**सतो** विद्यमानस्य **जन्म मायया हि** एव **युज्यत** उपपद्यते, **न तु तत्त्वतः** सत्यतः। कुतः। पश्यामः खलु वयं लोके किलाजातं जायते (४. २९)। अजातस्तत एव चासन्नेव घटादिर्जायते। यदि पुनः स घट आदितः सन्नेव स्यात्कथं स पुनर्जायेत। किमस्य पुनर्जन्मना। न हि सन्घटः पुनर्जायते। अतो न सतो भावस्य तत्वतो जन्म युज्यते। **मायया** तु स जायमानो जायेत। युज्येत चैतत्। इतोऽपि सतस्तत्त्वतो जन्म न युज्यते। अथ **यस्य** मते सन्भावस्तत्त्वतो जायते **तस्य** मते पूर्वं यज्जातं तदेव हि पुनर्जायत इति वक्तव्यम्। न तु तदुपपद्यते। यथोक्तमार्यदेवेन (च. श. २६०=११. १०)—

"सम्भवः क्रियते यस्य प्राक् सोऽस्तीति न युज्यते।
सतो यदि भवेज्जन्म जातस्यापि भवेद्भवः॥" इति।

किञ्च

**असतो मायया जन्म तत्त्वतो नैव युज्यते।**
**वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥२८॥**

**असतो** भावस्य **जन्म मायया तत्त्वतो** वोभयथापि **नैव युज्यते**। यथा **वन्ध्यापुत्र**स्तत्त्वेन अपि वा **मायया न जायते**॥

"सतो हि मायया जन्म युज्यत" इत्युक्तम् (३. २७)। कथं पुनस्तद्भवतीति वक्तुमुपक्रमते—

**यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।**
**तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः[1] ॥२९॥**

---

[1] ४. ६१-६२।

**यथा स्वप्ने** वस्तुतोऽसत्यपि **द्वये** ग्राह्यग्राहकरूपे **मनो** मायया **द्वयाभासं** द्वयस्य ग्राह्यग्राहकरूपस्याभासः प्रतिभासो (३. ४६ वृत्तिः) यत्र तत्तथोक्तं **सत्स्पन्दते** स्फुरति। यथा चालातचक्रस्थले सर्वथाभावेऽपि चक्रस्य केवलमलातस्यातिद्रुतस्पन्दनात्तत्र मायया चक्रं प्रतिभासते। तथा **जाग्रज्जा**गरिते[1]ऽपि **मनो मायया द्वयाभासं सत्स्पन्दते** स्फुरति। एवं च मनःस्पन्दनमात्रमेवेदं ग्राह्यं ग्राहकं च यथोत्तरत्र (४. ७२) कण्ठत एव वक्ष्यते "चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वय"मिति॥

अयमेवार्थोऽन्यथोच्यते—

**अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः।**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः॥३०॥**[2]

यथा **स्वप्ने मनोऽद्वयं** ग्राह्यग्राहकरहितं **च** अपि **द्वयाभासं** ग्राह्यग्राहकाभासं भवतीति **न संशयः**। तथा **जाग्रज्** जागरिते[3]ऽपि मनो**ऽद्वयं च** अपि **द्वयाभासं** भवति। **नात्र** संशयः॥

एवं न किञ्चिद्द्वैतं वस्तुतोऽस्ति। केवलं तु मनसैवेदं दृश्यते। मनसस्तु पुनरमनस्त्वे नेदमपि दृश्यत इत्याह—

**मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम्।**
**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते॥३१॥**

**इदं यत्किञ्चित्सचराचरं** स्थावरजङ्गमसहितं **द्वैतं** तन्**मनोदृश्यं** मनसैव केवलं द्रष्टुं शक्यं न पुनर्वस्तुसत्। कस्मात्। **हि** यस्मात् **मनसो**ऽमनीभावेऽमनस्त्वे सति। यदा मनो मनो न भवति। अमननाच्च तस्यामनीभावः। तस्मिंश्चा**मनीभावे** सति **द्वैतं नैवोपलभ्यते।** सति तु मनने विकल्परूपे द्वैतमुपलभ्यते। अतः

---

१। सप्तम्यन्ततयेदं व्याख्येयम्। यथा बृहदारण्यके (४. ३. १४) "जाग्रज्जागरितदेश"इति शङ्करः। अन्यत्राप्येवम् (३. २९; ४. ३९, ६१, ६२)।

२। कारिकेयं पूर्वकायां तर्कज्वालायां धृता।

३। ३. २९ टीप्पणी २।

सति मनने द्वैतस्य भावादसति त्वभावाज्ज्ञायते द्वैतमिदं मनोदृश्यमेव न वस्तुसदिति ॥

अस्त्येतन्मनसोऽमनीभावे नैवोपलभ्यते द्वैतमिति। अथ कथं न्वमनीभावो भवतीत्याह—

५ **आत्मसत्यानुबोधेन न सङ्कल्पयते यदा।**
**अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥३२॥**

**यदा** मन **आत्मसत्यानुबोधेन** आत्मनो यत्सत्यं तत्त्वं तस्यानुबोधेनानुभवेन[1] हेतुना **न** किञ्चन **सङ्कल्पयते** मनुते तदा **अमनस्ता**ममनस्त्वं प्रागुक्तममनीभावं **याति** लभते। मननाद्धि
१० मनसो मनस्त्वम्। यदा पुनर्न मनुते कथं तन्मनो भवेत्। जहाति हि तत्तदा स्वधर्मं मनस्त्वम्। कस्मात्। यस्मात्तदा **ग्राह्याभावे** ग्राह्यस्य कस्यचित्पदार्थस्याभावे तन्मनोऽग्रहमग्राहकं भवति। न किञ्चिदेतत्तदा गृह्णाति। सति हि ग्राह्ये ग्रहणं भवेत्। न पुनरसति। न खलु दाह्याभावे दहनो भवति। आत्मसत्यप्रकाशे सर्वस्यापि द्वैतस्य तिरो
१५ भावान्न किञ्चिद्विद्यते यन्मनो मन्वीत। तदाह श्रुतिः (बृ. उ. ४. ५. १५) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं मनुते।" यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन किं पश्येत्" केन किं मन्वीत।" विज्ञातारमरे केन विजानीयादिति।" सेयं च मनसोऽमनस्ताऽमनीभावो वा तस्यात्यन्तनिग्रहात् (३. ३४)। अत्र "ग्रहो न तत्रे"त्यादि
२० (३. ३८) कारिकाया वृत्तिरनुसन्धेया॥[2]

यदिदमसङ्कल्पकमत एव चामनस्तां यातं मनस्तदेव ब्रह्मेत्याहोत्तरेण ग्रन्थेन

१। "उपचारो च विहारो चानुबुद्धो होति।" सं. नि. ४. १८९।

२। प्रकृतकारिकायाश्चतुर्थपादे "ग्राह्याभावे तदग्रह"मिति पठ्यते। व सु ब न्धु
२५ रप्यन्यत्र (त्रि. २८) पठति "ग्राह्याभावे तदग्रहा"दिति। वि. सि., पृ. ९८४; ल. सू., पृ. १६९। ४. ७२, ७९, ९९।

**अकल्पकमजं[1] ज्ञानं ज्ञेयाभिन्नं[2] प्रचक्षते।**
**ब्रह्म ज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥३३॥**

यत्खलु ज्ञानमसङ्कल्पकं सर्वकल्पनापोढं निर्विकल्पकमिति भावः। वक्ष्यति हि ( ३. ३८ ) "आत्मसंस्थं तदा ज्ञानं" भवतीति। अत एव **अजं** जन्मरहितम्। सविकल्पकस्य ज्ञानस्योत्पादो भवन्भवेन्न निर्विकल्पकस्य। तज्ज्ञानं तत्त्वविदो **ज्ञेयाभिन्नं** (४. १ ) ज्ञेयादभिन्नमपृथगेकं **प्रचक्षते** वदन्ति। नेह ज्ञानज्ञेययोर्भेदोऽपि त्वभेदः। किं पुनस्तज्ज्ञेयम्। **ब्रह्म**। तच्च ब्रह्म **अजं नित्यं** च। एवं च **अजेन** प्रागुक्तेन ज्ञानेन **अजं** प्रागुक्तं **ज्ञेयं** ब्रह्म **विबुध्यते** प्रकाशते अवबुध्यते वा। आत्मसंस्थमत एव चासङ्कमकल्पकं चाजं ज्ञानम्। ज्ञेयं चाजं ब्रह्माभिन्नमेव। "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. उ. २. १. १ ) इत्यादिष्विव यदिह ज्ञानं तदेवान्यत्र "विज्ञानमानन्दं ब्रह्म" ( बृ. उ. ३. ९. २३ ) इत्यादिष्विव विज्ञानम्। सैव च ज्ञप्ति[3] विज्ञप्तिः। एतदेव च चित्तं मनश्च।[4] "चित्तं मनो विज्ञानं विज्ञप्तिश्चेति पर्यायाः" (वि., पृ. ३ )। "चित्तं मनोऽथ विज्ञानमित्यप्यनर्थान्तरम्" ( म. वृ., पृ ३०८ )। अ. को. २. ३४ ; स. नि. २. ६४। द्र: ३. ३८ ; ४. ६६ ॥

या सा मनसोऽत्यन्तं निग्रहादसङ्कल्पकत्वेनामनस्ता (३. ३२) कीदृशी नाम सेत्याह—

**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः।**
**प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ॥३४॥**

**धीमतः**[5] पुरुषस्य **निगृहीतस्य** निरुद्धस्यात एव **निर्विकल्पस्य मनसो** यः पूर्वोक्तः ( ३. ३२ ) अमनस्तारूपः **प्रचारो** विहारो[6] गतिर्भूमिरवस्थेति भावः। **स तु विज्ञेयः**। कीदृशः सः।

---

१। अकल्पकं नाम निर्विकल्पम् ( ३. ३४ ) असङ्गम् ( ४. ३२ )। "असङ्गलक्षणं ज्ञानम्" इति ल. सू पृ. १५७। ४. १ टीप्पणी।

२। ४. १।

३। "ज्ञानं ज्ञप्तिमात्र" मित्यस्या एव कारिकाया भाष्ये शङ्करः।

४। ३ ३१. ३२, ४६।

५। बौद्धागमे धीमच्छब्दो बोधिसत्त्ववाची ( म. सू. अ १९. ७३ )।

६। यथा प्रसिद्धो ब्रह्मविहारादिषु शब्देषु।

किं सुषुप्ते यः प्रचारः सोऽपि तत्सदृशः । नेत्याह । **सुषुप्तेऽन्य** एव स कश्चित्प्रचारः । **न** खलु स **तत्समः** तेनामनस्तारूपेण प्रचारेण समः सदृशो भवति । महद्धयन्तरमेतयोर्यथा सुव्यक्तमनन्तरकारिकायाम् ॥

किं पुनः । सुषुप्तेऽन्य एव प्रचारोऽन्यश्च निगृहीतस्य मनस इत्याह—

५ **लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ।**
**तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥३५॥**

**हि** यस्मात्**सुषुप्ते** सुषुप्त्यवस्थायां **तन्मनो लीयते** लयं प्राप्नोति मुह्यति । लयो नामेह निद्रावस्था[1] । इयमेव च मूढावस्था योगशास्त्रे । मूढत्वं हि तया मनसो जायते । **निगृहीतं** निरुद्धं तु मनो **न लीयते** । **तदेव** निगृहीतं मनो भयनिमित्ताभावा-

१० **न्निर्भयं समन्ततः** समन्तात्सर्वतो **ज्ञानालोकं** ज्ञानं स्वरूपमालोकः प्रकाशो यस्य तत् "सकृद्विभातं" (३. ३६) "प्रभातं" (४. ८१) "सकृज्ज्योतिः"[2] (३. ३७) ब्रह्म भवति । सर्वथा निरुद्धं चित्तमेव ब्रह्म नान्यत्किमपीत्यनुपदमेव कथयिष्यत्या चा र्यः कण्ठतः ॥

१५ यत्तन्निर्भयं ब्रह्मोक्तं तदेव विशिष्यते—

**अजमनिद्रमस्वप्नमनामकमरूपकम् ।**
**सकृद्विभातं सर्वज्ञं नोपचारः कथञ्चन ॥३६॥**

यद्ब्रह्मेत्युच्यते तत्खलु निगृहीतं मनः **अजम्** अनुत्पन्नम्[3] । **अनिद्रम्** न तमःसमुद्रेकान्निद्रावृत्तिकम् । निद्रावस्थारहितममूढमिति

२० भावः । **अस्वप्नम्** स्वप्नावस्थारहितम् अक्षिप्तमविक्षिप्तं चेति भावः[4] ।

---

१ । अत्र निद्रावस्था सुषुप्त्यवस्था च नान्योन्यं भिद्येते । द्र० ३. ४२, ४४, ४६ । वृत्तिश्च तत्रत्या द्रष्टव्या ।

२ । इदमुक्तं विज्ञानवादिमतमुपन्यस्यता ज य ती र्थे न ( त. आ ३० = ३, पृ. २३ )—

२५ "प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः ।
तेषामपाये सर्वार्थं तज्ज्योतिरविनश्वरम् ॥"

३ । इहा चा र्यो ऽजशब्दं पञ्चविंशतिकृत्वः प्रयुनक्ति ( १.१६ ; ३. १, १९, २६, ३३, ३६, ४३, ४७ ; ४. ११, १२, १३, ३८, ४६, ४८, ५७, ६०, ७४, ८०, ८१, ९३, ९५, ९६ ।

३० ४ । यो. द. १. १, व्या स भा ष्यं, त त्त्व वै शा र दी च । "अजमनिद्रमस्वप्न"मित्यसकृत्प्रयुक्तमिहा चा र्ये ण ( १. १६, ३. ३६, ४. ८१ ) ।

"अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः" इत्यनेन ( १. १५ ) स्वप्ननिद्रयोः स्वरूपं स्वयमेवोक्त मा चा र्यें णा धस्तात्। द्रष्टव्योऽत्र स ग्रन्थः ( १. १३-१६ )। किञ्च तत् **सकृद्विभातं**[1] सकृदेव यद् विभातं चिराय न पुनः पुनर्विभाति। नित्यप्रभास्वरमिति भावः। इदमीदृशं चेति विशिष्य नाम्ना रूपेण वा निर्देष्टुं न शक्यत इति **तदनामकमरूपकं** च। भवन्ति चात्र श्रुतयो "यतो वाचो निवर्तन्ते" ( तै. उ. १. ४. १, ९. १ ) "अरूपमस्पर्शम्" ( क. उ. ३. १५ ) इत्यादयः। किञ्च तत् **सर्वज्ञं**[2] सर्वदृक्। सर्वज्ञसर्वदृक्शब्दावभिन्नार्थौ। अयमेवार्थोऽधस्तात् (१. १२) तुरीयस्य सर्वदृक्त्व[3] कथनेनोक्तः। तच्चेदं सर्वज्ञत्वं सर्वज्ञान-शक्तिमत्त्वेनैव। यथोक्तमधस्तादेव (१. १२)। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वा"दित्यप्यनुसन्धेयात्र श्रुतिः ( बृ. उ. ४. ३. २३ )।

किञ्च। "लीयते हि सुषुप्ते तद्" (३. ३५) इत्यारभ्य "सकृद्विभातं सर्वज्ञम्" ( ३. ३६ ) इत्यन्तेन ग्रन्थेन व्याख्यातं ब्रह्म नाम स्फुटमेव कश्चित् समाधिरेव[1] नान्यत्किञ्चित्। यथानन्तरकारिकायामेव (३. ३७) "समाधिरचल" इत्यनेनातिस्पष्टमुक्तम्। को वा पुनः स समाधिरिति तं तावन्निषेधमुखेनाह **नोपचार** इति। अत्र **कथञ्चन उपचारस्तन्नामकः** समाधिर्न भवति। कः पुनरेष उपचारसमाधिः। उच्यते। सौगताः किल समाधिं द्विविधमाहुः। उपचारसमाधिरर्पणासमाधिश्चेति। तत्रोपचारसमाधौ चित्तं क्षणं विषयमालम्बते क्षणं च नालम्बते। अर्पणासमाधौ पुनश्चित्तं निमित्तमालम्ब्य चिरं तत्र तिष्ठति। आलम्बन-मुपगम्यानेन चरतीत्युपचारसमाधिः। ऐकाग्र्यं चित्तमालम्बते। चित्तमनेनालम्बनेऽर्पयतीत्यर्पणासमाधिः।[4] अत्रोभयोः समाध्योर्भेदमाह

१। "सकृद्विभातो ह्येष ब्रह्मलोकः।" छा. उ ८. ४. १-२।

२। यथोत्तरत्रापि ( ३ ४३, ४. ८९ )।

३। ४. ८४।

४। तदुक्तं बु द्ध घो षे ण ( अ. सा., पृ १४२ ) "एकग्गं चित्तं आरम्मणे अप्पेतीति अप्पणा।" "उपगन्त्वा विचरणवसेन उपविचारो" ( पृ. १४३ )। विचारशब्दोऽप्यत्र चिन्तयितव्यो यथा वि भा व नी टीकायां ( अ. स १. १७ ) "सम्पयुत्ति विचारो चित्तस्स नातिप्फन्दभूतो आकासे उप्पतितस्स सकुनस्स पक्खपसारणं विय। पदुमस्स उपरिभागे परिब्भमणं विय च पदुमाभिमुखपतितस्स भमरस्स।"

बुद्धघोषः। सोऽन्यत्र[1] (वि. म., पृ. १२६) द्रष्टव्यः। अयमीदृश उपचारसमाधिरत्र कथमपि न सम्भवति महतो दोषस्य प्रसङ्गात्। यथोक्तं बोधिसत्त्वभूमौ (पृ. ४४) "स पुनः पारमार्थिकः स्वभावः सर्वधर्माणां निर्विकल्पस्यैव ज्ञानस्य गोचरो वेदितव्यः। स
५ चेत्पुनर्यथैवाभिलापो येषु धर्मेषु यस्मिन्वस्तुनि प्रवर्तते तदात्मकास्ते धर्मास्तद्वस्तु स्यात्। एवं सति बहुविधा बहवः स्वभावा एकैकस्य वस्तुनो भवेयुः। तत्कस्य हेतोः। तथा ह्येकस्मिन्वस्तुनि बहुविधा बहवो बहुभिरभिलापैः प्रज्ञप्तय उपचाराः क्रियन्ते इति।"

अन्यो वा व्याख्यामार्गः। यः परमार्थोऽनारोपितरूपो न स
१० शक्योऽभिलपितुं व्यवहर्तुं वा कथञ्चिद् घटोऽयं पटोऽयमिति। कस्मात्। तस्यावाङ्मनसविषयत्वान्निर्विकल्पज्ञानगोचराच्च। वदन्ति हि तत्त्वविदः परमार्थस्तु तूष्णीम्भाव इति। सुप्रसिद्धं चेदं वेदान्तसिद्धान्तेऽपि। कः पुनर्वादो माध्यमिकशास्त्रस्य। अतः "अजमनिद्रमस्वप्नमनामकमरूपकम्" (३. ३६) इति प्रतिषेधमुखेन प्राक्प्रकटितेऽपि परमार्थे "सकृद्विभातं
१५ सर्वज्ञम्" इति पुनरुल्लेखात्स एव दोष आपततीति तदपनिनीषुराह **नोपचार** इति। अत्रोपचारो व्यवहारोऽभिलापो नाम प्रज्ञप्त्यादयश्च शब्दा अभिन्नार्थाः॥

यत्तत्प्राक्प्रदर्शितं ब्रह्म वस्तुतस्तत्समाधिस्वरूपमेवेत्युच्यत उत्तराभ्यां कारिकाभ्याम्—

२० **सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः।**
**सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः॥३७॥**

एष **समाधि**र्भवति। समाधेः स्वरूपमाह पतञ्जलिः (यो. सू. ३. ३) "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि"रिति। व्याचष्टे

---

१। "दुविधो हि समाधि उपचारसमाधि च अप्पनासमाधि च। द्वीहाकारेहि
२५ चित्तं समाधीयति उपचारभूमियं ("उपचारावत्थायं"—टीका) वा पटिलाभभूमियं ("झानस्स अधिगमावत्थायं"—टीका)। द्विन्नं पन समाधीनं इदं नानाकरणं। यथा नाम दहरो कुमारको उक्खिपित्वा ठपियमानो पुनप्पुनं भूमियं पतति एवमेव उपचारे उप्पन्ने चित्तं कालेन निमित्तं आरम्मणं कालेन भवङ्गं ओतरति। यथा नाम बलवा पुरिसो आसने वुट्ठाय दिवसम्पि तिट्ठेय्य एवमेव
३० अप्पनासमाधिम्हि उप्पन्ने चित्ते सकिं भवङ्गवारं छिन्दित्वा केवलम्पि रत्तिं केवलम्पि दिवसं तिट्ठति।"

चेदं तत्र व्यासः "ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यत" इति। कीदृशः स इत्याह **सर्वाभिलाप** इत्यादीनि विशेषणानि। **सर्वाभिलापविगतो** नामानभिलप्योऽकथ्य इत्यर्थः (अ. को. २. २४३)। **सर्वचिन्तासमुत्थितः** सर्वाभ्यो ५ निरवशेषाभ्यश्चिन्ताभ्यश्चिन्तनेभ्यो मननेभ्यः सङ्कल्पेभ्यः समुत्थितः समुद्गतः। प्रागुक्तममनीभावम् (३. ३१; मै. उ. ६. ३४) अमनस्ताम् (३. ३२) वा यात इति भावः। यदिह **सर्वचिन्तासमुत्थित** इति तदेवोत्तरत्र (३. ३८) "चिन्ता यत्र न विद्यत" इत्युक्तम्। नास्यामवस्थायां शक्यं किञ्चिदपि चिन्तयितुम्। निरुद्धा हि तदा १० चित्तवृत्तिः। अत्र हेत्वन्तरमुत्तरकारिकायां (३. ३८) प्रदर्शितम् "आत्मसंस्थं तदा ज्ञानम्" इत्यनेन। अत्यन्तं निरोधाच्चित्तवृत्तीनां सर्वथाप्यप्रवृत्तेः **सुप्रशान्तः। सकृज्ज्योतिः** सकृद्विभातः (३. ३६) नित्यप्रभास्वरः। **अचलः** स्थिरो दृढः। सौगतशास्त्रे (म. व्यु. ५८०) त्वचलो नाम कश्चिद्विलक्षण एव समाधिः। विशेषः पुनर्मृग्यः। १५ स च सर्वभयातीतत्वाद**भयः** ॥

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते।**
**आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥३८॥**

**यत्र चिन्ता न विद्यत** इति व्याख्यातम्। **न तत्र** कस्यापि विषयस्य **ग्रहो** ग्रहणम्। अत एवेदृशं चित्तमाचार्येण "अग्रह"मिति २० (३. ३२) "असङ्ग"मिति (४. ७२) "निःसङ्ग" मिति (४. ७९) चोक्तम्। व्याख्यातश्चैषोऽर्थस्तत्र तत्र स्वशास्त्रे। **न** च **तत्रोत्सर्ग**स्त्यागः। न तत्र तदा कश्चिद्विषय उपादीयते हीयते वा। यत**स्तदा ज्ञानं** चित्तं मनो विज्ञान**मात्मसंस्थम्** आत्मनि स्वस्मिन्स्वरूपे **संस्था** संस्थितिरैक्येनावस्थितिर्यस्य तत्[1]। एतदेवोपरिष्टात् (३. ४७) २५ "स्वस्थ"मिति वक्ष्यते। स्वप्रतिष्ठितमिति भावः।

१। "आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्" इत्यत्र (भ. गी ६. २५) "आत्मनि स्वरूपे संस्था स्थितिर्यस्येति" नीलकण्ठः।

अत्रेदमात्मसंस्थं ज्ञानं बौद्धविज्ञानवादिनां विज्ञानमात्रं च विज्ञप्तिमात्रं वा वस्तुतो न मिथो भिद्येते। विज्ञानमेव विज्ञानमात्रं तस्य भावो विज्ञानमात्रता। यदा विज्ञानं न किञ्चिदालम्बते ततश्च स्वस्मिन्नेव प्रतिष्ठितं भवति तदा सैवावस्था विज्ञानमात्रतावस्था ५ विज्ञप्तिमात्रतावस्था वा। तदवस्थापन्नं च चित्तं विज्ञप्तिमात्रप्रतिष्ठित-मुच्यते। तदुक्तं व सु ब न्धु ना (त्रि. २८; त्रि. सि., पृ. ५८४)—

"यदा त्वालम्बनं ज्ञानं नैवोपलभते तदा।

स्थितं विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात्॥" इति।

ल ङ्का व ता रे (पृ. १६९) च "यदा त्वालम्ब्यमर्थं नोपलभते ज्ञानं १० तदा विज्ञप्तिमात्रव्यवस्थानं भवति। विज्ञप्तेरपि ग्राह्याभावाद्ग्राहकस्या-भावः। तदग्रहणान्न प्रवर्तते ज्ञान"मिति।

अयमेवार्थः श्रुतः क ठ श्रुतौ (क. उ. २. ३. १०)—

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।

बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्॥" इति।

१५ सुप्रसिद्धं च श्रुतिशिरोवाक्येषु ब्रह्म ज्ञानं (तै. उ. २. ११) विज्ञानं (बृ. उ. ३. ९. २८; तै. उ. २. ५. १; ३. ५. १)[1] चोभयम्। इदं च ज्ञानं विज्ञानं वात्मसंस्थं ज्ञानं विज्ञानमात्रं वा। आत्मसंस्थं ज्ञानं त्वित्थं व्यज्यते छा न्दो ग्ये (७. २४. १-२) "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि। यदि वा न महिम्नीति। गोअश्वमिह महिमेत्याचक्षते। २० हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति। नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति॥"

स एव निर्विकल्पः समाधिः पुनर्विव्रियतेऽतिदुरवगमत्वात्तस्य—

**अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः।**

**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः॥३९॥**

२५ एष समाधिरूपो योगः **अस्पर्शयोगो नाम** प्रसिद्धः। व्याख्यास्यत एष उत्तरत्रा ला त शा न्तौ (४. २)। तत्तत्रैवावगन्तव्यः। अनधि-गतोत्कर्षैः **सर्वैर्योगिभि**र्दुष्करोऽयं द्रष्टुं साक्षात्कर्तुमिति **दुर्दर्शः**। तत्र च निरोधावस्थायामुच्छिद्यत इवात्मेति मन्यमाना अनिपुणा

[1] इह विज्ञानं विज्ञानमयं च वस्तुतोऽभिन्नम्।

**योगिनोऽस्माद्योगाद् बिभ्यति** भयमनुभवन्ति। यस्मात्ते वस्तुतोऽ**भये**ऽविद्यमानेऽपि भये **भयदर्शिनो** भवन्ति। पञ्चदश्यां (२. २८) विद्यारण्येनेमामेव कारिकां मनसिकृत्योक्तम्—

"गौडाचार्या निर्विकल्पे समाधावन्ययोगिनाम्।
साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे॥" इति॥ ५

इयं च परमश्रेयस्करी समाध्यवस्था मनोनिग्रहादधिगम्यत इत्याह—

**मनसो निग्रहायत्तमभयं सर्वयोगिणाम्।**
**दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥४०॥**

**सर्वयोगिणामभयं** भयाभावः। **दुःखक्षयः। प्रबोधो** जागरणमविद्यास्वापात्। तदुक्तं प्राक् (१. १६) "अनादिमायया सुप्तो १० यदा जीवः प्रबुध्यत" इति। **शान्तिरेव चाक्षया।** इत्येतत्सर्वं **मनसो निग्रहायत्तम्।** निगृहीते मनसि सर्वमिदं सिध्यति॥

अवितथमिदं मनो नाम दुर्निग्रहमिति। तथाप्यनवसादेनाभ्यस्यता पुरुषेण शक्यमिदं निग्रहीतुमिति सम्प्रदायलब्धेन केनाप्युपाख्यानेन बोधयन्नाह— १५

**उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना।**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥४१॥**[1]

**यद्वद्** यथा कस्मिंश्चित्किल टिट्टिभोपाख्याने कुशाग्रेणोद्धृतेन **एकबिन्दुना** एकैकेन जलबिन्दुनेति भावः **उदधेः** समुद्रस्य शोषणाय **उत्सेक** उत्सेचनमुत्क्षेपणमिति भावः। निर्वृत्तः। **तद्वत्तथा मनसो** २० **निग्रहोऽपरिखेदतो**ऽनवसादतोऽनिर्वेदतो **भवेत्।**

इदं तदुद्दिष्टमुपाख्यानं यथा संगृहीतं स्वकृतायां गीताटीकायां (६. २३) मधुसूदनेन। "कस्यचित्किल पक्षिणोऽण्डानि तीरस्थानि तरङ्गवेगेन समुद्रोऽपजहार। स च समुद्रं शोषयिष्याम्येवेति प्रवृत्तः स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि २५ प्रचिक्षेप। तदा च बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽपि नैवोपरराम।

१। प. द. ११. १०६; भ. गी. मधुसूदनटीका, ६. २३।

यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्यस्मिञ्जन्मनि जन्मान्तरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे। ततश्च दैवानुकूल्यात्कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास समुद्रस्त्वज्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन। ततो गरुडपक्षवातेन ५ शुष्यन्समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददाविति।"[१]

यथा तेनानिर्विण्णचेतसा टिट्टिभेन तादृशोऽतिदुष्करोऽपि समुद्रोत्सेकः कृतः एवमनिर्विण्णेन चेतसा शक्यः कर्तुं निग्रहो मनसः। तदुक्तं भगवता (भ. गी. ६ ३५)—

"असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
१० अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥" इति।

अपरिखेदपुरोगमो मनोनिग्रह इत्युक्तम्। अथ प्रदर्शनीयस्तदुपाय इत्याह—

**उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः।**
**सुप्रसन्नं लये चैव यथा कामो लयस्तथा॥४२॥**

१५ **उपायेन** वक्ष्यमाणेन "दुःखं सर्वमनुस्मृत्य" इत्यादिना "यत्नीकुर्यात्प्रयत्नतः" इत्यन्तेन ग्रन्थेन (३. ४३–४५) वर्णितेन **कामभोगयोर्विक्षिप्तं** मनो **निगृह्णीयात्।** अत्र कामशब्देन विषयस्य काम्यमानावस्था चिन्त्यमानावस्था वा। भोगशब्देन तु भुज्यमानावस्था। एतयोर्द्वयोरप्यवस्थयोरुद्रिक्तेन रजसा मनो विक्षिप्यते। विक्षिप्ते च २० मनसि न स समाधिः। अतस्तादृशं मनो निगृह्णीयात्। किञ्च **लये** सुषुप्ते। कदाचिन्निद्रापि लय उच्यते। **सुप्रसन्न**मायासवर्जितं मनो निगृह्णीयात्। सुप्रसन्नं चेत्कथं निगृह्यतेत्याह **यथा कामस्तथा लय** इति। यथा पूर्वोक्ता कामावस्था विक्षेपहेतुरिति हेया तथा

१। अन्यत्र (हि. उ., पृ. ७८-७९) तूपाख्यानमिदमन्तिमेऽंशे मनाग् २५ भिद्यते। एतत्कारिकया पुनः स्फुटं प्रतीयते मूलोपाख्याने टिट्टिभः किल चञ्चुपुटगृहीतेनैकेन कुशपत्रेणैकैकजलबिन्दूत्क्षेपणात्समुद्रोत्सेकाय प्रववृत इति। तथैव चेदमिह ग्रहीतव्यम्। अन्यथा "कुशाग्रेणैकबिन्दुनेति" निरर्थकमेवापद्येत

लयो निद्रारूपः सुषुप्तरूपो वा मूढावस्था (३. ३५) मोहहेतुरिति हेयः ॥'

अथोच्यते स उपायः—

**दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्।**
**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥४३॥** ५

सुप्रसिद्धमिदं यन्मनसो निग्रहोऽभ्यासवैराग्याभ्यां भवतीति। स्मर्यते हि भगवद्गीतासु (६. ३५)—

"असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥" इति।

उक्तं च पतञ्जलिना (यो. सू. १. १२) "अभ्यासवैराग्याभ्यां तन्निरोधः" १० इति। तयोर्लक्षणमपि स एवाह "तत्र स्थितौ यत्नोऽभ्यासः"(१. १३) इति। "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" (१. १५) इति च। एतदेवानुसन्दधानो वैराग्यरूपमुपायमुपदिशति **दुःखं सर्व**मित्यादि। "जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्" (भ. गी. १३. ८) इत्याद्युक्तनयेन "यो वै भूमा तत्सुखं नाल्पे १५ सुखमस्ती"त्यादि (छा. उ. ७. २३. १) यच्छ्रुतं **तदनुस्मृत्य** पुनः पुनः **कामभोगान्निवर्तयेत्।** अत्र कामश्च भोगश्च कामभोगं तस्मान्मनो

---

१। सदानन्देन वेदान्तसारे (§§ ३२—३३) अत्रत्ये द्वे कारिके (३. ४४—४५ क-ख) मधुसूदनेन तु भगवद्गीताटीकायां (६. २६) अत्रत्याः पञ्च कारिकाः (३. ४२-४६) उद्धृत्य व्याख्याताः। भगवद्गीतास्वप्युप- २० (६. १९-२८) दिष्टो मनोनिग्रहो मुख्यतया शब्दत एव भिद्यते न त्वर्थतः।

उक्तं चात्र शाकायन्येन (मै. उ. ४. १-११)—

"यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥°
लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्। २५
यदा यात्यमनीभावं तदा तत्परमं पदम् ॥°
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥"

प. द. ११ १०१-११३। विशेषः पुनरवतरणिकायाम्।

२। अयं चाभ्यासः प्राक् (३ ४१) टिट्टिभोपाख्यानदृष्टान्तेन सूचित एव। ३०

**निवर्तयेत्**। अथवा कामांश्चिन्त्यमानावस्थान् विषयान् भोगान् भुज्यमानावस्थांश्च विषयान् मनसः सकाशान्निवर्तयेत्। द्वाभ्यां खलु कारणाभ्यां वैराग्यं जायते। विषयाणां दुःखदोषदर्शनेन। द्वैतत्वेन तेषां वस्तुतोऽसद्भावेन च। तत्र प्रथमं कारणं दर्शितम्। ५ द्वितीयं दर्शयति **अज**मित्यादिना। महता प्रबन्धेन प्राक्प्रदर्शितं **सर्वमज**मनुस्मृत्य स खलु मनोनिजिघृक्षुः किञ्चिदपि **जातं** वस्तुतो न पश्यति। अपश्यंश्च क नाम स रज्यताम्। रागविषयस्यैवाभावात्॥

अथ समाधेरन्तरायापनयनायाह—

**लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।**
**सकषायं विजानीयाच्छमप्राप्तं न चालयेत्॥४४॥** १०

चत्वारोऽन्तरायाः। लयो विक्षेपः कषायः सुखास्वादश्च। क्वचित्पुनः सुखास्वादो रसास्वाद इत्युच्यते (वे. सा. § ३३)। तेषामाद्यास्त्रयोऽत्र चिन्त्यन्ते। अन्तिमस्तूत्तरकारिकायाम्। लयश्चित्तस्य निद्रावस्था मूढावस्था वा। यत्र तमः समुद्रिच्यते। तेन च न प्रतिपद्यते किमपि १५ तत्त्वम् (१. १५; ३. ३५, ४६)। तस्मिँल्लये सति लयकारणनिरोधेन **चित्तं सम्बोधयेत्** प्रबोधयेदुत्थानप्रयत्नेन। लयकारणानि तु निद्राशेषाजीर्णबह्वशनश्रमरूपाणि। यदा पुनरेवं सम्बोध्यमानं चित्तं योगा**द्विक्षिप्तं** व्याकुष्टमपनीतं स्यात्तदा तच्चित्तं **शमये**च्छान्तं कुर्यात्। यथा तद्योगादन्यत्र न प्रवर्तेत तथा कुर्यादिति भावः। सन्ति खलु केचन २० चित्तस्य विक्षेपास्तत्सहभुवश्च (यो. सू. १. ३०-३१)। एते हि चित्तं योगाद्विक्षिपन्त्यपनयन्तीति विक्षेपा इत्युच्यन्ते। **सकषायं** चित्तं **विजानीयात्**। कषाय इह रागद्वेषमोहरूपो दोषः। यथोक्तं शङ्करेण छान्दोग्यभाष्ये (७. २६. २) "वार्त्तादिरिव कषायो रागद्वेषादिदोष" इति। सदानन्द (वे. सा. §§ ३२-३३) मधुसूदनौ २५ (भ. गी. ६. १६) पुनर्मन्येते कषायशब्देनेह स्तब्धीभाव इति। ततश्च सकषायं स्तब्धीभूतमित्यर्थः। स्तब्धीभूतं च चित्तं **विजानीयात्** समाहिताच्चित्ताद्विवेकेन जानीयात्। एवं लयविक्षेपकषायेषु परिहृतेषु

**शमप्राप्त**[1] शान्तं चित्तं **न चालयेद्** विषयाभिमुखं न कुर्यादिति भावः ॥

अयमेवार्थ उक्तो मैत्रेयनाथेनापि महायानसूत्रालङ्कारे ( १४. ६ ख-घ, १० क-ख )—

"लीनं चित्तस्य गृह्णीयादुद्धतं शमयेत्पुनः ॥ ५

शमप्राप्तमुपेक्षेत तस्मिन्नालम्बने पुनः ।" इति

द्र: १४. ११-१४ ॥

शिष्टोऽन्तरायो वक्तव्यः । उपदेष्टव्यं च करणीयान्तरमित्युत्तर-कारिका—

**नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् । १०**

**निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥४५॥**

समाधिमधिजिगमिषुः पुरुषस्तत्र समाधौ व्यज्यमानं **सुखं नास्वादयेत्** । एतावन्तं कालमहो अहं सुखीति सुखानुभवरूपां वृत्तिं न कुर्यात् । समाधिभङ्गप्रसङ्गात् । अपि तु **प्रज्ञया** विवेकेन **निःसङ्गो** निःस्पृहो भवेत् । सुखरागाच्चित्तं निगृह्णीयादिति १५ भावः ।[1] अथ यदि तथा कृतमपि **निश्चलं** चित्तं **निश्चरद्** आलम्बनान्निर्गच्छद् भवति तदा तच्चित्तं **प्रयत्नतः** निरोधप्रयत्नेन **एकीकुर्यात्** निरोधेन सर्ववृत्तिसमुच्छेदात्केवलं तन्मात्रतयापादयेत् यथा तदेवैकं स्यान्नान्यत्किञ्चित् ।[2] एतदेवोक्तं भाष्यकारेण "चित्स्वरूपसत्तामात्रमेवापादयेदित्यर्थ" इति । ( द्रष्टव्यम् "एकीभवति" २० ( बृ. उ. ४ ४. २ ) ; "एकीभवन्ति" ( मु. उ. ३. २. ७ ) ; "एकीभूतः" ( मा. उ. ५ ) इति च ॥ )

१। शमप्राप्तमित्यत्र समप्राप्तमिति प्रागुक्तभगवद्गीताटीकायां मधुसूदनः । एवमेव च बहुषु संस्करणेषु पुस्तकेषु च । प्रथमस्तु पाठः साधीयान् । सम्मतश्च वेदान्तसारे ( ३३ ) सदानन्दस्य २५ विद्वन्मनोरञ्जनी टीकाकृतश्च । उपोद्बलितश्च प्रागुद्धृतेन मैत्रेयनाथ-वचनेन शमयेत्पुनरित्यनेनाचार्यवचनेन च । समप्राप्तमिति पाठे समशब्दो ब्रह्मपर इति मधुसूदनः ।

२ । अयमेवार्थः स्मर्यते भगवद्गीतायाम् ( ६ २६ )—

"यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।

ततो ततो नियम्यैतदात्मन्येव वशं नयेत् ॥" इति ।

यदुपनिषत्सु ब्रह्मेति प्रसिद्धं तदेतामवस्थामापन्नं चित्तमेव नान्यत्किञ्चनेत्याह—

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।**
**अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥४६॥**

५ यत्प्राक् ( ३. ३५ ) "लीयते हि सुषुप्ते तद्" इत्याद्युक्तं तस्यैवायं प्रपञ्चः। लयविक्षेपौ पूर्वमसकृद्विवृतौ ( १. १३, १४ ; ३. ३५ )। **यदा चित्तं न लीयते** मुह्यति तमःसमुद्रेकान्न च **पुनर्विक्षिप्यते** ध्यानालम्बनादपकृष्यते। भवति चैव "मनिद्रमस्वप्नम्" ( १. १६ ; ३. ३६ : ४. ८१ )। ततश्चा**निङ्गन**मचलं स्थिरं निवातनिष्कम्पप्रदीपकल्पम्।[1]
१० अत एवा**नाभासम्**। आभास आकृतिरिति भावः। कस्मिंश्चिद्वस्तुनि चित्तेन गृहीते या तत्र तस्याकृतिः प्रतिभासते स आभासो दर्पण इव मुखप्रतिबिम्बम्। सोऽत्रमीदृशः कश्चिदपि वस्त्वाभासो यस्य यत्र वा नास्ति तदनाभासम्। **तदा** तदीदृशं चित्तं **ब्रह्म निष्पन्नं** भवति। तदा तद्ब्रह्मस्वरूपं भवतीत्यभिप्रायः।[2]

१५ या सा भगवतः पतञ्जलेरुक्तिः ( यो. सू. १. २ ) "योगश्चित्तवृत्तिनिरोध"इति समासेनेयं कारिका तमेवार्थं ब्रवीति केवलं त्वन्तरेणास्य ब्रह्मत्वकथनम्।

अथैतदर्थोद्भासकानि कानिचिद्वचनानि—

"मानसे च विलीने तु यत्सुखं चात्मसाक्षिकम्।
२० तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव च ॥"

मै. उ. ६. २४ ( पृ. १४३ )।

"निराभासं पदं तत्तु तत्प्राप्य विनिवर्तते।"

शि. सू. वि. पृ. ६६।

---

१। "निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थिति"रिति स्वयमेवान्यत्राहा-
२५ चार्यः ( ४. ८० )।

२। "अप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थिति"रित्यन्यत्र ( ४. ८० ) भाष्यकारः। "चित्तस्य ब्रह्मतादिकम्" इति बोधिचर्यावतारपङ्क्तिस्त्वित्थं व्याख्याता पञ्जिकायां ( ४. १९ ) "चित्तस्य फलं ब्रह्मभूयादिक"मिति। "अजातं यच्चित्तं ब्रह्मैव जायते" इति
३० भाष्यपङ्क्तिः ( ४. २९ )।

अथैतानि वचनानि लङ्कावतारसूत्रे –

चित्तमात्रं निराभासं विहारो बुद्धभूमि च।
एतद्धि भाषितं बुद्धैर्भाषन्ति भाषयन्ति च॥"

१०. १०५ (पृ. २७८)।

"चित्तमात्रमतिक्रम्य निराभासे स्थितं फलम्।"

१०. ११० (पृ. २७६)।

"चित्तमात्रमतिक्रम्य निराभासमतिक्रमेत्।
निराभासस्थितो योगी महायानं न पश्यते॥"

१०. १५७ (पृ. २६६)।

"तदा योगी ह्यनाभासं प्रज्ञया पश्यते जगत्।
निमित्तं वस्तु विज्ञप्तिर्मनोविस्पन्दितं च यत्।
अतिक्रम्य तु पुत्रा मे निर्विकल्पाश्चरन्ति ते॥"

१०. ६४ (पृ. २७७)।

"आलम्बालम्ब्यविगतं यदा पश्यति संस्कृतम्।
निश्चितं चित्तमात्रं हि चित्तमात्रं वदाम्यहम्॥"
"मात्रास्वभावसंस्थानप्रत्ययैर्भाववर्जितम्।
निष्ठाभावः परं ब्रह्म एतां मात्रां वदाम्यहम्॥"

३. २५, २६।

इदं चोक्तं तत्रैव (पृ. १२६) "मत्प्रवचने पुनर्महामते विकल्पकस्य मनोविज्ञानस्य व्यावृत्तिर्निर्वाणमिति।" आचार्यः शङ्करोऽप्याह बौद्धमतं दिदर्शयिषु बृहदारण्यकभाष्ये (४. ३. ७, पृ. ५८७) "विज्ञानस्य निर्वाणं पुरुषार्थ" इति। दृश्यतां चेयं वृत्तिः (३. ३५; ४. २६; ४८, ७७, ८०)॥

तच्चित्तं तथा ब्रह्म निष्पद्यते कथं तत्त्वविदः परिकीर्त्तयन्तीत्याह—

**स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्।**
**अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते॥४७॥**

तत्खलु चित्तं तदा **स्वस्थ**मात्मसंस्थं यथा पुरस्ताद् (३. ३८) उक्तं व्याख्यातं च। गीतं चेदं भगवद्गीतास्वपि (६. २५)। **शान्त**मुपरतं सर्वथाप्रवृत्तं निरुद्धत्वात्। **सनिर्वाणं** निर्वाणं शान्तिरुपशमो लयो विनाशः। इदमेवाभिसन्धायाक्तं 'ब्रह्मनिर्वाण

निर्वाणं विमोक्षस्तस्य चेतस" इति।[1] अयमेवान्यत्र (ब्र. बि. उ. ४) मनस उन्मनीभावः। चेतसो वृत्तिक्षयः (मै. उ. ६. ३४)। विज्ञानस्य च निरोधः[2] (दी. नि. १. २२३)। प्रागुक्तोऽमनीभावो (३. ३१) ऽमनस्ता (३. ३२) वा।[3] किञ्चेदमेवाभिसन्धायोक्तं (यो. वा. ३. ६७. ८)—

५ "स्पन्दाद्भवति चित्सर्गो निस्पन्दाद्ब्रह्म शाश्वतम्।" इति

श्रुतिश्चाह (मै. उ. ६. २४, पृ. १४३)—

"मानसे तु विलीने तु यत्सुखमात्मसाक्षिकम्।
तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव च॥" इति

तदिदं निर्वाणम्। तेन निर्वाणेन सहितं **सनिर्वाणम्**। तच्च

१० **अकथ्यं** कथयितुमशक्यमनभिलप्यं सर्वाभिलापविगतं (३. ३७) योगिप्रत्यक्षं स्वानुभववेद्यम्। **उत्तमं** सर्वोत्कृष्टं **सुखम्**। किञ्चेद-**मजमजेन ज्ञेयेन** ब्रह्मणाव्यतिरिक्तम्। व्याख्यातमिदं सर्वमधस्ताद् (३. ३३)। व्याख्यास्यते च स्तोकमुपरिष्टादपि (४. १)। तच्चेदं तत्त्वविदः **सर्वज्ञं परिचक्षते** परिकीर्त्तयन्ति। अत्र परिचक्षतिर्न

१५ गर्हार्थः। सर्वज्ञशब्दोऽपि प्राक् (३. ३६) कृतव्याख्यानः।[4]

प्रतिज्ञातमजातिकथनं प्रकरणारम्भे (३. २)। कृतश्च तदाप्रकरण-समाप्तेः। चिन्तितं चान्यत्किञ्चित्प्रसङ्गागतम्। अथोपसंह्रियते प्रतिपिपादयिषितो मुख्यो विषयः—

**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते।**
२० **एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते॥४८॥**

॥ इति गौडपादीय आगमशास्त्रे ऽद्वैताख्यं
तृतीयं प्रकरणं समाप्तम्॥

अतिरोहितोऽर्थः। कारिकेयं पुनरलातशान्तौ (४. ७१) पठिष्यते॥[5]

---

१। वाचस्पतिना तत्त्ववैशारद्यां नागोजीभट्टेन च

२५ स्ववृत्तौ (यो. सू. २. १९) धृतं वचनम्।

२। "विञ्ञानस्स निरोधो।"

३। चिन्तितश्चायमर्थोऽवतरणिकायाम्।

४। १. १२, ४. ८४।

५। द्रः तट्टीप्पणी।

*

# चतुर्थं प्रकरणम्

## अलातशान्तिः

न किञ्चिज्जायत इतीदं प्राक् प्रतिज्ञातं (३. २) विमृष्टं (३. ३) सिद्धान्तितं प्रतिष्ठापितं च चरमकारिकायामतिक्रान्तस्य प्रकरणस्य (३. ४८)। द्रढयिष्यते च पुनरप्येतदुत्तरत्र (४. ७२) युक्तिभिरनेकाभिः। उद्घोषितं चैतदेवोत्तमं सत्यमिति। अथैतस्यैवार्थस्य भूयसे वैशद्याय। निबोधनाय चाविवादस्य (४. ५)। अद्वयवादिभिः सौगतैः ख्याप्यमाने ५ आत्मना चानुमोद्यमानेऽजातितत्त्वे इयमिदानी मा चा र्ये णा ला त शा न्ति-रारभ्यते। तत्रादौ द्वाभ्यां कारिकाभ्यां मङ्गलाचरणम्। इयं च तयोराद्या—

**ज्ञानेनाकाशकल्पेन[1] धर्मान्यो गगनोपमान्[2]।**
**ज्ञेयाभिन्नेन[3] सम्बुद्धस्तं वन्दे द्विपदां वरम् ॥१॥** १०

**य आकाशकल्पेन** आकाशसदृशेन **ज्ञेयाभिन्नेन** ज्ञेयाद्विषया-द्भिन्नेनानन्येन **ज्ञानेन गगनोपमाना**काशसदृशान् **धर्मान्** पदार्थान् **सम्बुद्धः** सम्बुद्धवान् **तं द्विपदां** मानवानां **वरं** श्रेष्ठमहं **वन्दे**।

बह्वत्र विमर्शनीयम्। तत्र को नामायं द्विपदां वरो य मा चा र्यो वन्द्यते। द्विपच्छब्द[4] ईदृशेषु स्थानेषु मनुष्यवचनः। द्विपदां वरो १५

---

१। ४. ९६ (शा.)।

२। ४. ९१।

३। ३. ३३; ४. ८८।

४। "शन्नो अस्तु द्विपदे शं चतुष्पदे" (ऋ. वे. १०. १६९. १) इत्यादि-भ्यावेदात्प्रसिद्धोऽयं शब्दः। म हा भा र ते ऽपि वनपर्वणि (५४. ४५) २० "नैषधो द्विपदां वर" इति। आदिपर्वणि च (२२०. ३६) धृतराष्ट्रं परामृश्य "अभिषेचि च यत्क्षत्तुः समीपे द्विपदां वरे"ति। एवमन्येष्वपि पर्वसु।

द्विपदानामुत्तमोऽग्र्यो द्विपदोत्तमः (पालौ द्विपदुत्तमो) इत्यादयः पर्यायाः। एषां च शब्दानां केचित् क्वचित् समस्ताः क्वचिद्वा व्यस्ताः विशेष्य-विशेषणोभयरूपेण तत्र तत्र प्रयुज्यन्ते। सौगतशास्त्रे पुनरयं द्विपदां वरोऽपरो वेदृशः शब्दः सर्वत्र सुगतवचन[1] एव। नरोत्तमपुरुषोत्तम (पालौ नरुत्तमपुरिसुत्तम-) शब्दावपि बुद्धवचनावेव।[2] भा ष्य का र स्तु मन्यते द्विपदां वरोऽत्र पुरुषोत्तमः।[3] स चेश्वरो नारायण एवेति।

तत्र ज्ञानमाकाशकल्पमित्युच्यते। किं नु खल्वेतेन प्रतिपत्तव्यम्। केन नाम सामन्यधर्मेण ज्ञानमाकाशकल्पं स्यात्। असङ्गत्वेनेति ब्रूमः। यथाकाशमसङ्गम्। न ह्येतत्कैरपि रजोधूमादिभिः सज्यते। ज्ञानमपि तथा न केनचिज्ज्ञेयेन विषयेण सज्यत इत्यसङ्गम्। नास्य केनापि विषयेण सङ्गः। नेदं कमपि विषयं गृह्णातीति (४. २६, २७, ७२, ८६, ९६) तदभिप्रायः। बहिर्विषयस्यैव स्वतन्त्रस्याभावः। अत एव ज्ञान "मसङ्ग"मिति (४. ७२, ९६, "असङ्गता," ४. ९७) "निःसङ्ग"मिति (३. ४५, ४. ७९) "अग्रह"मिति (३. ३२) चोच्यत आ चा र्ये ण। प्रतिपाद्यते चायमर्थस्तेन तत्र तत्र।[4]

---

१। अ. प. १; म. नी., पृ. ६०, १. २९; सु. नि. ८३, ९९५, ९९८; म. व्यु. २. § २६७; शि. स., पृ. ८, ५७ (इहान्तिमे स्थाने त्रयोदशकृत्वः)।

२। ध. प. ७१; सु. नि. ५४४, १०२१; म. व्यु. § १. ४०; म. व. २, पृ. १९४, १९९, २३२, २६६।

३। इह द्विपच्छब्देन द्विपदशब्देन वा समस्तमसमस्तमेव वोत्तमादि पदं नारायणवचनमित्यतिदुर्लभम्। साधुवादास्तु तस्मै मे मित्राय श्री वि धु शे ख र भट्टाचार्याय ... मान न्द स्वा मि ने येनैकोऽपि तावत्प्रदर्शितः प्रयोगो म हा भा र ते शान्तिपर्वणि (३४३. १) यत्र नारायणपरामर्शको द्विपदां वरिष्ठ इति शब्दः प्रयुक्तः। अवितथमिदं तेन शब्देनेह नारायणोऽभिप्रेत इति। स स्वयं नारायणो नारायणाव-तारोऽपि कश्चिद्वाधिरतोऽत्र नर एव न पुनरीश्वरो यथा मन्यते भा ष्य का रः। अतो युज्यते स प्रयोगस्तत्र।

४। असङ्गत्वेनाकाशोपमा यथा बोद्धानां बो धि च र्या व ता र प ञ्जि का यां (पृ. ३९९) "एवं० निष्प्रपञ्चत्वादाकाशवदसङ्गमनास्पदमचलं चित्तमुत्पादयाम" इति। अत्र "असङ्गमनास्पद"मित्येव युक्तः पाठो यथा समर्थयते भोटपाठः।

ब्रुवन्ति चासङ्गत्वं ज्ञानस्य बौद्धाचार्या अपि। यथोक्तं लङ्कावतारसूत्रे (पृ. १४७) "असङ्गलक्षणं ज्ञानं विषयवैचित्र्यसङ्गलक्षणं च विज्ञानं। असङ्गस्वभावलक्षणं ज्ञानं। अप्राप्तिलक्षणं ज्ञानमिति।" मूलं पुनरीदृशीनामुक्तीनां श्रुतिरेव। यथा "असङ्गो न हि सज्यते" (बृ. उ. ३. ९. २६; ४. २. ४) इति। "असङ्गो ह्ययं पुरुषः" (बृ. उ. ४. ३. १५, १६) इति च। ५

अतोऽसङ्गत्वलक्षणेन सामान्यधर्मेण ज्ञानमाकाशकल्पम्।

इह ज्ञानं ज्ञेयाभिन्नमित्युच्यते। सुविश्रुतं चेदं मतं विज्ञानवादिनां सौगतानाम्। तत्र न कश्चिज्ज्ञेयो विषयो बहिर्विद्यते। न खलु ज्ञेयं नाम किञ्चिदन्यज्ज्ञानात्। ज्ञानमेव तु ज्ञेयाकारेणावभासते। तदुक्तं दिङ्नागेनालम्बनपरीक्षाम् (६)— १०

"यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासते।
सोऽर्थो विज्ञानरूपत्वात्तत्प्रत्ययतयापि च॥" इति।

धृतं चेदं वचनं तत्त्वसङ्ग्रहपञ्जिकायाम् (पृ. ५८०)—

"नीलपीतादि यज्ज्ञाने बहिर्वदवभासते। १५
तत्र सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः॥" इति।

धर्मकीर्त्तिश्चाह स्वकीये प्रमाणविनिश्चये[1] (पृ. २७४क, प. ७) यत्सुप्रसिद्धं समुद्धृतं च तेषु तेषु निबन्धेषु तत्तत्कर्तृभिः[2]—

"सहोपलम्भनियमादभेदो नीलतद्धियोः।" इति।[3]

---

१। अस्य संस्कृतमूलं नाद्याप्यधिगतम्। भोटपाठस्तु लभ्यते। २०

२। भामती, २. २. २८; आनन्दगिरिटीका च, तात्पर्यटीका, पृ ४६७; मीमांसाश्लोकवार्त्तिकटीका, पृ. २. ९०; न्यायकन्दली, पृ १२६; अद्वैतब्रह्मसिद्धिः, पृ. ९८; विवरणप्रमेयसंग्रहः, पृ. ७९।

३। साधारणोऽयं विचारविषयो भारतीयानां दर्शनरसिकानाम्। यथा मीमांसादर्शने (१. १. ५) शाबरभाष्यम्; मीमांसाश्लोकवार्त्तिकम् (पृ. २१७—३४५); ब्रह्मसूत्रे (२. २. २८) शाङ्करभाष्यम्। २५

यदालम्ब्य पुनरुद्भूतमिदं मतं तदीदृशम्। यथा "चित्तमात्रं भो जिनपुत्रा यदुत त्रैधातुक"मिति (वि. १)।[1] "विज्ञप्तिमात्रं त्रिभवम्" (ल. सू. १०-७७) इत्यादि च।[2] ततश्च शनैः शनैर्लब्धपदः प्रससारायं सिद्धान्तो न कश्चिद्बाह्यो विषयो यथा लोको मन्यते।[3] विज्ञानमेव तु केवलं वासनावशात्तथा परिणमत इति।

किं कारणं धर्मा गगनोपमा इति। स्यादेतद्गणनासमतिक्रान्तत्वाद्धर्मा गगनोपमा इति। यथोक्तमष्टसाहस्रिकाप्रज्ञापारमितायाम् (२७४-२७६)—"सर्वधर्मा अपि सुभूतेऽचिन्त्या अतुल्या अप्रमेया असंख्येया असमसमाः।° सर्वधार्मा अपि सुभूतेऽसंख्येया गणनासमतिक्रान्तत्वात्। रूपमपि सुभूतेऽसमसमम्। एवं वेदना संज्ञा संस्कारा विज्ञानमपि सुभूतेऽसमसम् एवं सर्वधर्मा अपि सुभूते ऽसमसमा आकाशसमत्वात्सुभूते सर्वधर्माणाम्।" बोधिचर्यावतारेऽपि (५. १२) "दुर्जनान् गगनोपमा"निति। व्याचष्टे चेदं प्रज्ञाकरमतिः "शत्रवो हि गगनसमत्वादपर्यन्ता" इति।

---

इदं चोक्तमत्र धर्मकीर्त्तिना (प्र. वा[2]. २. ३८८-३९१)—

"सकृत्संवेद्यमानस्य नियमेन धिया सह।
विषयस्य ततोऽन्यत्वं केनाकारेण सिध्यति॥
भेदश्च भ्रान्तविज्ञानैर्दृश्येतेन्दाविवाद्वये।
संविचित्तिनियमो नास्ति भिन्नयोर्नीलपीतयोः॥
नार्थोऽसंवेदनः कश्चिदनर्थं वापि वेदनम्।
दृष्टं संवेद्यमानं तत्तयोर्नास्ति विवेकिता॥
तस्मादर्थस्य दुर्वारं ज्ञानकालावभासिनः।
ज्ञानादव्यतिरिक्तत्वम् ॥०"

१। द. भू., पृ. ४९; ३. स., पृ १९; त. आ, पृ. १८।

२। "बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनैर्लुडितं चित्तमर्थाभासं प्रवर्त्तते॥ ल. सू., पृ. २८९।

३। आह च वसुबन्धुः (वि. १) "विज्ञप्तिमात्रमेवैतदिति"।
"आत्मधर्मोपचारो हि विविधो यः प्रवर्तते।
विज्ञानपरिणामोऽसौ० ॥" त्रि. १।

अत्राह स्थिरमतिः। "धर्माणामात्मनश्च विज्ञानपरिणामाद्बहिरभावा"दिति।

अथवा य एते बाह्या भावा न ते परमार्थतः स्वेन रूपेण। अपि त्वारोपितेनैव। निःस्वभावत्वादेतेषाम्। न ह्यस्ति स्वभावो नाम कश्चित्। अत एव ते गगनोपमाः। तदाह शा न्ति दे वः (बो. अ. ६. १५५)—

"सर्वमाकाशसङ्काशं परिगृह्णन्तु मद्विधाः।" इति। ५

किं पुनस्ते गगनोपमाः। प्रत्यवोचत्तत्रैव प्र ज्ञा क र म तिः "समारोपिततत्त्वशून्यत्वा"दिति। अत एवोक्तम् अ ष्ट सा ह स्रि का यां प्र ज्ञा पा र मि ता या म् (पृ. २६७)—"एवमेव सुभूते सर्वधर्मा आकाशगतिका अनागतिका अगतिका आकाशसमाः। यथाकाशमनागतमगतमकृतमविकृतमनभिसंस्कृतमस्थितमव्यवस्थितमनुत्पन्नमनिरुद्धमेवमेव १० सुभूते सर्वधर्मा अनागता अगता अकृता अविकृता अनभिसंस्कृता अस्थिता असंस्थिता अव्यवस्थिता अनुत्पन्ना अनिरुद्धा आकाशकल्पत्वादविकल्पा" इति ॥[१]

वस्तुतस्तु यथासङ्गमिति ज्ञानं गगनोपममेवं धर्मा अप्यसङ्गा इति गगनोपमाः। न हि धर्माः क्वचित्सज्यन्ते (४. ९६)। निःस्वभाव- १५ त्वादेव। निःस्वभावाश्चाकाशस्वरूपाः शून्यस्वरूपाः ॥[२]

अनुत्पन्नानिरुद्धत्वाद्वा धर्मा गगनोपमाः। यथोक्तं ल ङ्का व ता र सू त्रे (१०. १७२)—

"अनिरुद्धा अनुत्पन्नाः प्रकृत्या गगनोपमाः।" इति।

किं कारणं ज्ञानमाकाशकल्पं धर्माश्च गगनोपमा इति न व्याकृतं २० भा ष्य का रे णे ति चिन्त्यम्।

इह ज्ञानं **ज्ञेयाभिन्न**मुक्तम्। एतच्च प्रागेव (३. ३३) विवृतम्। अथ व्याख्येयो धर्मशब्दो य एषो ऽला त शा न्तौ द्वाविंशतिकृत्वः[३] पठितः। अस्त्यस्य प्रयोगोऽपरयोरपि प्रकरणयो र्वै त थ्ये (२. २५)

---

१। ४. ९३; बो. अ. प., पृ. ३९९। २५

२। "अतोऽभिनिष्कृष्यमाणो निःस्वभावतयाकाशं शून्यमेवे"ति (बो. अ. प, पृ ५०३)। "तत्कोऽत्र कायः। तस्य प्रत्यवेक्षमाणस्य भवति। आकाशसमोऽयं कायः।० सर्वमेतदाकाशमिति पश्यति।०" इति च तत्रैव (पृ. ५०४-५०९)।

३। ४. १. ६. ८. १०. २१. ३३. ४१. ४६' ५३, ५४. ५८. ५९. ८१. ३० ८२. ९१. ९२. ९३. ९६. ९८. ९९।

वा द्वे ते च (३. १)। तत्रायं विधिवचनः। अत्र तु सामान्येनार्थस्य पदार्थस्य वा वाचकः। यथा "सर्वधर्मा अपि देवपुत्रा मायोपमाः स्वप्नोपमाः" (अ. प्र. पा., पृ. ३६)। अत्र सर्वधर्माः सर्वपदार्था इत्यर्थः। वस्तुतस्त्विन्द्रियस्य मनसो वा विषय एव धर्मः। प्रमेयमात्रं
५ वा धर्मः। तथा हि। धरतेर्धातोरयमुत्पन्न इत्येतदनुसृत्य निर्वक्तारो भवन्ति यथा अ भि ध र्म को ष भा ष्ये (पृ. ६) व सु ब न्धुः "स्वलक्षण-धारणाद्धर्म" इति।[1] बु द्ध घो षो ऽपि व्याचष्टे (अ. सा., पृ. ३६, § ६४) "आत्मनः पुनः स्वभावं धारयन्तीति धर्माः। धार्यन्ते वा प्रत्ययैः। धार्यन्ते वा यथास्वभावत इति धर्मा इति।[2] सौगतसिद्धान्ते केवलं रसस्पर्शादयो
१० धर्मा एव सन्ति। न पुनर्धर्मिणोऽपि। यथा नैयायिका वैशेषिका वा मन्यन्ते। इमे किल ब्रुवन्ति घटपृथिव्यादयो धर्मिणः काठिन्यादयस्तु धर्माः। ते चान्योन्यं भिद्यन्ते। बौद्धास्त्वाहुः काठिन्यस्पर्शमन्तरेण पृथिवी नाम न काचिद्वस्तुतोऽस्ति। अतः कश्चिद् ब्रूयाद् गन्धः पृथिवीत्येव युक्तं वक्तुं। न पुनः पृथिव्या गन्ध इति। न खलु पृथिवीति परमार्थतः
१५ किमपि वर्तते यत्र स शब्दः प्रयुज्येत। अत एवाह आ र्य दे वः स्वकीये च तुः श त के (३०१)—

"कठिना दृश्यते भूमिः सा च कायेन गृह्यते।
तेन हि केवलं स्पर्शो भूमिरेषेति कथ्यते॥"[3]

---

१। लुप्तः संस्कृतपाठः। इयं वृ त्ति कृ त्कृता भोटपाठस्य छाया। एवमेवाह
२० च न्द्र की र्ति रपि (म. वृ., पृ. ४०३, ४५७)। अस्मादेव क्रमेण प्रकृतिर्वा स्वभावो वेत्यपि धर्मशब्दस्यार्थ उद्धृतः।

२। इयमपि संस्कृतच्छाया। मूलं पुनरेषा पालिः "अत्तनो पन सभावं धारेन्तीति धम्मा। धारियन्ति वा पच्चयेहि धारियन्ति वा यथासभावतोति धम्मा।" अ-सा. § ९४, पृ. ३९।

२५ ३। इयमपि भोटपाठस्य वृ त्ति कृ त्कृता छाया। संस्कृतं तु मूलमद्यापि नाधिगतम्। "पृथिवीधातुः कतमः। कक्खटत्वमिति विस्तरः।" अ. को., अ. को. व्या (१), १. ३५ (पृ ६९)। "इह तु काठिन्यादिव्यतिरिक्तपृथिव्याद्यसम्भवे सति न युक्तो विशेष्यविशेषणभावः।० एवं पृथिव्यादीनां यद्यपि काठिन्यादिव्यति-रिक्तं विचार्यमाणं लक्ष्यं नास्ति। लक्ष्यव्यतिरेकेण च लक्षणं निराश्रयम्। तथापि
३० संवृतिरेवे"ति० म वृ., पृ. ६६-६७। "कक्खटत्वं कतमत्। पृथिवी"ति यो. भू. १६ख। ग र्भो प नि ष दपि (१) पठति "तत्र यत् कठिनं सा पृथिवीति।"

उक्तं च यशोमित्रेण (अ. को. व्या(२), ३ ; पृ. ७१७) "पृथ्वी गन्धवतीत्युक्ते रूपगन्धस्पर्शेभ्यो नान्यद्दर्शयितुं शक्यत" इति। इदं च मनसि कर्तव्यम् अन्येषामिव बौद्धानां नये परमार्थतो नावयवी नाम कश्चिदस्तीति। अत एवोक्तं भगवता—

"नास्तीह सत्त्व आत्मा वा धर्मास्त्वेते सहेतुकाः।"[1] ५

इदं चेह चिन्तयितव्यम्। तस्य भावस्तत्त्वम्। तथा च तत्त्वं नाम कश्चित्कस्मिंश्चिद्वस्तुनि विद्यमानो भावो गुणो वा। एवमपि साङ्ख्यानां पञ्चविंशतेः पदार्थानामेकैकोऽपि तत्त्वमित्येवोच्यते न पुनस्तत्त्ववानिति। प्रकृतिर्नाम साम्यावस्थामापन्नानि सत्त्वरजस्तमांसि। सा च प्रकृतिः स्वयमेव किमपि तत्त्वम्। न पुनरस्या अन्यत्किञ्चित् तत्त्वम्। १० गुणत्रयस्वरूपा हीयम्। नास्याः पृथग्गुणा वर्तन्ते। एवमपि प्रकृतेर्गुणा इति तत्त्वविदो व्यवहरन्ति। प्रसिद्धश्चायं व्यवहारस्तेषां नये। तत्र च पुनर्गुणगुणिनोर्गुणद्रव्ययो[2]र्धर्मधर्मिणोर्वा वस्तुतोऽभेदेऽपि भेद-उपचर्यते।[3] अश्वघोषोऽपि (बु. च. १२. ७६) गुण-गुणिनोरभेदमेवं दर्शयति— १५

---

१। म. वृ., पृ. ३५५।

२। वसुबन्धु वैशेषिकसम्मतं द्रव्यलक्षणमनादृत्य स्वसम्मतं लक्षणमाह "विद्यमानं द्रव्यम्" (अ. को. ९, पृ. २९०) इति। विवृतं चेदं तत्रैव यशोमित्रेण "यत्स्वलक्षणतो विद्यमानं तद्द्रव्य"मिति। न बौद्धानां वैशेषिका-णामिव गुणद्रव्यविभागः। न वा तन्नये स्मृतिसंस्कारेच्छाद्वेषादय आत्मनो गुणाः। अत एव नैषामाश्रयत्वेनाप्यात्मा सिध्यतीत्यास्तां विस्तरः। २०

३। विज्ञानभिक्षुस्तु न्यायवैशेषिकसिद्धान्ताभिभूतचित्तवृत्तिरिव मन्यते (सा. द. १. ६१) "अयं च पञ्चविंशको गणो द्रव्यरूप एव। धर्मधर्म्यभेदात्तु गुणकर्मसामान्यादीनामत्रैवाभिभाव" इति। इदं चोक्तं तत्रैव (१. ६२) "धर्मधर्म्यभेदाद्द्रव्याणामपि तन्मात्रता स्मृते"ति। धृतं चेदं वक्ष्यमाणं वचनं तेनान्यत्र (सा. द. २. ९)— २५

"शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥" इति।

"गुणिनो हि गुणानां च व्यतिरेको न विद्यते।
रूपोष्णाभ्यां विरहितो न ह्यग्निरुपलभ्यते॥" इति।

आर्हतानामपि सम्मतोऽयं गुणगुणिनोरभेदो यथा प ञ्चा स्ति-का य स म य सा रे ( ३ )

५ "दव्वेण विणा ण गुणा गुणेहि दव्वं विणा ण संभवदि।
अव्वदिरित्तो भावो दव्वगुणाणं हवदि तम्हा॥" इति।

इयमस्य च्छाया

द्रव्येण विना न गुणा गुणैर्द्रव्यं विना न सम्भवति।
अव्यतिरिक्तो भावो द्रव्यगुणानां भवति तस्मात्॥

१० अन्यदपि तत्रैव ( ४४ )

"जदि हवदि दव्वमण्णं गुणदो य गुणा य दव्वदो अण्णे।
दव्वाणंतियमधवा दव्वाभावं पकुव्वंति॥" इति।

इयं छाया

यदि भवति द्रव्यमन्यद्गुणतश्च गुणाश्च द्रव्यतोऽन्ये।
१५ द्रव्यानन्त्यमथवा द्रव्याभावं प्रकुर्वन्ति॥

नूनं रमणीयमिदमवगच्छतां यद् वि ज्ञा न मा त्र सि द्धौ साङ्ख्यानां तत्त्वमवगमयितुं व सु ब न्धु ना धर्मशब्द एव प्रयुक्तो न पुनस्तत्त्वशब्द इति। अत्र तत्त्वधर्मशब्दयोरिव पदार्थवाचकस्य भावशब्दस्य द्रव्यजीववाचकस्य सत्त्वशब्दस्य च प्रयोगः स्मरणीयः।

२० विमृष्टः प्रयोगः पदार्थवाचकस्य धर्मशब्दस्य ताथागतेषु ग्रन्थेषु। न पुनस्तावता मन्येत नायं ब्राह्मणानां ग्रन्थेषु प्रयुज्यत इति। बहुषु खल्वेषु स दृश्यते। यथा "अणुरेष धर्मः" ( क. उ. १. १. २१ ) इति। "एवं धर्मान्पृथक्पश्य"न्निति च तत्रैव ( २. १. १४ ); या स्को ऽप्याह ( नि. १. २० ) "साक्षात्कृतधर्माण ऋषयो बभूवु"रिति। धर्म इति धर्मन्निति च द्वावपि शब्दौ प्रत्ययमात्रभिन्नावभिन्नार्थौ। व्याचष्टे चैवं
२५

---

एतच्च द्रष्टव्यम् "तत्त्वानीति तान्त्रिकी संज्ञा।° धर्मधर्म्यभेदाद् व्यक्तयोऽपि तत्त्वानीत्युच्यन्त" इति त त्त्व या था र्थ्य दी प नी ( सा ङ्ख्य-सं ग्र ह-सङ्कलिता) ७२—९२।

इदमप्यवगन्तव्यम्। प्रक्रियाभेदेऽपि सौगतानां धर्मः साङ्ख्यानां च तत्त्वं
३० परमार्थतो नान्योन्यं भिद्येते।

वा च स्प ति स्ता त्प र्य टी का यां वा त्स्या य न प्रयुक्तं साक्षात्कृतधर्म-शब्दं (न्या. सू. १. १. ७) "सुदृढेन प्रमाणेनावधारिता अर्था येन स साक्षात्कृतधर्मे"ति। स्फुटमिह धर्मशब्दोऽर्थवचन इति। व्या सो ऽपि (यो. सू. २. १७) दृश्यशब्दं व्याचक्षाणस्तथैव व्याचष्टे "बुद्धिसत्त्वोपारूढाः सर्वे धर्मा" इति। एतावांस्त्वत्र भेदो यदर्थवचनस्य धर्मशब्दस्य प्रचुरः प्रयोगः सौगतानां शास्त्रेषु ब्राह्मणानां त्वल्पक एवेति।[1]

इदं चान्यदवगन्तव्यम्। सुस्फुटमिदं स्ववचनत एवा चा र्य स्य धर्मशब्द इव भावशब्दोऽपि पदार्थवचन इति। सत्यप्येवं यत्रा द्वै ते प्रकरणे भावशब्दोऽला त शा न्तौ तु तत्र नियमेन धर्मशब्द एव प्रयुक्तः। यथा—

अ द्वै ते

(१) "अजातस्यैव भावस्य" (३. २०)।

(२) "अजातो ह्यमृतो भाव" (३. २०)।

(३) "स्वभावेनामृतो यस्य भावः" (३. २२)।

१। इहा ला त शा न्तौ भा ष्य का र एतस्यां कारिकायामन्यासु चानेकासु धर्मशब्द आत्मानं बोधयतीति मन्यते। अन्येषां त्रयाणां प्रकरणानां यत्र वस्तुत आत्मैव विवक्षितस्तत्र तेन स एवात्मशब्दो जीवशब्दो वा प्रयुज्यते। सुप्रसिद्धश्चायमात्मशब्दः प्रयुक्तश्च तथा। (आत्मशब्दो यथा १. १२; २. १२. १७; ३. ३. ४. ७. ११. १३. १४। जीवशब्दो यथा १. १६; ३. ३. ४. ५. ६. ७. ११. १३. १४. ४८; ४ ६३. ६८. ६९. ७०।) तत्किं नु खलु स सपद्य ला त शा न्ता वेव धर्मशब्दमात्मवचनं मन्वीत। किञ्च। प्राक्प्रदर्शितेषु द्वाविंशतिस्थानेषु धर्मशब्दः स्वारस्येन पदार्थवाचक एव प्रतीयते। किमित्येषोऽकाण्ड एवात्मबोधको भवेत्। अन्यच्च। केषुचित्स्थानेषु स भा ष्य-का र स्तं शब्दमात्मवचनं व्याचक्षाणोऽपि न सर्वत्र तथा करोति प्रभवति वा तथा कर्तुम्। यथा "सर्वे धर्मा मृषा स्वप्ने" (४. ३३) इत्यत्र धर्मशब्दो न जात्वात्मानं बोधयितुमीष्टे। "हस्त्यादीन्धर्मान्" (४. ४१) इति "बाह्यधर्माः" (४. ५४) इति च तदुक्तिर्धर्मशब्दस्यार्थवचनत्व एवोपपद्यते। सकृत्स आह (४. ९) "आत्मनोऽन्ये च धर्मा" इति। युक्तमेवैतत्। क्वचित्तु (४. ८२) स स्फुटमेव वस्त्विवति तदर्थमाह। ("यस्य कस्य च धर्मस्ये"ति मूलम्। "यस्य कस्यचिद्वस्तुन" इति च तद्भाष्यम्। अयं चानन्दाश्रमस्य च-पुस्तकपाठः। अन्यत्र "द्वयवस्तुन" इति दृश्यते।) यद्यपि धर्मशब्दः सामान्येन सर्वमप्यर्थमवगमयन्नात्मानमप्यवगमयेत्। तथाप्यत्र विशेषेण तदवगमने न किमपि कारणमुपलभ्यते।

अ ला त शा न्तौ
"अजातस्यैव धर्मस्य" (४. ६)।
"अजातो ह्यमृतो धर्मः" (४. ६)।
"स्वभावेनामृतो यस्य धर्मः" (४. ६)।
५ सौगतभावभावितमिह चित्तम् आ चा र्य स्या ला त शा न्तौ।

अन्यच्चेदं किञ्चिच्चिन्तयितव्यम्। य इहा चा र्ये ण वन्दितः स धर्मान् संबुबुध इत्युक्तम्। कः पुनः सः। ननूक्तमीश्वरो नारायणः। स चेदीश्वरो नारायणो भवेत् केचन प्रष्टारो भवेयुः। अस्ति भवतोऽत्र किमपि प्रमाणम्। कुत्र नु खलु लब्धं भवता ईश्वरेण नारायणेना-
१० काशकल्पेन ज्ञेयाभिन्नेन ज्ञानेन गगनोपमा धर्मा सम्बुध्या इति। बुद्धेन तु तथा कृतमिति सुप्रसिद्धं बौद्धागमेषु। प्रदर्शयिष्यते चानेक-मुपरिष्टात्। ततश्च यदिह पूर्वं किञ्चिच्चिन्तितं चिन्तयितव्यं च पश्चात्तेन निर्विचिकित्सं प्रतीयेत द्विपदां वरोऽत्र बुद्ध एव विवक्षितो न जात्वीश्वरो नारायणः॥

१५ इयं पुनर्द्वितीया कारिका मङ्गलाचरणस्य यत्रा चा र्य स्तं नमस्करोति येनोपदिष्टोऽस्पर्शयोगः—

**अस्पर्शयोगो वै नाम[1] सर्वसत्त्वसुखो हितः।**
**अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम्॥२॥**

**अहं तं नमामि** येन स **वै** प्रसिद्धो[2] **ऽस्पर्शयोगो नाम**
२० नाम्ना अस्पर्शयोगः समाधिर्**देशित** उपदिष्टः। यः खलु सर्वेषां **सत्त्वा**नां पुरुषाणां **सुखः** सुखकर इति **सर्वसत्त्वसुखो** हित-करश्चेति **हितः**। यश्च न विद्यते विवादोऽत्रेत्य**विवादः**[3]। नास्मन्मतेन विरुध्यत इत्य**विरुद्धश्च**।

अथ कोऽयमस्पर्शयोगः। केन वायं देशितः। कुत्र वा। तत्र तावन्नैष
२५ शब्दः प्रसिद्धासूपनिषत्सु। योगः पुनरयम् (३. ३७–३८) अन्यो वा कश्चिदीदृशो दृश्यत एव तास्विति प्रतीयते। यथा (क. उ. २. ३. १०)—

---

१। ३. ३९।

२। "प्रसिद्ध उपनिषत्सु" इति भा ष्य का रः।" "प्रसिद्धमुपनिषत्स्वि"ति मुद्रितपुस्तकपाठस्तु प्रामादिकः।

३० ३। यथा विवृतमन्यत्र (४. ५) "विवदामो न तैः सार्धमविवादं निबोधत।"

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥"

इति । अन्यत्राप्युपलभ्यत उक्तिरीदृशी ।[१] न पुनरस्पर्शयोगशब्दः । स चायं योगो योगशास्त्रे ( यो. सू. १. २, १८, ५१ ) असम्प्रज्ञात-समाधि[२]रिति अन्यत्र तु ( प. द. २. १८ ) निर्विकल्पसमाधिरिति स्पष्टम् । न पुनरुपनिषत्स्विव तत्राप्यस्पर्शयोगशब्दो दृश्यते । अतो निसर्गादेवैष प्रश्न उत्पद्यते कि मा चा र्ये णा यं शब्दः प्रयुक्त इति ।[३]

इदं मे प्रतिवचनं प्रतिभाति । अयमस्पर्शयोगो बौद्धागमेषु सुप्रसिद्धानामनुपूर्वविहाराभिधानानां नवानां ध्यानानामन्तिमम् । तानि च ध्यानानि बुद्धेन देशितानि[४] सुलभानि च तत्र तत्र । तानि चैतानि—

चत्वारि रूपध्यानानि । तद्यथा । प्रथमं ध्यानम् । द्वितीयं ध्यानम् । तृतीयं ध्यानम् । चतुर्थं ध्यानं च ।

चत्वार्यरूपध्यानानि । यथा । आकाशानन्त्यायतनम् । विज्ञाना-नन्त्यायतनम् । आकिञ्चन्यायतनम् । नैवसंज्ञानासंज्ञायतनं च ।

नवमं तु संज्ञावेदितनिरोधम् ।[५]

---

१ । यथा प्र. उ. ४—६ ; मै. उ. ३. ३८ ।

२ । इदमाह व्या सः ( यो. सू. १. २ ) "न तत्र किञ्चित्सम्प्रज्ञायत इत्य-सम्प्रज्ञात" इति ।

३ । अस्तीयं पङ्क्तिः स्वरूपलाभव्याख्यानप्रसङ्गे श्री वा तु ल सू त्र प द्ध तौ (पृ. ४२) "स्वरूपलाभः समस्तकल्पनोत्तीर्णत्वादकृतकनिरवकाशनिरुत्तरनिस्तरङ्ग-निरवधिनिर्निकेतास्पर्शसंवित्प्राप्तिर्भवतीति ।" सेयं निवेदिता मे करुणया लक्ष्मौ विश्वविद्यालये दर्शनशास्त्राध्यापकेन साम्प्रतं स्वर्गतेन से न गु प्ते न न रे न्द्र ना थे न । अत्रास्पर्शसंवित्प्राप्तिश्चिन्तनीया । किञ्च तत्रैव (पृ. ४) महाशून्यताप्रवेश-व्याख्यानप्रसङ्गे दृश्यते—"कुलाकुलविकल्पदोषोज्झितोऽव्यपदेश्यमहानिरावरण-निरत्ययश्रेयश्रेदकनिर्मुक्तो वर्गावर्णनिर्वर्गोत्तीर्णः स्पर्शास्पर्शप्रथापरिवर्जितउपचारात् परमाकाशाद्यभिधानैरभिधीयत" इति ॥

४ । अ. नि., पृ ४. ४१०-४४८ । यथा "नव यिमे भिक्खवे अनुपुब्ब-विहारा ।० नव यिमा भिक्खवे अनुपुब्बविहारसमापत्तियो देसिस्सामि ।" नवेमे भिक्षवोऽनुपूर्वविहारा० इति च्छाया ।

५ । चीनपाठेन तु "संज्ञावेदित"स्थाने "सम्यग्वेदित" इति ( पालौ "सम्मा°") पाठः स्यात् ।

अस्मिन्नवमे संज्ञावेदितनिरोधनामधेये ध्याने न केवलं संज्ञावेदनादयः। अपि तु स्पर्शप्रमुखाः[१] सर्वेऽपि चैतसिका धर्माः सह चित्तेन निरुध्यन्ते। एषां च चैतसिकानां धर्माणामादिमः स्पर्शः। निरोधावस्थायां च स्पर्शे निरुद्धे सर्वेऽपि चैतसिका धर्मा निरुध्यन्ते। सति स्पर्शे सन्त्यन्ये चैतसिका धर्मा निरुद्धे च तस्मिन्नन्येऽपि ते निरुध्यन्त इति नियमः। तदेतद्व्याख्यातं (स. नि. ४. २२० छाया) "स्पर्शसमुदयाद्वेदनासमुदयः स्पर्शनिरोधाद्वेदनानिरोध" इति। वेदनायाः कारणं स्पर्शं इति सति स्पर्शे वेदना भवति' स्पर्शनिरोधाच्च वेदनानिरोधो भवतीति भावः। यथास्मिन्ध्याने चित्तं चैतसिकाश्च धर्माः सर्वथा निरुध्यन्ते तथा स्फुटतरं व्याख्यातं बुद्धघोषेण (वि. मा., पृ. ५५२)।[२]

अथ कोऽयं स्पर्शः।[३] तत्र नायं तावत्कायेण घटादीनां संसर्ग इव रूप[४]धर्मः। अपि तु चित्तधर्मः। यथोक्तं सौगतैः "स्पृश्यत इति स्पर्श" इति (म. वृ., पृ. ४५७)। "त्रयाणां संनिपातः सङ्गतिः स्पर्श" इति च (म. वृ., पृ. २५५)। "त्रिकसन्निपातलक्षणः स्पर्श"[५] इति (ने. प.) च। त्रयाणां सन्निपात इत्युक्तम्। केषां त्रयाणां को वा सन्निपातः। आह नागार्जुनः (म. का. २६. ५)—

"संनिपातस्त्रयाणां यो रूपविज्ञानचक्षुषां।
स्पर्शः सः" ॥ इति।

१। "फस्सो वेदना सञ्ञा चेतना एकग्गता जीवितेन्द्रियं मनसिकारो चेति सत्तिमे चेतसिका सब्बचित्तसाधारणा नाम।" स्पर्शो वेदना संज्ञा चेतना एकाग्रता जीवितेन्द्रियं मनस्कारश्चेति सप्तेमे चैतसिकाः सर्वचित्तसाधारणा नामेति छाया। अ. स. २. १।

२। "का निरोधसमापत्ति। या अनुपुब्बनिरोधवसेन चित्तचेतसिकानं धम्मानं अप्पवत्ति।" इदं च द्रष्टव्यं "सञ्ञावेदयितनिरोधं समापन्नस्स सञ्ञा च वेदना च निरुद्धा होन्ति।" स. नि. ४. ११७।

३। त्रि., पृ. २०, प. १. २, ७, ९, १०; पृ. २८, प. १८।

४। तत्खलु रूपं सौगतानां यच्छीतोष्णादिभिर्विक्रियते। चित्तं चैतसिकाश्च धर्मा न रूपतया गृह्यन्ते।

५। तिकसन्निपातलक्खणो फस्सो इति मूलम्।

च न्द्र की र्ति श्च ( म. वृ., पृ. ५५४ ) व्याचष्टे "इन्द्रियविषयविज्ञानानां त्रयाणां यः संनिपातः सहोत्पादोऽन्योन्योपकारेण तुल्यं या प्रवृत्तिः सा स्पृष्टिलक्षणः स्पर्श" इति।[1]

एवमस्मिन्संज्ञावेदितनिरोधे स्पर्शस्य सर्वथैवाभावात्स निरोधोऽस्पर्श-योग उच्यते। आ चा र्ये ण चास्माकं प्राक् (३. ३७—३९, ४६ ) ५ सोऽयमेव समाधिरभिप्रेत इति दृढं प्रतीयते।

अपरो वा व्याख्यामार्गः। उक्तमधस्ताद् (३. ३९) अयमस्पर्शयोगो नाम सर्वयोगिभिर्दुर्दर्शः। बिभ्यति चास्माद्योगिनोऽभये भयं पश्यन्तः। अतो भृशदुःखाधिगम्यत्वादेव निरोधोऽस्पर्शयोग इत्युक्तः। तथा हि। सौगतेषु शास्त्रेष्वेते शब्दा असकृद्दृश्यन्ते। यथा। स्पर्शविहारः ( त्रि., पृ. १० २८, प. १८ )। अस्पर्शविहारः ( म. व्यु. ८३४९, ८३५१ ; त्रि., पृ. २८, प. १८. अ. अ. आ., पृ. ३२६ )। स्पर्शविहारता (म. व्यु. ६२८८) च। स्थि र म ति रस्पर्शविहारमेवं विवृणोति (त्रि., पृ. २८, प. १८) "स्पर्शः सुखं तेन सहितो विहारः स्पर्शविहारः। न स्पर्शविहारोऽस्पर्शविहारो दुःखसहित इत्यर्थः।० सदुःखसविघातोऽस्पर्शविहारो भवतीति।" १५ भोटभाषायामपि स्पर्शविहारशब्दस्य स एवार्थोऽधिगम्यते।[2] इत्थं चिन्तयतो निसर्गेणैव प्रतिभाति भृशदुःखाधिगम्यत्वात्स निरोधो-ऽस्पर्शयोग इति।

अथाप्यन्यो व्याख्यामार्गः। उक्त म स ङ्गे न स्वकीयायां यो गा चा र भू मौ[3]— २०

---

१। एवमन्यत्र। यथा "या इमेसं तिण्णं धम्मानं संगति सन्निपातो समवायो अयं वुच्चति चक्खुसम्फस्सो।" म. नि. १. १११ ; स. नि. ४. ६८। द्रः अ. को. २. १९४ ; ३. ९७। एवमनेकम्।

२। सुखविहार इति छाया। पालौ तु तस्मिन्नेवार्थे स्पर्शविहारस्थाने फासुविहारो पठ्यते न पुनः फस्सविहारो। स्पर्शः पालौ फस्सो। अत्रैव २५ तु फासु।

३। नायं ग्रन्थोऽद्यापि प्रकाशितः। महापण्डितेन रा हु ल सा ङ्कृ त्या य-ने न तु भोटविषये लब्धमस्या मूलम्। कृता च तेन तत्प्रतिलिपिः। सा च साम्प्रतं ममान्तिके। संस्क्रियते मयैव प्रकाश्यते च कलिकाताविश्वविद्यालयेन।

"[७८-ख][1] कथं निरोधं समापद्यमानस्य नैवं भवति अहं निरोधं समापद्ये वा व्युत्तिष्ठे वा। समापत्तिकाले निरभिसंस्कारेण चित्तनिरोधात्।°

कथं निरोधाद् व्युत्थितस्त्रीन्स्पर्शान्स्पृशति आनिञ्ज्य[2]माकिञ्चन्य-
५ मानिमित्तम्। यद्भूयसा तस्याः समापत्तेर्व्युत्तिष्ठमानस्त्रिविधेनालम्बनेन व्युत्तिष्ठते भावनालम्बनेन विषयालम्बनेन निरोधालम्बनेन च। तैश्च व्युत्तिष्ठमानो यथाक्रममेव त्रीन्स्पर्शान्स्पृशति। [७९क] तत्र भावनालम्बनेन व्युत्तिष्ठमानस्य न भवति चित्तस्य इञ्जितत्वमस्मीति अयमस्मीति भविष्यामीति विस्तरः। अत आनिञ्ज्यं स्पर्शं स्पृशतीत्युच्यते।
१० विषयालम्बनेन व्युत्तिष्ठमानस्य न रागकिञ्चनं भवति न द्वेषकिञ्चनं न मोहकिञ्चनं। तस्मादाकिञ्चन्यं स्पर्शं स्पृशतीत्युच्यते। निरोधालम्बनेन व्युत्तिष्ठमानः सर्वनिमित्तानाममनस्कारादानिमित्तं धातुमालम्बते। तस्मादानिमित्तं स्पर्शं स्पृशतीत्युच्यते।"

इदमस्मात्प्रतीयते निरोधसमापत्तौ चित्तस्य सर्वथैव निरोधान्न तत्र
१५ कश्चिदपि स्पर्श इति। व्युत्थाने तु त्रयः स्पर्शा भवन्ति आनिञ्ज्याकिञ्चन्यानिमित्ताः। यस्मान्निरोधसमापत्तौ न कश्चन स्पर्शस्तस्मात्सैवा-स्पर्शयोगः। अत्र स्पर्शशब्दोऽनुभवार्थः।[3]

---

१। इह यथोपलब्ध एव पाठ उपन्यस्तो न पुनः संस्कृतः।

२। इदं शब्दरूपं कम्पनार्थस्य एजिधातोर्गमनार्थस्य इगिधातोर्वा निष्पन्न-
२० मिति अभिधर्मकोश व्याख्यातारो मन्यन्ते। अस्य बहुषु स्थानेषु बहुपाठभेदो बुभुत्सुभिरेतेषु ग्रन्थेषु द्रष्टव्यो यथा अ. को. ४. १०७ (अनेकान्युपन्यस्तान्यत्र प्रमाणानि); म. वृ, पृ ३३४-३३९; अ. को. व्या[2]. पृ. ३८९।

३। स्पृश्यत इति स्पर्शो भावसाधनः कर्मसाधनो वा। स्पृशतेर्धातोरनुभवार्थे प्रयोग उपनिषद्यपि लभ्यते। यथा "ते ह्येनन्नेदिष्ठं पस्पृशुः"
२५ (के. उ. ४. २) इति। ते ह्येनत्प्रथमो विदांचकारेति पाठश्च्युतसंस्कृतिदुष्टः। न चायमुपलभ्यते जैमिनीयब्राह्मणे (१०)। "स ह्येनं नेदिष्ठं पस्पर्श। स ह्येनत्प्रथमो विदांचकार" (के. उ. ४. ३)।

दृष्टमिदं प्राग् (३. ३९) योगिभिरपि दुर्दर्शोऽयमस्पर्शयोग इति। किं बहुना तथायं गम्भीरो यथाऽविद्यमानेऽपि भये केचित्तत्र भयं पश्यन्तीति च। किं पुनः कारणं ते बिभ्यति। युक्तमाह तत्र (३. ३९) भा ष्य का र "आत्मनाशरूपमिमं योगं मन्यमाना" इति। किमित्येष योग आत्मनाश इव मन्यत इति दृश्यते सविस्तरं सौगतानामागमेषु। तथा हि। एष खलु योगो मरणात्स्तोकमेव भिद्यते। अत एव निर्वाणाधिगमादनतिपूर्वं भगवति तथागते संज्ञावेदितनिरोधमधिगतवति शिष्य आनन्दस्तं मृतमेवामंस्त। अपरस्तु शिष्योऽनुरुद्धो नाम, तमवोचन्नायमधिगतो मृत्युम्[१] अपि तु संज्ञावेदितनिरोधं समापन्न इति। वस्तुतोऽपि तत्तथैवाभूत्। स खलु भगवान्पश्चान्निरवासीत्।[१] अतो नैसर्गिकमेवेदं केचन कुयोगिनो बिभीयुरस्मादस्पर्शयोगादिति।

योगोऽयं मनागेव भिद्यते मरणादित्युक्तमधस्तात्। विवृतं त्वेतद् बु द्ध घो षे णा त्मनो वि शु द्धि मा र्गे (विशुद्धिमग्गे, पृ. ५५८) केनचित् सू त्र पि ट क स्य वचनेन। अयमस्य सारः। मरणे विलीयते तापस्तनोः। नश्यन्तीन्द्रियाणि। निर्गच्छति च प्राणवायुः। योगे पुनस्तस्मिन् सर्वमप्येतद्विद्यते।

अवोचाम पूर्वमस्पर्शयोगाभिन्नः संज्ञावेदितनिरोधो देशित-स्तथागतेनेति। तत्राष्टास्वनुपूर्वविहारेषु दर्शितपूर्वेषु प्रथमध्यानादिषु नैवसंज्ञानासंज्ञायतनान्तेषु न किञ्चिद्बुद्धशास्त्रमूलकम्। तत्खल्वखिलमपि तेनात्मनो गुरुभ्यामेवाध्यगम्यत। तथा हि। आडारकालापः (पालौ अळारकालामो) तस्मा अनुपूर्वविहारेषु यावत् सप्तममाकिञ्चन्यायतनं रुद्रको रामपुत्रश्च (पालौ उद्दको रामपुत्तो) यावदष्टमं नैवसंज्ञानासंज्ञायतनमुपदिदेश। स तु बुद्धस्तत्राप्यपरितुष्यंस्ततः परमपि संज्ञावेदितनिरोधं स्वयमेवावबुबुधे।[२]

स्यादेतत्। स चेदस्पर्शयोगो बुद्धेनैव देशितः किं कारणं न तत्तस्य वा तदीयानां विनेयानां वा वचनेषु दृश्यते। ननु भो महान् विषयस्तेषां वचनानाम्। तं सर्वमनन्विष्य नास्ति तत्तत्रेति न युक्तं वक्तुम्।

१। म. प. सु. ४. ८. ९ (= दी. नि. २. १९६)।

२। म. नि. १. ८. ९ (= अ रि य प रि ये स न सु त्त म्, १. ३. ६); ल. वि., पृ २३८-२३९, २४३-२४४; बु. च. १२. ६३, ८३।

वस्तुतस्तु दृश्यते तत्सकृदपि तावत्तत्र। यथा बौद्धगान ओ दो हेति ग्रन्थे (साहित्यपरिषद्ग्रन्थावली, ५५, १३२३, पृ. १६)।[1]

किञ्च। एष खल्वस्पर्शयोगो**ऽविवादोऽविरुद्धश्चे**त्युच्यते। स्फुटमेतेन व्यज्यते नायं योग आचार्यस्य स्वकीय आम्नाये अपि तूपादीयते परकीयादिति। अन्यथा शक्येतेदं पदद्वयं परिहर्तुम्।[2]

अस्य च योगस्योपादेयत्वे हेतुमाह **सर्वसत्त्वसुखो हित** इति। अस्ति लोके किमपि सुखं न पुनर्हितम्। अस्ति च हितं न पुनः सुखम्। अयं तु योगः सुखश्च हितश्च सर्वेषामपि पुरुषाणां ये तं कुर्वन्ति।[3] यतश्चाय**मविवादोऽविरुद्धश्च** ततोऽभ्युपादेयः। अत एव येनायं देशितस्तं **नमामि**।

१। इह कासाञ्चिदपभ्रंशनिबद्धानां बौद्धगीतीनामस्ति काचित्संस्कृत-टीका। सन्त्यत्र बहवो भ्रमाः प्रमादाश्च। नेयं संस्कर्त्रा तथा संस्कृता यथासीत्संस्कर्तव्या। अस्यां टीकायां प्रसङ्गादस्पृशयोगत्वादिति पदं प्रयुक्तम्। स्पष्टमेव भ्रान्तोऽयं पाठः। अस्पर्शयोगत्वादिति पठितव्ये अस्पृशयोगत्वादिति हि पठितम्। भोटपाठादपि सुस्पष्टमिदम्। भोटसंस्कृतपाठयोरस्ति त्वत्यल्पको भेदः। तथा हि भोटपाठे ०योगादिति। संस्कृते तु ०योगत्वादिति। एतत्तु शक्यमवज्ञातुम्। बहुषु स्थानेष्वेतादृशभेदस्यानादरात्।

२। अन्यत्रा प्याचार्य एवं वक्ष्यति (४. ५) "विवदामो न तैः सार्ध-मविवादं निबोधते"ति।

३। अस्मिंश्च योगे यत्परमं सुखमनुभूयते तद्विवृतं विस्तरशो बौद्धागमेषु (सं. नि. ५. २२८)। यथा। "इधानन्द भिक्खु सब्बसो नेवसञ्ञाना-सञ्ञायतनं समतिक्कम्म सञ्ञावेदयितनिरोधं उपसम्पज्ज विहरति। इदं खो आनन्द एतम्हा सुखा अञ्ञं सुखं अभिक्कन्ततरं च पणीततरं च।" अत्र वेदनायाः सर्वथा निरोधादेव सुखम्। यन्निर्वाणं सुखमित्युच्यते तत्रापि स एव हेतुर्यन्न तत्र वेदनेति। तदुक्तं बौद्धागमे (अ. नि. ४. ४१४-४१८) "किं पनेत्थ (निर्वाणे) आवुसो सारिपुत्त सुखं यदेत्थ नत्थि वेदयितंति। एतदेव ख्वत्थ आवुसो सुखं यदेत्थ नत्थि वेदयितं॥"

भगवद्गीतास्वपीयमेवावस्था वर्ण्यते (६. २०-२२)।

अथेदं सर्वं पर्यालोच्य न दुरवगमं येनायमस्पर्शयोगो देशितो न स परः कश्चित्तथागतादिति। वक्ष्यमाणं चा चा र्य स्य वचनजातं मतमेतद् द्रढयिष्यति॥

"एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायत" (३. ४३) इत्यजातिवादः प्रागुद्घोषितः पश्चादप्युद्घोषयिष्यते (४. ७१)। चिन्तितश्चैष पूर्वं म द्वै ते परमपि च चिन्तयिष्यते पुनः पुनर्बहुविवादास्पदत्वात्स्थूणानिखनन-न्यायेन प्रतिष्ठापनीयोऽयमर्थ इति। तत्र द्वया ह वादिनः प्राधान्येन सत्कार्यवादमसत्कार्यवादं चातिष्ठमानाः। तेषु साङ्ख्या वैदान्तिकाश्च सत्कार्यवादिनः। वैशेषिकास्तु सह नैयायिकैरसत्कार्यवादिनः।[1] तत्रा चा र्य स्तावदुभयानप्येतान्वादिनः कीर्त्तयित्वा तेषां मिथो विवादमेवं समासेनोपदर्शयति—

**भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि।**
**अभूतस्यापरे धीरा विवदन्तः परस्परम्॥ ३॥**

**परस्परं विवदन्तो** विरुद्धं वादं कुर्वन्तः **केचिदेव वादिनो** न सर्वे **भूतस्य** विद्यमानस्य सतो वस्तुनो **जाति**मुत्पत्ति**मिच्छन्ति।** सदेवोत्पद्यत इति मन्यन्त इति भावः। **अपरे** तदन्ये तु **धीरा** मतिमन्तो वादिनो**ऽभूतस्या**विद्यमानस्यासतो वस्तुनो जातिमिच्छन्ति। सत्कार्य-वादिनो मन्यन्ते तिलेष्वतिसूक्ष्माव्यक्ताकारेण विद्यमानमेव तैलं पीडनेन व्यज्यते। इयमभिव्यक्तिरेव जातिः। न चेत्तैलं तिलेष्व-भविष्यन्न तत्तेभ्योऽध्यगमिष्यत। तिलेभ्य इव सिकताभ्योऽपि च तत्प्रादुरभविष्यत्। न तु प्रादुर्भवति। असत्कार्यवादिनस्त्वभि-प्रयन्ति मृद्यसन्नेव घट उत्पद्यते। उत्पत्त्या हि स सम्भवति। स चेत्प्रागप्युत्पत्तेः सन् किमस्योत्पत्त्या। अनुत्पन्नदशायामपि चेत्स सन्नेव स्यान्न तर्हि कदाचिदनुत्पन्न इति न कश्चित्कदाचित्तदुत्पादने प्रवर्तेत पुरुषः। दृश्यते तु सर्वस्तत्र प्रवर्तमान इत्यास्तां विस्तरः॥

१। सा. का. ९; ब्र. सू. २. १. १४-१८ (शा. भा.); बृ. उ. १. २. २ (शा. भा.); न्या. क., पृ. १४३। बौद्धेषु पुन र्वै भा षि काः सत्कार्यवादं सौ त्रा न्ति का स्तु सह यो गा चा रै रसत्कार्यवादमभ्युपगच्छन्ति। त. श. (वृत्तिः), ९. १९।

सौगतास्तूभयमप्येतन्मतं प्रत्याचक्षाणाः सर्वथाजातिमेवातिष्ठन्ते। तदिदमुक्तम्—

**भूतं न जायते किञ्चिदभूतं नैव जायते।**
**विवदन्तोऽद्वया[1] ह्येवमजातिं ख्यापयन्ति ते ॥४॥**

५ **किञ्चि**त्किमपि **भूतं** विद्यमानं सदित्यर्थः। **न जायते।** यत् सद्विद्यमानमेवास्ति किं पुनस्तस्य जात्या। न हि कस्यचिद्विद्यमान एव पुत्रः पुनर्जायते। **अभूतमसदपि किञ्चिन्नैव जायते।** न ह्यसच्छशविषाणादि जायमानं दृष्टं कदाचित्। **एव**मनेन प्रकारेण **हि विवदन्तो** विवादं कुर्वन्त**स्ते** प्रसिद्धा **अद्वया** अद्वयवादिनो बौद्धा

१० **अजाति**मनुत्पत्तिं **ख्यापयन्ति** प्रकाशयन्ति।

अत्राद्वयशब्दो व्याख्यातव्यः। नास्ति द्वयं येषां तेऽद्वयाः। किं पुनरत्र द्वयम्। अस्तिनास्त्यात्मानात्मनित्यानित्यशून्याशून्यादि परस्परविरुद्धं दर्शनं द्वयम्। बुद्धेन हि भगवता द्वावप्येतादृशावन्तौ विहाय मध्यमया प्रतिपदा धर्मो देशित इति सुप्रसिद्धम्। तन्मते हि न

१५ किञ्चिदुत्पन्नं न वा किञ्चिन्निरुद्धम्। न किञ्चिदुच्छिन्नं न वा किञ्चिच्छाश्वतम्। न किञ्चिदेकं न वा किञ्चिदनेकम्। न किञ्चिदागतं न वा किञ्चिन्निर्गतम्।[2]

---

१। केचिदिह द्वया इति पठन्ति। स त्वपपाठ इत्यनुपदमेव द्रक्ष्यते।

२। म. वृ., पृ. ११। उक्तं च तत्रैव ना गा र्जु ने न—

"अनिरोधमनुत्पादमनुच्छेदमशाश्वतं।

२० अनेकार्थमनानार्थमनागममनिर्गमं ॥

यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवं

देशयामास सम्बुद्धस्तं वन्दे वदतां वरं ॥"

इदं च सर्वमनुसन्धेयमत्र—

२५ "अस्तीति काश्यप अयमेकोऽन्तो नास्तीत्ययं द्वितीयोऽन्तः। यदनयोर्द्वयोरन्तयोर्मध्यमियमुच्यते काश्यप मध्यमा प्रतिपद्धर्माणां भूतप्रत्यवेक्षा।" का. प. § ६० (पृ. ९०)।

"द्वयनिश्रितो ऽयं कात्यायन लोकोऽस्तितां वाभिनिविष्टो नास्तितां च तेन न परिमुच्यते।" म. वृ., पृ. २६९ (उद्धृतोऽयं का त्य य ना व वा दा त्)।

३० ना गा र्जु न आह (म. का. १५. ७. ८)—

अयमेवाद्वयवादो यः समग्रे ताथागते शास्त्रे दृश्यते। अत एव च तच्छास्ता स भगवांस्तथागतो ऽद्वयवादी त्य म र को श पाठकोऽप्यवगच्छति।[1]

---

"कात्यानाववादे चास्ती[ति]नास्तीति चोभयं।
प्रतिषिद्धं भगवता भावाभावविरोधिना॥
अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः। ५
भावानां ते न पश्यन्ति द्रष्टव्योपशमं शिवं॥" इति।

"सम्मा दिट्ठि सम्मा दिट्ठीति भन्ते वुच्चति। कित्तावता नु खो भन्ते सम्मा दिट्ठि होतीति। द्वयनिस्सितो ख्वायं कच्चायन लोको येभुय्येन अत्थितं चेव नत्थितं च।० लोकसमुदयं खो कच्चायन यथाभूतं सम्मप्पञ्ञाय पस्सतो या लोके नत्थिता सा न होति। लोकनिरोधं खो कच्चायन यथाभूतं सम्मप्पञ्ञाय पस्सतो १० या लोके अत्थिता सा न होति।० सब्बं अत्थीति खो कच्चायन अयं एको अन्तो। सब्बं नत्थीति अयं दुतियो अन्तो। एते ते कच्चायन उभो अन्ते अनुपगम्म मज्झेन तथागतो धम्मं देसेति।" म नि. २. १७।

"नित्यमिति काश्यप अयमेकोऽन्तः। अनित्यमिति काश्यप अयं द्वितीयोऽन्तः। यदनयोर्द्वयोर्नित्यानित्ययोर्मध्यं तदरूपनिदर्शनं।० आत्मेति काश्यप १५ अयमेकोऽन्तः। नैरात्म्यमिति द्वितीयोऽन्तः। यदात्मनैरात्म्ययोर्मध्यं तत्।० संक्लेश इति काश्यप अयमेकोऽन्तः। व्यवदानमित्ययं काश्यप द्वितीयोऽन्तः। योऽस्यान्तद्वयस्यानुपगमो ( मूले त्वत्र अनुगम इति पाठः। न पुनरेष पाठो युक्तो न च सम्मतो भोटपाठस्य ) ऽनुदाहारोऽप्रव्याहार इयमुच्यते काश्यप मध्यमा प्रतिपद् धर्माणां भूतप्रत्यवेक्षा।" का. प. पृ. ८६-९८। २०

किञ्च

"अस्तीति नास्तीति विवाद एष
शुद्धी अशुद्धीति अयं विवादः।
विवादप्राप्त्या न दुखं प्रशाम्यते
अविवादप्राप्त्या च दुखं निरुध्यते॥" २५

स. रा. सू. यथा लभ्यते ( म. वृ, पृ. १३९, १७८ )।

अन्यच्च

"भावाभावदर्शनद्वयप्रसङ्गो यावत्तावत्संसार इत्यवेत्य मुमुक्षुभिरेतद्दर्शनद्वयनिरासेन सद्भिर्मध्यमा प्रतिपद्भावनीया।" म. वृ., पृ. २७६।

द्रष्टव्यं चेह समग्रं पञ्चदशं प्रकरणं म ध्य म क वृ त्तेः। ३०

१। अमर को. १. १. १४; म. व्यु २३; दि. अ., पृ. ९९ ("बुद्धानां भगवतां महाकारुणिकानामद्वयवादिनाम्")।

शिष्याश्च तदीयास्तत्सम्बन्धादद्वयवादिनः।[१] समासेन पुनरस्मिन्प्रकरणे (४. ४) अद्वया इत्युक्ताः।[२]

उद्दिष्टाः केचन वादिनो (४. ३) ये भूतस्याभूतस्य वा जातिमिच्छन्ति। ते किल मन्यन्ते प्रपञ्चोऽयमुत्पद्यते। विद्यतेऽस्य कारणं
५ यस्यायं कार्य इति। एते (४. ४) त्वद्वयास्ताथागता एव ये सर्वथैवोत्पत्तिमपलपन्ति। अत एव मूलमध्यमककारिकायाम् (म. वृ. पृ. ११) आचार्य नागार्जुनस्य वागारम्भः

---

केचित्त्वद्वयवादीत्यत्राद्वयशब्दस्याद्वैतमर्थमाहुः। यथा तत्रैवामरकोशे (१. १. १४) "अद्वयमद्वैतं वदन्त्यवश्य"मिति भानुजिदीक्षितः। "अद्वयं
१० विज्ञानाद्वैतं वदत्यवश्य"मिति क्षीरस्वामी। तदेतन्न युक्तम्। न ह्यद्वयाद्वैतशब्दावभिन्नार्थौ। अद्वयशब्दो विवृतो विस्तरशः। अद्वैतशब्दस्त्वभेदं बोधयति। यथा वेदान्तेऽद्वैतपदेन जीवब्रह्मणोरभेदः प्रतीयते। क्वचिच्चाद्वयवाद्यद्वैतवादिनावभिन्नाविति दृश्यते। एतदपि प्रामादिकम्। यथा दिव्यावदाने (पृ.९९) शब्दसूचौ। अत्राद्वयवादी प्रमादादद्वैतवादीति पठितः। भोटपाठे
१५ चीनपाठे च अद्वयवादीत्येव बुद्धनामेति सुस्पष्टम्।

१। "तस्मादद्वयवादिनां मध्यमकानां कुतो मिथ्यादर्शन"मिति म. वृ., पृ. ३३१। अन्यदपि तत्रैव (पृ. ३२९) "उच्यते। न वयं नास्तिकाः। [अस्तित्व]नास्तित्वद्वयवादनिरासेन तु वयं निर्वाणपुरगामिनमद्वयपथं विद्योतयाम" इति।

२० २। केचित्पुनरत्राद्वया इति पठितव्ये द्वया इति पठन्ति। तदर्थश्च द्वैतिन इति ब्रुवन्ति। अस्मत्प्रदर्शितस्तु पाठस्त्रिषु संस्करणेषु दृश्यते यथा श्रीमहेशचन्द्रपालस्य (कलिकाता, १८०६ श. व.) श्रीदुर्गाचरणसांख्यवेदान्ततीर्थस्य (कलिकाता, १३३१ वङ्ग. व.) गीतायन्त्रस्य च (१९९३ वि. सं.)। एष च पाठो मूलभाष्ययोरुभयोः। आनन्दाश्रमसंस्करणस्य (१८२२
२५ श. व.) क-पुस्तकभाष्येऽप्ययं लभ्यते। युक्तिश्चैनमुपोद्बलयति। तथा हि। पूर्वकारिकायां (३) द्विविधा वादिन उद्दिष्टा ये जातिमिच्छन्ति। तेषु केचिद्भूतस्यापरे त्वभूतस्य जातिं वदन्तीत्यवान्तरभेदः। जातौ तु न ते मनागप्यन्योन्यं भिद्यन्ते। उभयैरपि जातेरभ्युपगमात्। अस्यां तु चतुर्थ्यां कारिकायामन्य एव केचन वादिनो निर्दिश्यन्ते। नैते भूतस्याभूतस्य वा जातिमिच्छन्ति।
३० अपि तु सर्वथाप्यजातिमेव। न चामी द्वैतिनः। ते तु शङ्करनयेन तृतीयकारिकायामेवोक्ताः। अतस्तृतीयचतुर्थकारिकयोरुक्ता वादिनो मिथो भिन्नाः। पाठश्चाद्वया एवेति।

"अनिरोधमनुत्पाद"मित्यादि।[1] अयं चानुत्पादः प्रतिपादितस्तेन परेण च तत्र चान्यत्र च विस्तरशः। उत्तरो ग्रन्थः सुगमो भविष्यतीति दिङ्मात्रमिहोदाह्रियते। आह चन्द्रकीर्तिः (म. वृ., पृ. १२) "उत्पादो हि परैः परिकल्प्यमानः स्वतो वा परिकल्प्येत परत उभयतोऽहेतुतो वा परिकल्प्येत। सर्वथा च नोपपद्यत इति निश्चित्याह (म. का. १. १)—

"न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥"

इति विस्तरः। निराकृतोऽयमुत्पादो नागार्जुनेन पुनः पुनः। यथा

"न स्वतो जायते भावः परतो नैव जायते।
न स्वतः परतश्चैव जायते जायते कुतः॥" इति।

म. का. २१. १३। द्र॰ २३. २०।

वक्ष्यति चाचार्योऽप्यस्माकम् (४. २२)—

"स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते।" इति।

द्र॰ सह वृत्त्या म. का. १. १३; च. श. १५।

उक्तं च बोधिचर्यावतारे (६. १०)—

"एवं च सर्वधर्माणामुत्पत्तिर्नावसीयते।" इति।

इयमस्मदाचार्यस्य चतुर्थी कारिका (४. ४) वक्ष्यमाणेनेदृशेन वचनेन नागार्जुनस्य सम्पर्कं स्पष्टं प्रकटयति—

"नैवासतो नैव सतः प्रत्ययोऽर्थस्य युज्यते।
असतः प्रत्ययः कस्य सतश्च प्रत्ययेन किम्॥" इति।[2]

म. का. १. ६।

"अभूतं नैव जायत" इति प्रकृतकारिकायाम्। "नाभूतो नाम जायत" इति च चतुःशतके (१५. २०)। तदेतद्द्वयमन्योन्यमुपमेयम्। किञ्च चिन्तनीयमत्र यदुक्तं चतुःशतकवृत्तौ

---

१। अत्राह चन्द्रकीर्तिः (म. वृ., पृ. ९२) "अत्र च निरोधस्य पूर्वं प्रतिषेध उत्पादनिरोधयोः पौर्वापर्यावस्थायाः सिद्ध्यभावं द्योतयितुम्" इति। आचार्येणाप्यस्मदीयेन "न निरोधो न चोत्पत्ति"रित्यादावात्मनः सुप्रसिद्धे श्लोके (३. ३२) स एव क्रमो दर्शितः।

२। द्र॰ म. अ ६. ९८; म. वृ., पृ ८२-८३।

( च. श. ३६६=१५. १६ ) "अत्राह। जातो न जायते। अजातोऽपि न जायते" इति।'

प्रकृतकारिकायाः पूर्वार्धः शङ्करेणैवं व्याख्यातः—"भूतं विद्यमानं वस्तु न जायते विद्यमानत्वादेव।' तथाभूतमविद्यमानमविद्यमानत्वान्नैव जायते शशविषाणवत्।" स्मरणीयमत्र बुद्धपालितवचनं ( म. वृ., पृ. १४ ) 'न हि स्वात्मना विद्यमानानां पदार्थानां पुनरुत्पादे प्रयोजनमस्ति। अथ सन्नपि जायेत न कदाचिन्न जायेत" इति॥

अथाद्वयैः ख्याप्यमानामजातिमनुमोदमान आचार्यः सह तैरविवादमवगमयन्नाह—

**ख्याप्यमानामजातिं तैरनुमोदामहे वयम्।**
**विवदामो न तैः सार्धमविवादं निबोधत॥५॥**

तैरद्वयैरद्वयवादिभिस्ताथागतैः **ख्याप्यमानां** कीर्त्यमाना**मजाति**मनुत्पादं **वयं** वेदान्तिनो**ऽनुमोदामहे** मुदानुमन्यामहे। न वयं **तैः सार्ध**मत्र **विवदामो** विवादं कुर्मः। **अविवादं** विवादाभावं च यूयं भोः शिष्या **निबोधता**वगच्छत। साङ्ख्यवैशेषिकादिष्विव वेदान्तेऽप्यादौ जातिवाद एवाभ्युपगतः। "यतो वा इमानि भूतानि जातानी"त्यादिश्रुतेः ( तै. उ. ३. १. १ )। विवृतं चेदं प्राक्। यन्मूलकं च "जन्माद्यस्य यत" इत्युत्तरमीमांसायां (ब्र. सू. १. १ १) पारमर्षं सूत्रम्। पश्चात्तु शारीरकभाष्यकर्तुः शङ्करभगवतो नये सोऽपह्नुतः पारमार्थिकसत्यापेक्षया।

अथ सत्यपि श्रुतिशिरोवाक्येष्वतिस्पष्टे जातिवादे किं कारणं भवन्तोऽद्वयानामजातिवादमनुमोदन्ते न च तैः सार्धं विवदन्त इति स्वविनेयानामाशङ्कामपनिनीषुराचार्यो युक्तिपरम्पराप्रदर्शनायोपक्रमते—

---

१। नास्य संस्कृतमूलं लभ्यते। छायेयं वृत्तिकृत्कृता भोटपाठस्य। यथा च जायमानं नाम न जायते तथा प्रकाशितमार्यदेवेन तत्रैव—

'जायमानार्धजातत्वाज्जायमानो न जायते।
अथवा जायमानत्वं सर्वस्यैव प्रसज्यते॥" इति।

इयं च कारिका मध्यमकवृत्तौ धृता चन्द्रकीर्तिना ( पृ. ८० )।

**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥६॥**[1]

कृतवृत्तिरियं कारिका पुरस्तात् ( ३. २० ) । इहापि स्तोकं विव्रियते । तत्र तावदादौ ( ४. ३ ) द्विविधा वादिन उद्दिष्टाः । तेषामेके भूतस्यापरे त्वभूतस्य जातिमिच्छन्ति । तत्र सत्यप्यवान्तरभेदे- ऽजातमेव जायत इत्यत्र न तेषामुभयेषां भेदः । यत्प्रागेव जातं न तत्पुनर्जायत इति प्रत्यक्षं नः सर्वेषाम् । श्रुतिरप्याह कण्ठतो ( बृ. उ. ३. ९. २८ ) "जात एव न जायत" इति । अतो जातस्य जातिर्न शक्या कल्पयितुम् । एतदेवोक्तम् "अजातस्यैव धर्मस्य ( भावस्य[2] ) जातिमिच्छन्ति वादिन" इति । किं तर्हि जातिर्नामाजातस्यैव धर्मस्येति । नेत्याह । किं कारणम् । यदजातं तदजातत्वादेवामृतं नित्यम् । यत्पुनर्जातं तन्मर्त्यमनित्यमिति हि स्थितिः । एवं चाजातस्य जातिमिच्छता भवता तस्यानित्यत्वमप्यवश्यमभ्युपगन्तव्यम् । तथा च सति कथं नामाजातो धर्मोऽनित्यो भविष्यति । स जनिष्यत इति भावः । अतो नाजातस्य जातिर्युज्यते ॥

अवान्तरयुक्तिमाह—

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं भवेत् ।**
**प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥**[3]

**अमृतं** नित्यं **मर्त्यम**नित्यं **न** भवति । तथा **मर्त्य**मनित्यमपि **अमृतं** नित्यं **न** भवति । कुतः । यतः **प्रकृतेः** स्वभावस्य **अन्यथाभावः** प्रकारान्तरेण भवनं परिवृत्तिः **कथञ्चित्** केनापि प्रकारेण न **भविष्यति ।** न जातु प्रकृतिः परिवर्तते । अथ परिवर्तते प्रकृतिरेव सा न भवति । एवं चाजातमेव चेज्जायते न तदजातं

---

१ । एतदाद्यास्तिस्रः कारिकाः ( ४. ६—८ ) प्रकरणान्तराद् ( ३. २०- २२ ) आकृष्य पुनरिह पठिताः ( द्र: ३. २० वृत्तिः ) । अतः परप्रकरणान्तर्गत- त्वादिहैता यथानुकूलं कथञ्चिद्व्याख्येयाः ।

२ । ३. २० ।

३ । अयं द्वितीयार्धोऽन्यत्राप्यावृत्तः ( ३. २१ ; ४. २९ ) ।

प्रकृत्या। कथं च नाम यत्प्रकृत्यैवाजातं च नित्यं च पुनस्तज्जातं चानित्यं च भवेत्। अत्र प्रकृतकारिकाया उत्तरार्धो ना गा र्जु न-स्येयं पङ्क्तिरर्थतश्च शब्दतश्च प्रायोऽभिन्नैव—

"प्रकृतेरन्यथाभावो न हि जातूपपद्यते।"[1] म. का. १५. ८।

न कथञ्चित्प्रकृतेरन्यथाभावो भवतीति स्थितम्। अथ कश्चिद्भावः प्रकृत्याजातः। स तत एव नित्यो भवति। स चेज्जायते तेनानित्यो भवति। तथा च तस्य प्रकृतेरन्यथाभावो भवति। यत्खलु प्रकृत्याजातं नित्यं वा नूनं तेन नियतं तथैव भवितव्यं नान्यथा। अथ ब्रवीषि अजातं जायते। नित्यं चानित्यं भवतीति। व्यक्तमत्र प्रकृतेरन्यथाभावः। न चायमुपपद्यत इत्याह—

**स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम्।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः॥८॥**[2]

**यस्य** वादिनो मते **स्वभावेन** प्रकृत्यामृतो नित्यो **धर्मो** भावो **मर्त्यता**मनित्यतां गच्छति अनित्यो भवति जायत इति भावः। **तस्य** वादिनो मते **कृतकेन** कृतकत्वेन[3] हेतुना **अमृतो** नित्यो धर्मः

---

१। इदं च शक्यमुदाहर्तुं तत एव (म. का.)—
"कस्य स्यादन्यथाभावः स्वभावश्चेन्न विद्यते।
कस्य स्यादन्यथाभावः स्वभावो यदि विद्यते॥" १३. ४।
"प्रकृतौ कस्य चासत्यामन्यथात्वं भविष्यति।
प्रकृतौ कस्य च सत्यामन्यथात्वं भविष्यति॥" १५. ९।
"कः स्वभावं प्रहास्यति।" २३. २४।
वक्ष्यति चास्माक मा चा र्यः (४. ९) "स्वभावं न जहाति या।" आह च टीकाकृ च न्द्र की र्ति रा र्य दे व स्य च तुः श त के (१७९ = ८. ४) "स्वरूपस्यान्यथाभावासम्भवाद्" इति।

२। ३. २२।

३। अत्र कृतकशब्देन कृतकत्वमभिप्रेतं यथा "हेतोः फलस्य चानादि"-रित्यत्र (४. १४) अनादिशब्दोऽनादित्वं बोधयति। आ न न्द गि रि श्च (३. २२) "कृ त के ने ति। कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वा"दिति वक्तुंस्तत्समर्थयते। सा य णो ऽपि (तै. आ. ७. ६) मनसस्पतिशब्दं मनसस्पतित्वरूपेण व्याचष्टे।

**कथं** निश्चलः स्थिरो नित्यः **स्थास्यति** भविष्यतीति भावः। न स्थास्यति। यत्कृतकं तदनित्यमिति हि स्थितिः। नित्यश्चेद्भावो जायते स तेन कृतकः कृत्रिमो भवेत्। कृतकश्चानित्यः। अत्रोक्तं नागार्जुनेन ( म. का १५. १-२ )—

"न सम्भवः स्वभावस्य युक्तः प्रत्ययहेतुभिः। ५
हेतुप्रत्ययसम्भूतः स्वभावः कृतको भवेत्॥
स्वभावः कृतको नाम भविष्यति पुनः कथं।
अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च॥"[1] इति।

"प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यती"त्युक्तम् ( ४. ७ )। तत्र केयं प्रकृतिर्नामेति विविच्यते— १०

**सांसिद्धिकी स्वाभाविकी सहजाप्यकृता च या**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥९॥**[2]

**सा प्रकृतिरिति विज्ञेया या सांसिद्धिकी** संसिद्धिः सहनिष्पत्तिः सहोत्पादस्तत्र भवा सांसिद्धिकी। यथा लौकिके व्यवहारे वह्नेरुष्णता। इयं ह्युष्णता सहैव वह्निना निष्पद्यते। न पूर्वं १५ न पश्चात्। तस्मादियं सांसिद्धिकी।[3] **स्वाभाविकी** स्वभावाद् उत्पन्ना। **सहजा** सह जायत इति कृत्वा। वह्निश्चोष्णता च युगपदुत्पद्येते। अपि **च अकृता** न केनचित्कृता अकृत्रिमा हेतुप्रत्ययनिरपेक्षेत्यर्थः।[4] किञ्च या **स्वभावं** स्वस्य भावमात्मीयं रूपं

---

१। अनयोः कारिकयोः प्रकृतायां च कारिकायां कृतकशब्दप्रयोगो द्रष्टव्यः। २०

२। उप: "कः स्वभावं प्रहास्यति" इति। म. का. २३. २४।

३। सा. का. ४३। यथा व्याख्यातं वा च स्प त्यादिभिः। द्रष्टव्यौ चात्र माठरगौडपादौ। "तत्र सांसिद्धिकी यथा भगवतः कपिलस्यादिसर्गे उत्पद्यमानस्य चत्वारो भावाः सहोत्पन्नाः।" भाष्यकारस्त्वाह "सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी। यथा योगिनामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः २५ सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति।"

४। अव्यवहितोत्तरपत्रे प्रथमा टीप्पणी द्रष्टव्या।

**न जहाति** त्यजति सा प्रकृतिः। यथा लोके यावदुष्णता तावदग्नि-र्यावदग्निस्तावदुष्णता। अस्त्यग्निर्नोष्णतेति न जातु सम्भवति॥[1]

यथा धर्माणां न जातिरेवं तेषां न क्षयो नापिवा नाश इत्याह—

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥१०॥**

**सर्वे धर्माः** पदार्था **जरामरणनिर्मुक्ता** जरा जीर्णता क्षय इत्यर्थः। मरणं निवृत्तिर्नाश इत्यर्थः। ताभ्यां निर्मुक्ता वर्जिताः। यथा भावा नोत्पद्यन्ते तथा ते न जीर्यन्ति न च नश्यन्ति। ये पुनस्तेषां **जरां** च **मरणं** चेच्छन्ति। जीर्यन्ति नश्यन्ति च भावा इति मन्यन्ते ते **तन्मनीषया** तच्चिन्तया जरामरणचिन्तया **च्यवन्ते** संसरन्ति भ्रश्यन्ति वा तत्त्वतः। तदेतत्प्रतिपादितं सविस्तरं नागार्जुनेन मध्यमककारिकाया मेकादशे प्रकरणे। दिङ्मात्रं त्विह दृश्यते—

---

[1] उष्णता नामाग्नेः स्वभाव इति प्रसिद्धिर्लोके। मध्यमकनये तु नागार्जुनमनुसरंश्चन्द्रकीर्तिराह (म वृ., पृ. २६२—९) "किमिदानीं तत्स्वभावस्य लक्षणं कश्चासौ स्वभाव इति वक्तव्यम्। उच्यते। 'अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च' (म. का. १९. २) इति। इह स्वो भावः स्वभाव इति यस्य पदार्थस्य यदात्मीयं रूपं तत्तस्य स्वभाव इति व्यपदिश्यते। किं च कस्यात्मीयं। यद्यस्याकृत्रिमम्। यत्तु कृत्रिमं न तत्तस्यात्मीयं। तद्यथापामौष्ण्य"मिति विस्तरः। किञ्च स एव स्वभावो यः परनिरपेक्षस्तत एव चाकृत्रिमः। अतो नायं पूर्वमभूत्वा भवति। तस्मादनुत्पाद एव वह्नेः स्वभावो न पुनरौष्ण्यं यत एतत्परापेक्षम्। हेतुं च प्रत्ययं चापेक्ष्येद-मुत्पद्यते। पूर्वमभूत्वा च भवति। तदुक्तं चन्द्रकीर्तिना (म. वृ., पृ. २६३) "यतश्चैवं कृत्रिमस्य परसापेक्षस्य च स्वभावत्वं नेष्टमत एवौष्ण्यमग्नेर्हेतुप्रत्ययप्रतिबद्धत्वात्पूर्वमभूत्वा पश्चादुत्पादेन कृतकत्वाच्च न स्वभाव" इति। अन्यच्च (तत्रैव पृ. २६९)—"सर्वदानुत्पाद एव ह्यग्न्यादीनां परनिरपेक्षत्वा-दकृत्रिमत्वात् स्वभाव इत्युच्यत" इति।

"पूर्वं जातिर्यदि भवेज्जरामरणमुत्तरं ।
निर्जरामरणा जातिर्भवेज्जायेत चामृतः ॥
पश्चाज्जातिर्यदि भवेज्जरामरणमादितः ।
अहेतुकमजातस्य स्याज्जरामरणं कथं ॥" म. का. ११. ३-४ ।

किञ्च ( तत्रैव ११. ८ ) ५

[1]"पूर्वा न विद्यते कोटिः संसारस्य न केवलं ।
सर्वेषामपि भावानां पूर्वा कोटी न विद्यते ॥" इति ।

"कोटिर्भागो देश इति पर्यायाः । पूर्वा कोटिः पूर्वो देशः" जातिरित्यभिप्रायः । विस्तरं बुभुत्सुभिः सह म ध्य म क वृ त्त्या समग्रमेवेदं प्रकरणमवेक्षणीयम् ॥[1] १०

पुनरपि जातिवाद आक्षिप्य निराक्रियते । उद्दिष्टाः पुरस्तात् ( ४. ३ ) केचित्सत्कार्यवादिनः । तेषु वेदान्तिनामयमभ्युपगमः । आसीत्सदेवैकमद्वितीयम् । ततो वा इमानि भूतान्यजायन्त । न पुनस्तत्कुतोऽप्यजायत इत्यजं तत् । अत एव नित्यम् । किञ्च सर्वाणि भूतानि ततो जायन्त इति तत्कारणम् । भूतानि तु कार्याणि । १५ न चैतानि ततोऽन्यानि । एकस्यैव तस्य कारणस्य सद्भावात् । सोऽयमभ्युगमो भवतां नोपपद्यत इत्याह—

**कारणं यस्य वै कार्यं कारणं तस्य जायते ।**
**जायमानं कथमजं भिन्नं नित्यं कथं च तत् ॥११॥**

**यस्य** वादिनो मते कारणं ब्रह्म **वै** एव कार्यं जगद्रूपम्[2] **तस्य** २० वादिनो मते **तत्कारणं** ब्रह्मैव **जायत** इति प्रसज्यते । किञ्च कारणमेव चेत्कार्यं ननु तर्हि यदिदं कार्यं जायत इत्युच्यते तत्कारणमेव जायत इत्यापद्यते । अस्तु । को दोषः । अयं दोषः । यदि मन्यसे कारणं **जायमानं** जातं भवतीति **कथं तदजं** भवेत् । अजं च जायते चेति विप्रतिषिद्धम् । अयमपरो दोषः । अजं कारणं चेज्जायते ननु २५ यत्कऽयमजं कारणं जायमानात्कारणा**द्भिन्नं** भवति । कथं चेदं भवेत् ।

---

१ । इहास्मत्कारिकायां जरामरणेतिवाक्प्रयोगः स्फुटमेव ना गा र्जु न-कारिकां स्मारयति ।

२ । शा री र क भा ष्य म् ( ब्र. सू. ) २. १. १४—२० ।

न खल्वजं जायेत। अयं चान्यो दोषः। यद्भवान्नित्यं मन्यते तच्चेत् कारणं जायते कथं नु खलु तन्नित्यं भवेत्। जातं च नित्यं चेति विप्रतिषिद्धम्। अत एव च नैतदुपपद्यते। किञ्च नित्यमिह कूटस्थ[1]नित्यमभिप्रेतम्। कूटस्थनित्यं च भगवतः पतञ्जलेर्वचनात् पस्पशायां सिद्धशब्दार्थनिरूपण एवमवसीयते— "ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति।"[2]

---

१। "कूटमयोघनस्तद्वत्तिष्ठतीति कूटस्थम्" इति पस्पशायां सिद्धशब्दार्थनिरूपणे प्रदीपोद्द्योतकारः।

वाचस्पतिश्चाह भामत्याम् (ब्र. सू. २. १. १४) "कूटस्थनित्यता हि सदातनी स्वभावादप्रच्युति"रिति।

२। अस्यामुत्तरस्यां च कारिकायां साङ्ख्यपक्ष आक्षिप्य निराक्रियत इति मन्वानो भाष्यकार उत्तरार्धमेवं व्याचष्टे "महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैः। विप्रतिषिद्धं चेदं जायतेऽजं चेति। नित्यं च तैरुच्यते प्रधानम्। भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवेदित्यर्थः। नहि सावयवं घटादि एकदेशस्फुटनधर्मि नित्यं दृष्टं लोक इत्यर्थः। विदीर्णं च स्यादेकदेशेनाजं नित्यं चेति। एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्राय" इति। न पुनरिह कश्चन साङ्ख्यपक्षविरोधः। साङ्ख्यमते हि प्रधानमजमपि महदाद्याकारेण परिणमते। सोऽयं परिणाम एव जातिः। विकाररूपेऽपि परिणामे तत्प्रधानं नित्यमेव। इदं तु नित्यत्वं न कूटस्थनित्यत्वमपि तु परिणामिनित्यत्वम्। तदेतत्प्रथितं तत्तन्त्रे। एतदेवाभिप्रेत्य तत्रैवोक्तं पतञ्जलिना "अथवा नेदमेव नित्यलक्षणं ध्रुवं कूटस्थं नित्यमिति। तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते। एवं हि दृश्यते लोके मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति। पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते। घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते। तथा सुवर्णं कयाचिदाकृत्या युक्तः पिण्डो भवति। पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते। रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते। कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते। पुनरावृत्तः सुवर्णपिण्डः। पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति। द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवावशिष्यत" इति। एतदेवोक्तमार्हतैः पर्याया भिद्यन्ते न द्रव्यमिति। "उत्पादव्ययध्रौव्ययुक्तं सद्" इति (त. सू. ५. २९) हि ते वदन्ति। इतोऽपि विस्तर उत्तरकारिकायाश्चतुर्थटीप्पण्यां (४. १२) द्रष्टव्यः।

जायमानं चाजं चेतीह प्रदर्शितं दोषं परिजिहीर्षुराह। अनन्यत्वं किल कार्यकारणयोरस्मन्मते। ततश्च कारणं चेदजं कार्येणाप्यवश्यमजेन भवितव्यमिति किमत्र वक्तव्यमिति। नेदमपि युक्तं वक्तुमिति प्रत्युत्तरयति—

**कारणाद्यद[1]नन्यत्वमतः कार्यमजं यदि।**
**जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम्॥१२॥** ५

**कारणात्**कार्यस्य **यद्** यस्माद् **अनन्यत्वम**भेदः **अतो**ऽस्माद्**यदि कार्यमजं** मन्यसे। नेदमुपपद्यते। कार्यं चाजं चेति विप्रतिषिद्धम्। न हि कश्चिदनुन्मत्तो जातं पुत्रमजं ब्रूयात्। ध्रुवम्चोपादेय-वचनो भवेत्। अपरश्च दोषः। भवान्खलु कार्यकारणयोरनन्यत्व-मभ्युपैति। एवमेव **चेज्जायमानात्कार्या**दनन्येन कारणेनापि १० जायमानेन भवितव्यम्। तादृशं च **ते कारणं** ब्रह्म **कथं ध्रुवं**[2] नित्यं कूटस्थनित्यमिति भावः। जायमानं च ध्रुवं चेति विप्रतिषिद्धम्।

---

१। अत्र यद्यपि प्रथमे पादे बहुषु पुस्तकेषु यदित्यत्र यदीति पाठो दृश्यते तथापि कस्मिंश्चिदस्मदीये पुस्तके (विश्वभारत्यां ग्रन्थाक्षरलिखिते) यदिति दर्शनाद् १५ द्वितीये च पादे यदीति प्रयोगेण पुनरस्य प्रयोजनाभावाच्च यदित्येव युक्तं पठितुम्।

२। आचार्यप्रवृत्तिर्ज्ञापयति नित्यपर्यायवचनो ध्रुवशब्दो यदयं पूर्वकारिकायां (४. ११) नित्यशब्दं प्रयुङ्क्ते। सुप्रसिद्धं चैतद् ध्रुवनित्यशब्दौ पर्यायाविति। यथा पस्पशायां "ध्रुवं कूटस्थं॰ नित्य"मिति प्राक्प्रदर्शितम् (४. ११)। तथाप्यस्त्यनयोः कश्चिद्विशेषः। नित्यं नाम कूटस्थनित्यम्। ध्रुवं तु स्थिरम्। २० यथाह बुद्धघोषः (स नि. ४. ३७०) "स्थिरार्थेन ध्रुव"मिति ("थिरट्ठेन धुव"मिति पालिः)। यथा सुवर्णं तत्तदाकारोपमर्देनोत्तरोत्तरं रुचककटक-कुण्डलाद्याकृतिमापद्यमानमपि तदेव सुवर्णं विद्यत इति तत्स्थिरम्। सत्यपि विकारे यस्मिंस्तत्त्वं न विहन्यते तत्स्थिरं तदेव च ध्रुवम्। आर्हता अप्येवमेव मन्यन्त इत्युक्तमधस्तात् (४. ११)। द्रः—त. सू. ५. २९; त. रा. वा. २५ ५. २९ ("ध्रुवं स्थिरम्"); त. दी. (प्र), २. ३ ("ध्रौव्यमवस्थितिः"); त. दी. (पञ्च) १० ("पूर्वोत्तरभावोत्पादयोरपि स्वजातेरपरित्यागो ध्रौव्यम्"); स. त., १२, पृ. ४१० ("ध्रौव्यं स्थितिः")। इदं चावगन्तव्यं प्राचीना-सूपनिषत्सु आत्मा नित्य इत्येव दृश्यते न पुनर्ध्रुव इति। चिन्तितश्चायमर्थो-ऽवतरणिकायामपि। ३०

अथवोत्तरार्धस्यायमर्थः। कारणमेव चेत्कार्याकारेण जायते कथं नु खलु तत्कारणं ध्रुवं भवेत्। जातं च ध्रुवं चेति नोपपद्यते॥[१]

अपरां युक्तिमाह—

**अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै।**
**५ जाताच्च जायमानस्य नव्यवस्था प्रसज्यते ॥१३॥**

यस्य वादिनो मते **अजाद् वै** एव **जायते तस्य** मते **दृष्टान्तो नास्ति वै।** न कश्चित्स दृष्टान्तो येन सोऽर्थः समर्थ्यते। अथैतद्दोषपरिजिहीर्षया जाताज्जायत इत्यभ्युपगच्छसि। न तदप्युपपद्यते। यतो **जाताच्च जायमानस्य** वस्तुनो
१० **नव्यवस्था** अनवस्था प्रसज्यते। एकस्माज्जाताद्यज्जायते तस्मादन्यत् तस्मादन्यदित्यनवस्था। अनवस्थया च न वस्तुसिद्धिः।

एतच्च सर्वं स्पष्टं सौगतशास्त्रेषु। तथा ह्याह बुद्धपालितः (म. वृ., पृ. १४) "न हि स्वात्मना विद्यमानानां पदार्थानां पुनरुत्पादे प्रयोजनमस्ति। अथ सन्नपि जायेत न कदाचिन्न जायेतेति।"
१५ चन्द्रकीर्तिश्च (म. वृ., पृ. १५) "न च विद्यमानस्य पुनरुत्पत्तौ प्रयोजनं पश्यामः। अनवस्थां च पश्यामः। न च त्वयोत्पन्नस्य पुनरुत्पाद इष्यतेऽन[वस्था] चाप्यनिष्टेति।" अभिधर्मकोशव्याख्यायां (म. वृ., पृ. १४, टिप्पणी ३) "उत्पन्नस्य पुनरुत्पत्तौ कल्प्यमानायामनवस्थाप्रसङ्ग" इति। मध्यमकावतारेऽपि
२० (६. ८; म. वृ., पृ. १३)—

---

१। अत्राह आनन्दगिरिः। "कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं किं वा कार्याभिन्नं कारण"मिति। इदमनुसृत्य कारिकेयमेवं व्याख्यायेत। यथा। यदि विज्ञायेत कारणाभिन्नं कार्यम्। तर्हि कारणेऽजे सति कार्येणाप्यजेन भवितव्यम्। ततश्च कार्यं चाजं चेति विप्रतिषिद्धम्। अन्यच्च। कार्यं चेज्जायते ननु कारणमपि जायेत। ततश्च न कारणं न जातम्। एवं सति जातं च नित्यं
२५ चेति विप्रतिषिद्धम्। अथ कार्याभिन्नं कारणम्। तर्हि कारणमेव जायते न कार्यम्। कार्यं च न जातं चेति विप्रतिषिद्धम्। किञ्च। कारणं चेज्जायमाना-त्कार्यादभिन्नं तर्हि तत्कारणं जायत इति वक्तव्यम्। ततश्च तज्जातं च नित्यं चेति विप्रतिषिद्धमिति।

"तस्माद्धि तस्य भवने न गुणोऽस्ति; कश्चि-
ज्ज्ञातस्य जन्म पुनरेव च नैव युक्तं॥" इति।

अष्टसाहस्रिकाप्रज्ञापारमितायाम् (शि. स., पृ. २६२)-
"किं पुनरायुष्मन्सुभूते उत्पन्नो धर्म उत्पत्स्यत उतानुत्पन्नः। सुभूतिराह। नाहमायुष्मन् सारिपुत्र उत्पन्नस्य धर्मस्योत्पत्तिमिच्छामि। न चानुत्पन्नस्येति।" ५

आर्यदेवश्चाह चतुःशतके (२६०=६. १०)

"सम्भवः क्रियते यस्य प्राक्सोऽस्तीति न युज्यते।
सतो यदि भवेज्जन्म जातस्यापि भवेद्भवः॥" इति।

उत्पादे हि परैरभ्युपगम्यमाने तत्र हेतुफलभावोऽप्यभ्युपगन्तव्यः। वक्तव्यं च कतरस्तयोरादिः। किं फलस्य हेतुरादिराहोस्विद्धेतोरादिः फलमिति। किमादौ हेतुस्ततस्तस्मात्फलमुतादौ फलं ततस्तस्माद्धेतुरिति। नोभयमपि सम्भवति। ततश्च न हेतुफलभावसिद्धिः। तदभावाच्च नोत्पाद इत्याह— १०

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च।
हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते॥१४॥ १५

**येषां** वादिनां मते **फलं** कार्यं **हेतोः** कारण**स्यादिः** पूर्ववर्तीति भावः। फलस्य कार्यस्य **चादिर्हेतुः**। तैर्वादिभिः **हेतोः फलस्य च अनादिरनादित्वं**[1] **कथमुपवर्ण्यते** व्याख्यायते। नेदं युज्यत इति भावः। बीजाङ्कुरस्थले (४. २०) वादिभिस्तयोरनादित्वमुपवर्ण्यते। तथाहि। किमादौ बीजं पश्चादङ्कुरः। आहोस्विदादावङ्कुरः पश्चाद्बीजम्। नोभयमपीदमुपपद्यते। तथा हि। बीजमाश्रित्याङ्कुरः अङ्कुरं चाश्रित्य बीजमिति "इतरेतराश्रयायां सिद्धौ स्थितायां कस्येदानीं सिद्धौ सत्यां कस्य सिद्धिरस्तु" (म. वृ., पृ. १४१)। बीजादङ्कुरोऽङ्कुराद्बीजम्। पुनरपि बीजादङ्कुरोऽङ्कुराद्बीजमित्यनवस्था चैवं प्राप्नोति। तथाप्यनादिरयं हेतुफलभावः। फलवत्त्वाच्च प्रामाणिकीयमनवस्थेत्यभिप्रायो वादिनाम्। न पुनरयमुपपन्नः। तस्मादुत्पादवादिनो हेतुफलयोरनादित्वं वर्णयितुं नार्हन्ति॥ २० २५

१। यथाह भाष्यकारः। द्रः ४. ८ (तृतीयः पादः)। अथवा-नादिरित्यादेरभाव इत्यर्थः। ३०

अयमेवार्थः पुनर्विव्रियते—

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च।**
**तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा॥१५॥**

**येषां** वादिनां मते **हेतोरादिः फलं फलस्य चादिर्हेतु**र्नु वक्तव्यं **तेषां** मते **जन्मो**त्पादस्**तथा भवे**द्**यथा पुत्रा**त्**पितु**र्जन्म भवति। यदीदमभ्युपगम्यते फलाद्धेतुर्भवति हेतोश्च फलमिति। तदेदमप्यभ्युपगन्तव्यं यथा हेतुः फलमुत्पादयत्येवं फलमपि हेतुमुत्पादयतीति। तदेव चेदिष्यते नन्वेष्टव्यं यथा पितुः पुत्रो जायते तथा पुत्रादपि पिता जायत इति। न चेदं कश्चिदनुन्मत्तो मन्येत। तदुक्तं विग्रहव्यावर्तन्यां (५०) नागार्जुनेन—

"पित्रा चेदुत्पाद्यः पुत्रो यदि तेन चैव पुत्रेण।
उत्पाद्यः स यदि[1] पिता वद तत्रोत्पादयति कः कम्॥"[2]

शान्तिदेव आह बोधिचर्यावतारे (९. ११४)—

"पिता चेन्न विना पुत्रात्कुतः पुत्रस्य सम्भवः।
पुत्राभावे पिता नास्ति तथा सत्त्वं तयोर्द्वयोः॥" इति।

हेतुफलसम्बन्धचिन्तायां चिन्तनीयं समग्रमपि विंशं (२०) प्रकरणं मध्यमककारिकायाः। इयं चैका तत्रत्या कारिका (२०. २०)—

"एकत्वे फलहेत्वोः स्यादैक्यं जनकजन्ययोः।
पृथक्त्वे फलहेत्वोः स्यात्तुल्यो हेतुरहेतुना॥" इति।

इहोक्तं चन्द्रकीर्तिना (म. वृ., पृ. ४०४)—

"न चानयोरेकत्वं पितापुत्रयोश्चक्षुश्चक्षुर्विज्ञानयोर्बीजाङ्कुरयोश्चैक्यप्रसङ्गात्। अतो नोपपन्नो हेतुफलसम्बन्धः॥"

इतश्च नोपपन्नो हेतुफलसम्बन्धः। तथा हि। हेतुफलयोरवश्यं केनापि क्रमेण भवितव्यम्। स च क्रमो न कश्चनोपपद्यत इत्याह—

---

१। अत्रायं यदि शब्दो भोटपाठसम्मतोऽपि नापेक्ष्यत इति प्रतिभाति।

२। द्रः न्या. सू. (वात्स्यायनभाष्यम्), २. १. ४१, ४. १. ३९।

सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया।
युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत् ॥१६॥

**सम्भवे** उत्पत्तौ कस्यचिद्वस्तुनस्**त्वया हेतुफलयोः** कश्चित्क्रमः पौर्वापर्यरूप एषितव्योऽभिलषणीयोऽभ्युपगन्तव्य इति भावः। स च क्रमः कल्प्यमानस्त्रिधैव कल्प्येत पूर्वक्रमोऽपरक्रमः सहक्रमश्च। तत्र पूर्वक्रमः पूर्वं हेतुः पश्चात्फलम्। अपरक्रमः पूर्वं फलं पश्चाद्धेतुः। सहक्रमः हेतुफलयोर्यौगपद्यम्। नान्यतमोऽप्येषु सिध्यति। तत्रादाविह सहक्रमो निराक्रियते **युगपदिति**। यस्माद्धेतुफलयोर्**युगपत्सम्भवे** एकस्मिन्काले उत्पत्तौ **विषाणवत्** विषाणयोरिव सव्येतरयोर्गवादिशृङ्गयोरिव हेतुफलयोर्**असम्बन्धः** सम्बन्धाभावः। हेतुफलसम्बन्धाभावाच्च नोत्पादः कस्यचित्। तदेतदतिविस्पष्टं व्याख्यातं ना गा र्जु ने न विनेयैश्च तदीयैः (म. का. ११-१)—

"तस्मान्नात्रोपपद्यन्ते पूर्वापरसहक्रमाः।" इति।[1]

पुनरपि तत्रैव (म. का. ११. ५)—

"यत्र न प्रभवन्त्येते पूर्वापरसहक्रमाः।" इति।

अन्यच्चोक्तं तेनैव (म. का. २०. ७)—

"फलं सहैव सामग्र्या यदि प्रादुर्भवेदिति।
एककालौ प्रसज्येते जनको यश्च जायते॥" इति।

अत्राह च न्द्र की र्त्तिः (म. वृ., पृ. ३९५)—

"न चैककालयोः सव्येतरगोविषाणयोर्जन्यजनकत्वं दृष्टं वामदक्षिणकरयोश्चरणयोर्वा।"

---

१। च न्द्र की र्त्ति श्चैतदेवमवतारयति (म. वृ, पृ २२१)—"यत एवं संसारस्यादिमध्यावसानानि न सन्ति अत एव संसाराभावाज्जातिजरामरणादीनां पूर्वापरसहक्रमा अपि नैव सन्तीत्याह।"

एताश्च तिस्रः कारिकाः (म. का. ११. ३-५) द्रष्टव्याः—

"पूर्वं जातिर्यदि भवेज्जरामरणमुत्तरं।
निर्जरामरणा जातिर्भवेज्जायेत चामृतः॥
पश्चाज्जातिर्यदि भवेज्जरामरणमादितः।
अहेतुकमजातस्य स्याज्जरामरणं कथं॥
न जरामरणेनैव जातिश्च सह युज्यते।
म्रियेत जायमानश्च स्याच्चाहेतुकतोभयोः॥" इति।

अपरं च (पृ. २२४)—

"नहि सहभूतयोः सव्येतरविषाणयोरन्योन्यहेतुकता दृष्टा।"[1] इति।

निराकृतः सहक्रमः। पूर्वापरक्रमौ तु त्वत्र निराकरिष्येते। इयमेव हेतुफलक्रमानुपपत्तिरुद्दिष्टोपरिष्टात् (४. १९) क्रमकोपशब्देन॥

एभिस्त्रिभिः क्रमैरुत्पादोऽपि त्रिविध एव परिकल्प्येत। भवेदेतद्धेतुः फलमुत्पादयेदिति। भवेदेतत्फलं हेतुमुत्पादयेदिति। भवेद्वैतद्धेतुफले परस्परमुत्पादयेतामिति।[2] तत्र प्रथमः पक्षः प्राक् सामान्येन प्रत्याख्यातः प्रत्याख्यास्यते च पुनरिति नेह पृथक् परीक्ष्यते। अत आदौ द्वितीय एव परीक्ष्य निरस्यते—

**फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति।**
**अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति॥१७॥**[3]

हेतुश्चेत्**फला**दुत्पद्यते स तर्हि तथोत्पद्यमानः **सं**स्ते तव **हेतुर्न प्रसिध्यति** निष्पद्यते। हेतुरेव स न भवति। हेतोः खलु फलमुत्पद्यते न पुनः फलाद्धेतुः। एवं **चाप्रसिद्धो**ऽनिष्पन्नोऽसन्निति भावः। स **हेतुः कथं फलमुत्पादयिष्यति।** नोत्पादयिष्यतीति भावः।

अत्राह नागार्जुनः (म. का. १०. १०)—

"योऽपेक्ष्य सिध्यते भावस्तमेवापेक्ष्य सिध्यति।
यदि योऽपेक्षितव्यः स सिध्यतां कमपेक्ष्य कः॥" इति।

चन्द्रकीर्तिश्चैतदेवं व्याचष्टे (म. वृ., पृ. २०८)—

"तत्र योऽग्न्याख्यो भावो यमिन्धनाख्यं भावमपेक्ष्य सिध्यति। इन्धनाख्यश्च भावो योऽग्निनात्मसिद्ध्यर्थमपेक्षितव्यः। स यदि तमेवा-

---

१। इयमपि तस्यैवोक्तिः (म. वृ., पृ. ५४७)—"परस्परनिरपेक्षयोरेव स्वहेतुप्रत्ययसिद्धयोः सहभावो युज्यते सव्येतरगोविषाणयोर्युगपदुत्पत्तिस्तनयोर्नरकर्णयोरित्यादिवत्।"

२। द्रः म. का २०। विशेषेण तु २०. ५-७। अत्राह च चन्द्रकीर्तिः (म. वृ., पृ ३९९) "यद्येवं फलस्य हेतोरुत्पत्तौ दोष एवं सति सहोत्पन्नैव सामग्री फलस्य जनिकास्तु तद्यथा प्रदीपप्रभायाः।"

३। यथैतेषु त्रिषु पक्षेषु द्वितीयस्तृतीयश्च परीक्षितौ (४. १७, १८) एवं प्रथमोऽपि नूनं षोडशसप्तमयोः कारिकयोर्मध्ये कयापि पृथक्कारिकया स्यात् परीक्षित आचार्येण। सा पुनः साम्प्रतं कुतोऽपि प्रभ्रष्टेति कश्चिन्मन्वीत।

अग्न्याख्यं पदार्थमपेक्ष्य सिध्यति कथ्यतामिदं सिध्यतां कमपेक्ष्य क इति। यदा चाग्न्यभावे सतीन्धनस्य सिद्धिरेव नास्ति तदा कारणस्येन्धनस्याभावात्कुतस्तद्धेतुकोऽग्निः प्रसेत्स्यति।"

इयं चोत्तरात्र कारिका ( म. का. १०. ११ ) ना गा र्जु न स्य—

"योऽपेक्ष्य सिध्यते भावः सोऽसिद्धोऽपेक्ष्यते कथं। ५
अथाप्यपेक्ष्यते सिद्धस्त्वपेक्षास्य न युज्यते॥" [१]

अथ पूर्वोक्तस्तृतीयः पक्षः परीक्ष्यते—

**यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः।**
**कतरत्पूर्वमुत्पन्नं यस्य सिद्धिरपेक्षया॥१८॥**

**यदि** मन्यसे **हेतोः सिद्धि**र्निष्पत्तिः **फला**द्भवति **फलसिद्धिश्च** १० **हेतुतो** भवतीति तर्हि कथय हेतुफलयोः **कतरत्पूर्वमुत्पन्नं यस्य सिद्धिरपेक्षया** भवति। कतरत्तद्धेतुफलयोः। हेतुर्वा फलं वा। यदपरमपेक्ष्य सिध्यति।

इयं चोक्तिरत्र ना गा र्जु न स्य ( म. का. १०. ८ ) द्रष्टव्या—

"यदीन्धनमपेक्ष्याग्निरपेक्ष्याग्निं यदीन्धनम् १५
कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया॥" इति।

उभयोः कारिकयोः साम्यमनुक्तमपि स्पष्टं प्रकाशते। किञ्च पुनरेतद् व्यनक्तीत्युन्नेयम्। इमां च ना गा र्जु न कारिकां च न्द्र की र्ति रेवं व्याचष्टे—

"अस्येन्धनस्यायमग्निर्दाहकः कर्तेत्येवं यदीन्धनमपेक्ष्याग्निर्व्यवस्थाप्यते। २० अस्याग्नेरिदमिन्धनं कर्मेत्येवमग्निमपेक्ष्य यदीन्धनं। तत्कतरदनयोः पूर्वनिष्पन्नम्। किमिन्धनं यदपेक्ष्याग्निः स्यात्। उताग्निर्यमपेक्ष्येन्धनं स्यात्। तत्र यदीन्धनं पूर्वनिष्पन्नमिति कल्प्यते। तदयुक्तमग्निनिरपेक्षस्यानिध्यमानस्येन्धनत्वाभावात्। तृणादेः सर्वस्य चैवेन्धनत्वप्रसङ्गात्। अथ पूर्वमग्निः पश्चादिन्धनमिति। तदप्ययुक्तमिन्धनात्पूर्वसिद्धस्याग्नेरसम्भवात्। निर्हेतुकत्वप्रसङ्गात्। पश्चाच्चापेक्षया निष्प्रयोजनत्वात्। २५ तस्मान्नास्त्यत्र किञ्चित्पूर्वसिद्धं यदपेक्ष्येतरसिद्धिः स्यात्।"

एवं चिन्तितो हेतुफलभावः। प्रसङ्गात्पुनरप्युपरिष्टाच्चिन्तयिष्यते ( ४. ५२—५६ )॥

---

१। अस्मदाचार्येण ना गा र्जु ने न चात्र (सोपसर्गस्य निरुपसर्गस्यैव वा) सिध्यतेर्धातोः प्रयोगो विमर्शनीयः। ३०

सुव्यक्तमेतावताजातिवादोऽयं सौगतैरास्थित इति। अथ तत्कण्ठत एवोच्यते। प्रदर्श्यन्ते चान्या युक्तयः—

**अशक्तिरपरिज्ञानं क्रमकोपोऽथवा पुनः।**
**एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥१९॥**

५ न जातिर्युज्यते। यस्मादस्तीहा**शक्ति**रसामर्थ्यम्। अस्त्य**परिज्ञान**मसम्यग्बोधः। अस्त्य**थवा पुनः क्रमकोपः** प्रागुक्तस्य क्रमस्य कोपो विरोध इति भावः। एवमनेन प्रकारेण **हि बुद्धै**स्तथागतैः **सर्वथाजाति**रनुत्पत्तिः **परिदीपिता** प्रकाशिता। अत्र जातिप्रतिकूलास्तिस्रो युक्तय उपन्यस्ताः। अशक्तिरपरिज्ञानं

१० क्रमकोपश्च। आसु क्रमकोपः प्रागेव (४. १६) व्याख्यातः। का पुनरशक्तिः किं वापरिज्ञानमिति सौगतशास्त्रेषु दृश्यते। तथा हि। आह नागार्जुनः (म. का. १. ६)—

"नैवासतो नैव सतः प्रत्ययोऽर्थस्य युज्यते।
असतः प्रत्ययः कस्य सतश्च प्रत्ययेन किम् ॥" इति।

१५ उत्पादे हि पदार्थस्य पदार्थेनावश्यं शक्तिमता भवितव्यम्। शक्तस्यैव हि शक्यकरणान्नाशक्तस्य।[1] अन्यथा सर्वं सर्वस्मादुत्पद्येत। न वा किञ्चित्कुतश्चिदुत्पद्येत। तत्र योऽयं प्रत्यय[2] इत्युच्यते कस्यायमस्तु। किं सतोऽसतो वा। असतो ह्यविद्यमानस्यार्थस्य कथं स्यात् प्रत्ययः। सतश्चार्थस्य किं प्रत्ययेन।[3]

---

२० १। सा. का. ६।

२। अत्र हेतुश्च प्रत्ययश्चेति पर्यायौ। अ. को. ६. २४१ ; म. वृ., पृ. ७६, टि ४ ; ने. प. ३. § १९। इदं चाभिधर्मकोशव्याख्यायाम् (म. वृ., पृ. ७६) दृश्यते "हेतूनां च प्रत्ययानां च कः प्रतिविशेषः। न कश्चिदित्याह। उक्तं हि भगवता।° हेतुः प्रत्ययो निदानं कारणं निमित्तं लिङ्गमुपनिषदिति पर्यायाः।"

२५ अपि च (अ. को. ९. २४१) "हेतुरासन्नः प्रत्ययः। विप्रकृष्टस्तु प्रत्यय एव। जनको हेतुः प्रत्ययस्त्वालम्बनमात्रमित्यपरे। पर्यायावेतावित्यपरे।"

३। अन्यत्राप्युक्तम् (स. द. स, पृ. २९.. १६२)—

"न सतः कारणापेक्षा व्योमादेरिव युज्जते।
कार्यस्यासम्भवी हेतुः खपुष्पादेरिवासतः ॥"

स्यादेतत्। मा भूत्सतोऽसतो वायस्य प्रत्ययो भविष्यतस्तु भविष्यति। भविष्यता च भविष्यति व्यवहारः। यथोक्तं पुरस्तात् (३. ३४) "भविष्यद्वृत्त्या गौणं तद्" इति। नैतावताप्युपपद्यते। यथोक्तं म ध्य म का व ता रे (६. ५८ ; म. वृ. पृ. ८२ धृते)—

"भविष्यता चेद्व्यवहार इष्टः ५
शक्तिं विना नास्ति हि भाविताऽस्य।
[ परस्परार्थाश्रयिणी च सिद्धिः
सिद्धिर्न सा स्यादिति सन्निरुक्तं॥ ]"[1]

इदं चोक्तं च न्द्र की र्ति ना तत्रैव (६. ५७)—

[ "शक्तेर्न जाते खलु सम्भवोऽस्ति १०
नाजातभावेऽपि च शक्तिरस्ति।" ][2]

एवं शक्तेरभावान्नोत्पादः कस्यापि। इयमशक्तिः॥

अथापरिज्ञानम्। इदमपरिज्ञानं नाम पूर्वापरापरिज्ञानं यत्स्वयमेवाचा र्यो ऽनुपदमेव निर्देक्ष्यति (४. २१)। विवृतं च यत्तथागतेषु शास्त्रेषु। यत्तत्र पूर्वापरकोट्यपरिज्ञानं तदेवेह समासेनोक्तं पूर्वापरापरिज्ञानम्। १५ तस्यैव पुनः संक्षेपवचनमपरिज्ञानमिति। अयमेवार्थो ना गा र्जु ने न म ध्य म क का रि का या मेकेनाखिलेन प्रकरणेन (१०) परीक्षितः। अत एवास्य पूर्वापरकोटिपरीक्षेति नाम। अत्रेयं प्रथमा कारिका (१०. १)—

"पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः।
संसारोऽनवराग्रो हि[3] नास्यादिर्नापि पश्चिमम्॥" इति २०

अत्र च न्द्र की र्तिः (म. वृ., पृ. २१९)—

"कोटिर्भागो देश इति पर्यायाः। पूर्वा कोटिः पूर्वो देश इत्यर्थः। यदि हि संसारो नाम कश्चित्स्यात् नियतं तस्य पूर्वमपि स्यात्पश्चिममपि घटादीनामिव।० तस्मान्नास्ति संसारः। पूर्वापरकोट्यनुपलम्भाद् [ अलात ] चक्रवदिति स्थित"मिति विस्तरः। २५

---

१। उत्तरार्धस्य मूलं संस्कृतं नाधिगम्यते। इयं तु भोटपाठस्य संस्कृतच्छाया।

२। इयमपि भोटपाठस्य संस्कृतच्छाया। मूलं संस्कृतं न लभ्यते।

३। "अग्रमित्यादिः प्रथममित्युच्यते। अवरमित्यवसानमन्तो व्यवच्छेद उच्यते" (म वृ., पृ. २२१)। संसारस्य नादिर्न वान्त इत्यर्थः। ३०

न केवलं संसारस्यैव पूर्वापरकोट्यनुपलम्भः। अपि तु सर्वेषामेव भावानाम्। तदुक्तं ना गा र्जु ने नै व ( म. का. ११. ८ )—

"पूर्वा न विद्यते कोटिः संसारस्य न केवलं।
सर्वेषामेव भावानां पूर्वा कोटी न विद्यते॥" इति।

उक्तं चैतत्तत्प्रसङ्गात् ( म. का. ११. २)—

"नैवाग्रं नावरं यस्य मध्यं तस्य कुतो भवेत्।
तस्मान्नात्रोपपद्यन्ते पूर्वापरसहक्रमाः॥" इति।

स्वयं चा चा र्ये णा प्युक्तम् ( २. ६; ४. ३१ )—

"आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः॥"[1]

इदं तदपरिज्ञानं यद्विवक्षितमाचार्येण। ततश्चाशक्त्यापरिज्ञानेन नमकोपेन च हेतुना बुद्धै[2]रजातिः परिदीपिता।[3]

---

१। "आदावन्ते च यन्नास्ति मध्येऽपि तन्नवेत्तथा।" न. उ. १४।
"जस्स नत्थि पुरा पच्छा मज्झं तस्स कुतो सिया॥" आ. सू. ४. ४. १. ३।

२। इहा चा त शा न्तौ बुद्धशब्दः षट्कृत्वः प्रयुक्तः। तथा हि। "एवं हि सर्वथा बुद्धैः" ( ४. १९ )। "जातिस्तु देशिता बुद्धैः" ( ४. ४२ )। "विषयः स हि बुद्धानाम्" ( ४. ८० )। "सदा बुद्धैः प्रकीर्त्तितम्" ( ४. ८८ )। "क्रमते न हि बुद्धस्य" ( ४. ९९ )। "नैतद्बुद्धेन भाषितम्" ( तत्रैव )। अत्र कश्चित्परीक्षको मन्यते यत्रायमेकवचनान्तस्तत्रैव सुगतवचनः। अन्यत्र तु ज्ञानिवचन इति। तदेतन्न किञ्चित्। न ह्यत्रास्ति किमपि प्रमाणम्। बहवो हि बुद्धाः काश्यपक्रकुच्छन्दादयः ( ल. सू., पृ. २४२ )। धर्मः पुनस्तैर्देशित एक एव ( मि. प, पृ. २१७ )। ते च बुद्धास्ताथागतेषु शास्त्रेषु क्वचिदेकवचनेन क्वचिच्च बहुवचनेनोद्दिश्यन्ते। दिङ्मात्रं यथा।

"आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितं।
बुद्धैरात्मा न चानात्मा कश्चिदित्यपि देशितं॥" म. का. १८. ६।

"सर्वोपलम्भशमः प्रपञ्चोपशमः शिवः।
न क्वचित्कस्यचित्कश्चिद्धर्मो बुद्धेन देशितः॥" तत्रैव २५. २४।

"शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जनैः।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे॥"

च. श. टीका, पृ. ३८२; स स, पृ, २९—२६।

३। परिपूर्वको दीप्यतिः प्रायेण सौगतैरेव प्रयुज्यते।

एवं परिहृतेऽपि हेतुफलभावे जातिवादी दृष्टान्तबलेन पुनः प्रत्यवतिष्ठमान आह न खलु न सिध्यति हेतुफलभावः। उत्पद्यते खल्वङ्कुरो बीजादिति न शक्यमपह्नोतुम्। अतः स्पष्टोऽत्र हेतुफलभावः। तद्दृष्टान्तेनान्यत्रापि स सेत्स्यतीति। न सेत्स्यतीति प्रत्युच्यते—

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि नः।**
**न च साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥२०॥**

कस्मान्न सेत्स्यति। **हि** यस्मान्नोऽस्माकं मते **बीजाङ्कुराख्यो दृष्टान्तो** न सिद्धोऽपितु **सदा साध्यसमः** साध्येन समः सदृशः। यथा साध्यस्तथा सः।[1] बीजाङ्कुरे सिद्धो हेतुफलभाव इति भवानन्ये वा मन्वते। वयं तु न तथा मन्महे। प्रदर्शिता पुरस्तात्तत्र बह्व्यो युक्तयः। स खलु दृष्टान्तो यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यमिति हि न्यायविदो विदन्ति।[2] बीजाङ्कुरे तु लौकिका बुध्यन्त एकं परीक्षकास्त्वन्यत्। तत्तावत्साधयतु भवानेष दृष्टान्त इति। ततोऽयं साधयिष्यति साध्यम्। न तु भवांस्तथा कर्तुमीष्टे। यं खलु हेतुं भवाञ्जातिसाधनायोपन्यस्यति न स सिद्धो हेतुत्वेन। अपि तु **साध्यसमः** साध्येन सदृशः। हेतुत्वेन साधयितव्यः स इति भावः। स केवलं हेतुरिवाभासते न तु हेतुः। न चैतादृशेन हेतुना साध्यं सिध्येदित्याह **न च साध्यसमो**[3] **हेतुः**[4] **सिद्धौ साध्यस्य युज्यते** उपपद्यते। चिन्तितश्चायमर्थो हेतुफलभावं निराचिकीर्षुणा नागार्जुनेनाग्नीन्धनदृष्टान्तं दर्शयता मध्यमककारिकायां दशमे प्रकरणे। यत्रेदमुक्तम्—

१। म. वृ, पृ. १२७। द्र:—टि. ३।

२। न्या. सू. १. १. २५। "यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते" इति वात्स्यायनभाष्यम् (न्या. सू. १. १. १)।

३। न्या. सू. १. २. ४। तल्लक्षणं च "साध्याविशिष्टः साध्यत्वात्साध्यसमः (न्या. सू. १. २. ८)।

४। भाष्यकारस्तत्र हेतुशब्दमेवं व्याचष्टे "हेतुरिति दृष्टान्तोऽत्राभिप्रेतो गमकत्वात्। प्रकृतो हि दृष्टान्तो न हेतु"रिति।

"यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्मणोः ।
अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत् ॥
नित्यप्रदीप्त एव स्यादप्रदीपनहेतुकः ।
पुनरारम्भवैयर्थ्यमेवं चाकर्मकः सति ॥"

१०. १—२ ।

"अग्नीन्धनाभ्यां व्याख्यात आत्मोपादनयोः क्रमः ।
सर्वो निरवशेषेण सार्द्धं घटपटादिभिः ॥"

तत्रैव १५ ।

आह च चन्द्रकीर्त्तिश्चतुःशतकटीकायाम् (१. ८) "तस्मादेवं हेतुफलभावव्यवस्थाभावाद्द्वयमपि स्वरूपेण न सिद्धति ॥"[1]

न कस्यापि पूर्वा न चापरा कोटिः परिज्ञायते। एतेन चापरिज्ञानेन बुद्धैरजातिः परिदीपितेति यदुक्तं प्राक् (४-१९) तत्प्रत्युत्तरयता प्रतिवादिनोच्यते। नेदं युक्तं वक्तुम्। दृश्यत एव हि स्पष्टं पूर्वा कोटिः। तथा हि—

**पूर्वापरापरिज्ञानमजातेः परिदीपकम् ।**
**जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥२१॥**

पुरस्ताद्विवृतं **पूर्वापरापरिज्ञानमजातेः परिदीपकं** प्रकाशकं भवतीति कथितं भवता। तत्र पृच्छामि। **जायमानाद्धि धर्मात्** योऽयं घटादिरूपः पदार्थो जायत एव पुरतः तस्मात्तस्य पूर्वं पूर्वा कोटिरादिरिति भावः कथं न **गृह्यते** ज्ञायते। जायमानं घटं पश्यता इदमस्य पूर्वमिति दृश्यत एवेति किमिह वक्तव्यम् ॥

---

१। हेतुः फलं चेत्यर्थः ।

२। संस्कृतच्छायेयं भोटपाठस्य। द्रष्टव्या सा कारिका मध्यमकावतार ६, पृ. १९० ।

अत्राहाचार्यः । जायमानाद्धर्मात्क्लिष्यत इत्युच्यते । न चास्ति कश्चिज्जायमानो नाम धर्मः । तथाहि—

**स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते ।**
**सदसत् सदसद्वापि न किञ्चिद्वस्तु जायते ॥२२॥**

जायमानं हि **किञ्चिद्वस्तु स्वतो वा जायते परतो वापि ।** न पुनरुभयथापि जायते । किञ्च जायमानं **किञ्चिद्वस्तु सद्वा** स्यादसद्वा स्यात् **सदसद्वा** स्यात् ।[1] न त्वेकधापि सम्भवति । तदेतद्विवृतं विस्तरशो ना गा र्जु ने न तद्विनेयैश्च । तथाहि—

"न स्वतो जायते भावः परतो नैव जायते ।
न स्वतः परतश्चैव जायते जायते कुतः ॥"[2]
म. का, २१, १३ ; द्रः २३. २० ।

किञ्च ।

"न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥"
म. का. १. १ ।

इदं प्रकृतकारिकायाः पूर्वार्धविषयकम् । एतत्तूत्तरार्धविषयकम्—

"न सन्नासन्न सदसन्धर्मो निर्वर्तते यदा ।
कथं निर्वर्त्तको हेतुरेवं सति हि युज्यते ॥"[3]
म. का. १. ७ ।

हेतुफलव्यवस्थया जातिर्न सम्भवतीति पुनराह । एष च प्राक्प्रदर्शितस्य ( ४. २१ ) पूर्वापरापरिज्ञानस्यैव प्रपञ्चः ।

---

१ । अत्र न-सदसदिति चतुर्थोऽपि पक्षः शक्यः कर्तुम् ।

२ । बो. अ. प., ३५९ ; छ. स ; पृ. १८ ।

३ । द्रः—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥"

कारिकेयं स र ह पा द स्ये ति कुत्रचित् ( छ स , पृ १९ ) । आ र्य दे व स्येत्यन्यत्र ( ज्ञा. स. २८ ) । एतेयं सौगतेष्वन्यदीयेषु च बहुषु ग्रन्थेषु ( बो. अ. प , पृ. ३५९ । "अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव" (स. द. स. बौद्धदर्शने प. २९) । अत्र एतस्य ज्ञा न सा र स मु च य स्य मूलं संस्कृतं साम्प्रतं नाधिगम्यते । भोटपाठ एव तु केवलं मयाधिगतः ।

हेतुर्न जायतेऽनादिः[1] फलं वापि स्वभावतः।
आदिर्न विद्यते यस्य तस्य जातिर्न विद्यते ॥२३॥

नास्त्यादिर्यस्य सोऽनादिर्हेतुरपि वा फलं स्वभावतो निसर्गेण न जायते। स्वभाव एवायं यस्यादिर्नास्ति जातिरपि तस्य नास्तीति। एतदेवोच्यते यस्यादिर्न विद्यते तस्य जातिर्न विद्यत इति। आदिमतस्तु जातिः कदाचिद्भवन्ती भवेत्। आदिरेव तु न कस्यचिदस्ति ॥[2]

युक्त्यन्तरमाह। भवान्खल्वेषां भावानां जातिमभ्युपगच्छति। स्यादेतदेवं यदि भावा एव तावद्वस्तुतः स्युः। न तु सन्ति। अतः कुतस्तेषां जातिः। यथा च ते न सन्ति तथा प्रतिपादयत्याचार्यः साम्प्रतमनुसरन्सरणिं सौगतानां विज्ञानवादिनाम्।[3] अयमेषामभ्युपगमः। विज्ञान[4]मेव केवलमस्ति नार्थान्तरम्। तदेवार्थाकारेणाभासते।

---

१। आनन्दाश्रमसंस्करणोपयुक्तेषु सर्वेषु पुस्तकेषु तेभ्यस्तेभ्यः प्रदेशेभ्यः संगृहीतेषु परीक्षितेषु च मया प्रचलत्सु च बहुषु संस्करणेषु अनादिरित्यत्रा-मादेरिति। चतुर्थे च पादे जातिरित्यत्र ह्यादिरिति पाठो दृश्यते। न पुनरेताभ्यां पाठाभ्यां कश्चिदुपादेयोऽर्थो निष्पद्यते। तत्र अनादिरिति पाठो युक्त इति मयैव संस्कृतः। द्वितीयस्तु पाठः (जातिरिति) एकस्मिन्नेव पुस्तके (पञ्चनदविश्वविद्यालये १४८ संख्यके पर्यन्तभागे) दृष्टः। भाष्यकारोऽपि "यस्मादादिः कारणं न विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यत" इति वदन्ननुमन्येतेव जातिपाठम्।

२। उपः (बो. अ. ९. २२३)—

"हेतोरादिर्न चेदस्ति फलस्यादिः कुतो भवेत्।"

३। एतमेवार्थमागमशास्त्र इत आरभ्य विचारयत्याचार्य इत्यकामयमानोऽपि कण्ठत आह भाष्यकारः (४. २६)। तथाहि। "प्रज्ञप्तेः सनिमित्तत्व"मित्येतदन्तं (४. २४—२८) विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदित"मिति।

४। विज्ञानं चित्तं मनो विज्ञप्तिरित्यनर्थान्तरम्। यथा

"चित्तं विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च।
आलयश्चिभवश्रेष्टा एते चित्तस्य पर्ययाः ॥"

क. सू. १०. ४९९।

यथा स्वप्नादौ।[1] जातिवादी तु विज्ञानवादिनामभ्युपगमं निराकरिष्णुः प्रतिष्ठापयितुकामश्च स्वमतमाह—

प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः।
संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥२४॥

**प्रज्ञप्तेः सनिमित्तत्वम्।** समासेन तावत्प्रज्ञप्तिः संज्ञा नामेत्यर्थः। संख्या समाज्ञा प्रज्ञप्तिः संज्ञा नाम नामकरणं नामधेयं निरुक्तिर्व्यञ्जनमभिलाप इत्येते शब्दाः स्वरूपतो भिद्यमाना अपि नार्थतो भिद्यन्ते।[2] योगार्थतः पुनः प्रज्ञप्तिः प्रज्ञापनमवबोधनम्।[3] भावसाधनत्वेन कर्मसाधनत्वेन करणसाधनत्वेन च सम्भवत्स्वपि त्रिष्वर्थेषु आद्यावेवार्थौ गृह्येते।[4]

अस्ति गौरश्वः पुरुषो हस्तीति विविधा प्रज्ञप्तिः संज्ञा। सत्यां च तस्यामवश्यं तस्या निमित्तेनापि भवितव्यम्। निमित्तं नाम स विषयो

---

१। "विज्ञप्तिमात्रमेवेदमसदर्थावभासनात्।
यथा तैमिरिकस्यास्यासत्केशोण्डुकादिदर्शनम्।"
इत्यादिना व सु ब न्धु ना विं शि का यां समासतो दर्शितो विज्ञानवादः।

२। "कतमे धम्मा पञ्ञत्ति। या तेसं तेसं धम्मानं संखा समञ्ञा पञ्ञत्ति वोहारो नामं नामकरणं नामधेयं निरुत्ति व्यञ्जनं अभिलापो।" ध. सणि, § १३०८। "व्यवहारमात्रमेतन्नामधेयमात्रं संवृतिमात्रं प्रज्ञप्तिमात्रम्।" शि. स., पृ. २५७। "इमिना खो चित्त लोकसमञ्ञा लोकनिरुत्तियो लोकवोहारा लोकपञ्ञत्तियो याहि तथागतो वोहरति।" दी. नि. ९. ५३।

३। म. व्यु ६४९५, ६४९६। "रूपादीनि उपादाय पुग्गलस्स पञ्ञत्ति पञ्ञापनं अवबोधनमिच्छति [ पुग्गलवादी ]। क. व. अट्ठ., पृ. २५।

४। "पञ्ञत्ति पन पञ्ञापियत्ता पञ्ञत्ति पञ्ञापनतो वा पञ्ञत्ति च दुविधा होति।" अ. सा. § १०७। प्रज्ञप्तिः पुनः प्रज्ञाप्यत्वात् प्रज्ञप्तिः प्रज्ञापनतो वा प्रज्ञप्तिरिति द्विविधा भवतीति छाया। अन्यच्च। "प्रज्ञप्तिमनुपतित इति यथा संज्ञा यथा व्यवहारस्तथानुगत इत्यर्थः।" म. वृ., पृ. १३७ ( टि. ३ )।

वस्तुत्वाय प्रज्ञप्तिर्भवति[1]। सत्सु गवादिषु गवाद्यः प्रज्ञप्तयो भवन्ति। गवादीनि हि निमित्तान्युपादाय तत्तत्प्रज्ञप्तयः प्रवर्तन्ते। न खलु तेष्वसत्सु। अन्यथा गवादीनामभावेऽपि गवादिप्रज्ञप्त्युत्पत्तावविशेषेण सर्वत्रैव सर्वाः प्रज्ञप्तयः प्रवर्तेरन्। न तु प्रवर्तन्ते। अतोऽकामेनापि प्रज्ञप्तेर्निमित्तमभ्युपगन्तव्यम्। तदिदमुच्यते **प्रज्ञप्तेः सनिमित्तत्व-**मिति। प्रज्ञप्तेः सनिमित्तत्वानङ्गीकारे दोषमाह **अन्यथा द्वयनाशात्** इति। द्वयं ग्राह्यग्राहकरूपम्। तस्य **नाशतो**ऽभावात्। निमित्तेऽसति योऽयं ग्राह्यग्राहकभावः सर्वेषां नः प्रसिद्धः स नश्येत्। न चैतद्युक्तम्। अतः सिध्यन्ति निमित्तरूपाः भावाः। सिद्धौ च तेषां तदुत्पत्तिरपि सिध्यति।

इहोक्तप्रज्ञप्तिसनिमित्तत्वहेतु लङ्कावतारसूत्र (पृ. १०४) एवं वर्णितः—

"पुनरपरं महामतिराह। ननु भगवन्नभिलापसद्भावात्सन्ति सर्वभावाः। यदि पुनर्भगवन्भावा न स्युरभिलापो न प्रवर्तते। प्रवर्तते च। तस्मादभिलापसद्भावाद्भगवन् सन्ति सर्वभावाः। भगवानाह। असतामपि महामते भावानामभिलापः क्रियते यदुत शशविषाणकूर्मरोमवन्ध्यापुत्रादीनां लोके दृष्टोऽभिलापः। ते च महामते न भावा नाभावाः। अभिलप्यन्ते च। तद्यदवोचस्त्वं महामते अभिलापसद्भावात्सन्ति सर्वभावा इति स हि वादः प्रहीण" इति।

इदं चोक्तं संक्षिप्य तत्रैव (पृ. १०५)—

"आकाशं शशशृङ्गं च वन्ध्यायाः पुत्र एव च।
असन्तो ह्यभिलप्यन्ते तथा भावेषु कल्पना॥" इति

इममेव श्लोकमुद्धृत्याह चन्द्रकीर्तिः (म. वृ., पृ. ५२८)—"तत्रापि भावकल्पनाप्रतिषेधमात्रं नाभावकल्पना भावत्वासिद्धेरेवेति विज्ञेयं वन्ध्यापुत्र इति शब्दमात्रमेवैतत्। नास्यार्थ उपलभ्यते यस्यार्थस्य भावत्वमभावत्वं वा स्यादिति कुतोऽनुपलभ्यमानस्वभावस्य भावाभावकल्पना योक्ष्यते।"

---

[1] अत्रोक्तं लङ्कावतारसूत्रे (पृ. २२५-२२६) "तत्र निमित्तं पुनर्महामते यच्चक्षुर्विज्ञानस्याभासमागच्छति रूपसंज्ञकम्। एवं श्रोत्रघ्राणजिह्वाकायमनोविज्ञानानां शब्दगन्धरसस्प्रष्टव्यधर्मसंज्ञकम्। एतं निमित्तमिति वदामि।" अन्यत्र (पृ. २२८) "तत्र महामते निमित्तं यत्संस्थानाकृतिविशेषाकाररूपादिलक्षणं दृश्यते तन्निमित्तम्।"

अपि चेदं ल ङ्का व ता रे ( १०. ४३०, पृ. ३१६ )—

"असत्सु सर्वधर्मेषु प्रज्ञप्तिः क्रियते मया।
अभिलापो व्यवहारश्च बालानां तत्त्ववर्जितः॥"

"प्रज्ञप्तिर्नाममात्रेयं लक्षणेन न विद्यते।"

तत्रैव २०. २३, पृ. २६७। ५

"प्रज्ञप्तिमात्रं त्रिभवं नास्ति वस्तु स्वभावतः।
प्रज्ञप्तिं वस्तुभावेन कल्पयिष्यन्ति तार्किकाः॥"

तत्रैव च १०. ८६, पृ. २७५।

प्रज्ञप्तिशब्दे तु किञ्चिदतिरमणीयमाह कु मा रि लः ( त. वा. १. ३. १२, पृ. २३४ )। तथा हि। "शाक्यादिग्रन्थेषु पुनर्यद्यपि किञ्चित्साधुशब्दाभिप्रायेणाविनष्टबुद्ध्या प्रयुक्तं तत्रापि प्रज्ञप्तिविज्ञप्ति-पश्यतातिष्ठतादिप्रायप्रयोगात्किञ्चिदेवाविप्लुतं लभ्यते। किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽप्यपभ्रष्टतराणि भिक्षवे ( भिक्खवे इति पाठितव्यम् ) इत्येवमादीनि।" द्रष्टव्यात्र त न्त्र वा र्त्ति क व्याख्या न्या य सु धा। १० १५

अथ प्रकृतमेवानुसरामः। अस्त्यपरोऽपि हेतुर्भावसिद्धेरित्याह **संक्लेशस्येति**। तत्र तावदन्योन्यप्रतिकूलार्थकौ संक्लेशव्यवदानशब्दौ सुप्रसिद्धौ शाक्यशास्त्रेषु। समासेन तावत्संक्लेशो मलः। व्यवदानं च शुद्धिः। संक्लेशेन मनो मालिन्यं व्यवदानेन तु विशुद्धिमापद्यते। त्रिविधः संक्लेशः क्लेशकर्मजन्मात्मकः। स्थि र म ति राह ( त्रि., पृ २८ ) "तत्र क्लेशकर्मजन्मात्मकस्त्रिविधः संक्लेशः।" "क्लेशा रागादयः क्लिश्नन्ति सत्त्वचित्तसन्तानानीति कृत्वा ( म. वृ., पृ. ३३४ )।" रागादयो नाम रागो द्वेषो मोहश्च। ते च क्लेशाः सम्यग्दर्शनेन भावनया चापगच्छन्ति। कर्म द्विविधमकुशलं कुशलास्रवं च। जन्मोत्पत्तिः। द्रः वि. सि., पृ. २१४। अन्यत्रापि ( म. सू. टी, पृ. ३४-३५ ) विवृतोऽयं सक्लेशः स्थि र म ति ना। यथा [ "क्लेश एव संक्लेश इति क्लेश]संक्लेशः। एवं कर्म[संक्लेशो]जन्मसंक्लेशः। क्लेशो हि प्रवर्तमानः स्वपरात्मनोर्व्याबाधकत्वात्संक्लेशः। यथोक्तं सू त्रे ( अ. नि. ३. ५४ )[१] रक्तो हि रागपरीत आत्मव्याबाधायापि चेतयते। एवं द्वेषमोहयोरपि २० २५

१। यथा निष्पन्नपण्डितेन य म गु चि ना प्रदर्शितम्। ३०

ज्ञातव्यमिति। कर्म जन्म च संक्लेशप्रवर्तनादपि संक्लेशः।" अथेयं नागार्जुनस्य रागरक्तपरीक्षायां (म. का. षष्ठे प्रकरणे) चन्द्रकीर्त्तेरवतरणिका (म. वृ., पृ. १३७)—"अत्राह। विद्यन्त एव स्कन्धा[यतन]धातवः।[1] कुतः। तदाश्रयसंक्लेशोपलब्धेः॥ इह यन्नास्ति न तदा[श्रय]संक्लेशोपलब्धिरस्ति। वन्ध्यादुहितुरिव वन्ध्यासूनोः। सन्ति च रागादयः क्लेशाः संक्लेशनिबन्धन"मिति।

नूनमिममेवार्थं मनसि निधायाचार्य आह **संक्लेशस्योपलब्धेश्चेति**। **संक्लेशस्य** व्याख्यातस्योप**लब्धे**र्ज्ञानात्[2] **च** भावाना**मस्तिता** सद्भावो **मता** मन्यते। सन्त्येव भावा अन्यथा तदाश्रयः संक्लेशो नोपलभ्येत। उपलभ्यते तु सर्वैः। इयं चास्तिता **परतन्त्रा** अन्यायत्ता। न स्वतन्त्रा।[3] भवितुमभवितुमन्यथा वा भवितुं नेयमात्मना समर्था। अपि तु हेतुप्रत्ययसामग्रीबलादवश्यं भवेदेव। तथा च सति संक्लेशे यतः स संक्लेशस्तेनापि भवितव्यम्। तेन च सन्ति भावाः। ते च जायन्ते॥

अथ प्रतिवक्तुमुपक्रममाण आह—

**प्रज्ञप्तेः सनिमित्त्वमिष्यते युक्तिदर्शनात्।**
**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्॥२५॥**

अस्त्येत**द्युक्तिदर्शना**द्भवता **प्रज्ञप्तेः सनिमित्तत्वमिष्यत** इति। अस्माभिस्तु **भूतदर्शना**द्भूतस्य सत्यस्य तत्त्वस्य **दर्शना**दुपलब्धेर्भवदभिमतस्य **निमित्तस्यानिमित्तत्व**मेवेष्यते। यद्भवान्युक्तिं पश्यन्निमित्तं मन्यते वयं पुनस्तत्त्वं पश्यन्तो निमित्तमेव तन्न भवतीति मन्यामहे। युक्तिर्वदत्येकं प्रत्यक्षं चान्यदिति तयोर्विरोधे युक्तं प्रत्यक्षमेवोपादातुं नेह किञ्चिन्निमित्तमस्तीति।

---

१। स्कन्धाः पञ्च। रूपवेदनासंज्ञासंस्कारविज्ञानरूपाः। आयतनानि द्वादश। षडिन्द्रियाणि विषयाश्च तेषां षट्। धातवोऽष्टादश। षडिन्द्रियाणि तेषां षड्विषयाः षट् च तेषां विज्ञानानि।

२। "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इति न्या. सू. १. १. १५।

३। अयमर्थ उपरिष्टाद्विस्तरशो वक्ष्यते (४. ७३-७४)।

अन्यच्च जानातु भवान्। गौरश्वः पुरुषो हस्तीत्यादिकं निमित्त-मुच्यते। प्रज्ञप्तिमात्रं नाममात्रं त्वेतत्। प्रज्ञप्तिसदेतन्न वस्तुसत्। अतो न निमित्तं वस्तुतः ॥[1]

---

१। अयमर्थः पालौ मि लि न्द प्र श्ने (मि प., पृ. २६-२८) अतिरमणीयः। तस्य चेयं समासेन च्छाया दीयते। अत्र राज्ञा मिलिन्देन भदन्तनागसेनस्य संवादः। आयुष्मान्नागसेनो मिलिन्दं राजानमिदमवोचत्।० ५

त्वं खल्वसि महाराज क्षत्रियसुकुमारोऽत्यन्तसुकुमारः।० किं नु त्वं पादेनागतोऽसि उताहो वाहनेनेति।

मि। नाहं भन्ते पादेनागच्छामि। रथेनाहमागतोऽस्मि।

ना। तच्चेत्त्वं महाराज रथेनागतोऽसि रथं मे कथय। किं नु खलु महाराज ईषा रथः। १०

मि। नहि भदन्त।

ना। अक्षो रथः।

मि। नहि भदन्त।

ना। चक्रे रथः। १५

मि। नहि भदन्त।

ना। रथपञ्जरो रथः।

मि। नहि भदन्त।

ना। रथदण्डको रथः।

मि। न हि भदन्त। २०

ना। युगं रथः।

मि। नहि भदन्त।

ना। रश्मयो रथः।

मि। नहि भदन्त।

ना। प्रतोदयष्टी रथः। २५

मि। नहि भदन्त।

ना। किं नु खलु महाराज ईषाक्षचक्ररथपञ्जररथदण्डयुगरश्मिप्रतोदं रथः।

मि। नहि भदन्त।

ना। किं पुनर्महाराज अन्यत्र ईषाक्षचक्ररथपञ्जररथदण्डयुगरश्मिप्रतोदाद्रथः।

मि। न हि भदन्त। ३०

ना। त्वामहं महाराज पृच्छन्पृच्छन्न पश्यामि रथम्। शब्द एव नु खलु महाराज रथः। कः पुनरत्र रथः। अलीकं त्वं महाराज भाषसे मृषावादं नास्ति रथ इति। त्वमसि महाराज सकलजम्बूद्वीपे अग्रराजः। कस्मात्पुनस्त्वं बिभ्यन्मृषा भाषसे। शृण्वन्तु मे पञ्चशतानि यवनका अशीतिसहस्राणि च भिक्षवः। अयं मिलिन्दो राजा एवमाह रथेनाहमागतोऽस्मीति। तच्चेत्त्वं ३५ महाराज रथेनागतोऽसि रथं मे कथयेत्युक्तः सन् रथं मे न सम्पादयति। कल्यं नु खलु तदभिनन्दितुम्।०

निमित्तस्यानिमित्तत्वमुक्तम् (४. २५)। तत्र युक्तिमाह—

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च।**
**अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥**

यस्माच्चित्तमन्तरेण नास्ति किञ्चिद्बहिर्वस्तुसत्तस्माच्चित्तं कमप्यर्थं
५ पदार्थं **न संस्पृशति** सम्बध्नाति। चित्तेनार्थस्य न कश्चित्संस्पर्शः। न चित्तं कमपि विषयमवलम्बते। तादृशस्य विषयस्यैवाभावादिति भावः। अतो न प्रज्ञप्तेः सनिमित्तत्वम्। अत्राह। मा संस्प्राक्षीच्चित्तमर्थम्। अर्थाभासं[1] तु भवानभ्युपगच्छति। तमेव चित्तं संस्प्रक्ष्यति। तेन च सेत्स्यति सनिमित्तत्वं प्रज्ञप्तेरिति। न सेत्स्यतीत्याह **अभूतो हीति।**
१० **यतोऽर्थोऽभूतो**ऽसत्यो मिथ्याभूतस्तत एव स न विद्यते। अर्थे चाभूते तदाभासोऽप्यभूतः। अतस्तादृशादर्थादर्थाभासोऽपि **न ततः पृथक्।** अभूतत्वेनार्थश्च तदाभासश्चाभिन्नाविति भावः। तस्मादर्थो वा तदाभासो वा न प्रज्ञप्तेर्निमित्तं भवति।[2] उक्तं च

"चित्तं विचित्रं बीजाख्यं ख्यायते चित्तगोचरं।
१५ ख्यातौ कल्पेन्ति उत्पत्ति बालाः कल्पद्वये रताः॥"

ल. सू. १०. ४१ (पृ. २७)।

---

अथ खलु मिलिन्दो राजायुष्मन्तं नागसेनमेतदवोचत्। नाहं भदन्त नागसेन मृषा भणामि। ईषां च प्रतीत्य अक्षं च प्रतीत्य° चक्रे च प्रतीत्य रथ इति संख्या समाज्ञा प्रज्ञप्तिर्व्यवहारो नाम प्रवर्तते।

२० ना। साधु त्वं महाराज रथं जानासि।० एवमेव खलु महाराज ममापि केशांश्च प्रतीत्य लोमानि च प्रतीत्य विज्ञानं च प्रतीत्य नागसेन इति० प्रज्ञप्तिर्व्यवहारो नाम प्रवर्तते। भाषितमपि

यथैवाङ्गसम्भाराद्भवति शब्दो रथ इति।
एवं स्कन्धेषु सत्सु भवति सत्त्व इति सम्मतिः॥" इति।

२५ इदमिहावगन्तव्यम्। इयं केषाञ्चिद्दृष्टिः। तन्तवोऽवयवास्तेभ्यो भिन्नः शाटकोऽवयवी। अयमवयविवादः। स्थापितोऽयं कैश्चिद्दृष्टिभिः (न्या. सू. २. १. १३; प्र श स्त पा द भा ष्ये न्या. क., पृ. ४१)। सौगतास्तु मन्यन्ते नेह शाटको नाम किमपि वस्तुसत्। शाटक इति संज्ञामात्रं नाममात्रं प्रज्ञप्तिमात्रम्। व्यवहार एवायं केवलम्। यथा प्रदर्शितं पुरस्ताद्रथदृष्टान्ते। अन्यत्र
३० च (बो. अ. प. ९. ७६; अ. सा. प्र., पृ. ९७; प ण्डि ता शो क स्य अ व य वि नि रा क र ण म्, पृ. ७८)।

[1] आभासो व्याख्यातः (३. ४६)।

[2] अत्राभूतपरिकल्पविवरणप्रसङ्गे म ध्या न्त वि भा ग सू त्र भा ष्य- टी का यां (पृ. १०) स्थि र म ति रा ह—

अत्राह। माभूद्भवतां कश्चिद्बाह्योऽर्थो गवादिः। अर्थाभासस्तु विद्यते। स चापुरुषे पुरुष इति ग्राह इव विपर्यासः। तत एव च मिथ्याभूतः। तथाप्यस्यावश्यं केनापि निमित्तेन भवितव्यम्। न चैतच्छक्यमपह्नोतुम्। अस्ति विपर्यासो न चास्ति तस्य निमित्तमिति नोपपद्यत इति। स्यादेष दोषो यदि विपर्यासो नाम कश्चित्स्यात् न त्वस्ति।[1] तथा हि—

**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु।**
**अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥२७॥**

**चित्तं त्रिषु अध्वसु** कालेषु भूतभवद्भविष्वत्स्वरूपेषु **सदा** सततम्। न पुनः क्वापि विशेषकाल एवेत्यभिप्रायः। **निमित्तं न संस्पृशति।** अतश्चित्तस्य निमित्तेन संस्पर्शाभावाद**निमित्तो** निमित्तहीनो **विपर्यासस्तस्य** चित्तस्य **कथं भविष्यति।** न भविष्यतीति भावः। द्रः ४. ७७, ७८। उक्तं च लङ्कावतारसूत्रे (१०. १२३)—

"विपर्यासस्य वस्तुत्वाद् यद्यदेवोपलभ्यते।
निःस्वभावं भवेत्तद्धि सर्वथापि न विद्यते॥"

"न ह्यभूतपरिकल्पः कस्यचिद् ग्राहको नापि केनचिद् गृह्यते। किं तर्हि। ग्राह्यग्राहकत्व[रहितं वस्तुमात्रं। तथा हि। विज्ञानाद्बहिर्न रूपादि गृह्यते स्वप्नादिवत्। विज्ञानं हि रूपाद्या]भासमुत्पद्यते। न च यद्यस्य कारणं तदभावे तस्योत्पत्तिर्युज्यते। तस्मान्निरालम्बमेव स्वप्नादाविवान्यत्रापि सर्वबीजपरिपाकादर्थाभासं विज्ञानमुत्पद्यत इत्येव ज्ञेयं।० [०अतो रूपमभूतपरिकल्पान्न पृथग्भूतम्।]"

स्वप्नादाविव निमित्तमन्तरेणापि सम्भवत्येवार्थाभासः। अस्ति हि वासनावशात्सर्वधर्मोत्पादनसामर्थ्यं चित्तस्य। अत एवेदं सर्वबीजमित्युच्यते (त्रि १७, पृ. ३६, प. ७)।

१। "तस्मान्नास्ति विपर्यासः।" म. वृ., पृ. ४६१. प. १३। यथा च नास्ति तथा परीक्षितं नागार्जुनेन विपर्यासपरीक्षायाम् (म. का. २३)। द्रष्टव्या चात्रस्या मध्यमकवृत्तिः।

अथ निगमयति—

**तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।**
**तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥२८॥**

यस्मादेतदेवं तथोक्तं "चित्त"मित्यादिना (४. २६) "निमित्त"-
५ मित्यादिना (४. २७) च **तस्मान्न** चित्तं **न** वा **चित्तदृश्यं** किञ्चिज्**जायते । तस्य** चित्तस्य चित्तदृश्यस्य च **ये जातिं** पश्यन्ति **ते खे** आकाशे शकुन्तानां **पदं** पदचिह्नमिति भावः । **पश्यन्ति ।** जातेर्दर्शनं नाम विहायस्युत्पततां विहङ्गमानां चरणचिह्न-दर्शनमिवातिमात्रमनुपपन्नम् । सुप्रथित एष दृष्टान्तः ।[1] व्याख्यात-
१० श्चायमेवं पालौ बुद्धघोषेण धर्मपदार्थकथायां (ध. प. ९२-९३) । इयं तस्य च्छाया । "पदं तस्य दुरन्वयमिति यथाकाशे गच्छतां शकुन्तानामस्मिन्स्थाने पादाभ्यामाक्रम्य गताः । इदं स्थानमुदरेण प्रहृत्य गताः । इदं शीर्ष्णा इदं पक्षाभ्यामिति न शक्यं ज्ञातुमेवमेव ।०"

प्रकृते तु द्रष्टव्य मार्यरत्नचूडपरिपृच्छावचनम् (बो. अ. प. ९. १८, पृ. ३९२ ; म. वृ., पृ. ६२ ; शि. स., पृ. २३५)—
१५

---

१ । "आकासे व सकुन्तानं पदं तस्स दुरन्नयं ।" ध. प. ९३ ; थे. गा. ९२ ।

"आकासे व सकुन्तानं गति तेसं दुरन्नया ।" ध प. ९२ ।

"शकुनानामिवाकाशे जले वारिचरस्य च ।
पदं यथा न दृश्येत तथा ज्ञानवतां गतिः ॥"

मु. उ. ३. २. ६ मन्त्रे शाङ्करभाष्यम् ।
२०
अनुरूपः श्लोको भाष्यकारेणाप्यन्यत्र (४ ९५) दर्शितः—

सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ॥

"शकुनानामिवाकाशे गतिर्नैवोपलभ्यते ।" इति ।

द्रः तै. आ. सायणभाष्यम् (आनन्दाश्रमस्य), पृ. ५४७ ।
२५
"त उत्सहन्ते खेऽपि शाकुनं पदं द्रष्टुं खं च मुष्टिनाक्रष्टुं चर्मवद्वेष्टयितुम् ।"

बृ. उ. ४. ४. ६ शाङ्करभाष्यम्, पृ. ६३७ ।

"तद्यथापि नामाकाशे शकुनिपदम् ।" स. प्र पा ; पृ १३७ ।

"शून्यविद्य नहि विद्यते क्वचि अन्तरिक्षि शकुनस्य वा पदं ॥
३०
आर्यरत्नाकरसूत्रम् (म. वृ ; पृ. ९०) ।

"स चित्तं गवेषयमाणो नाध्यात्मं चित्तं समनुपश्यति। न बहिर्धा चित्तं समनुपश्यति।० स चित्तमसमनुपश्यन् चित्तधारां पर्येषते कुतश्चित्तोत्पत्तिरिति। तस्यैवं भवति। आलम्बने सति चित्तमुत्पद्यते। तत्किमन्यदालम्बनमन्यच्चित्तं। अथ यदेवालम्बनं तदेव चित्तं। यदि तावदन्यदालम्बनमन्यच्चित्तं तदा द्विचित्तता भविष्यति। ५ अथ यदेवालम्बनं तदेव चित्तं। तत्कथं चित्तेन चित्तं पश्यति। न च चित्तं चित्तं समनुपश्यति। तद्यथापि नाम तयैवासिधारया सैवासिधारा न शक्यते छेत्तुं। न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं शक्यते स्प्रष्टुं। एवमेव न तेनैव चित्तेन तदेव चित्तं शक्यं स्प्रष्टुं।०"

इदं चोक्तं का श्य प प रि व र्ते (§ १०१, पृ. १४६)[1]— १०

"चित्तं हि काश्यप परिगवेष्यमाणं न लभ्यते। यन्न लभ्यते तन्नोपलभ्यते। तन्नातीतं। नानागतं। न प्रत्युत्पन्नं। यन्नातीतं नानागतं न प्रत्युत्पन्नं तत्त्र्यध्वसमतिक्रान्तं। यत्त्र्यध्वसमतिक्रान्तं तन्नैवास्ति नैव नास्ति। यन्नैवास्ति न नास्ति तदजातं। यदजातं तस्य नास्ति स्वभावः। यस्य नास्ति स्वभावस्तस्य नास्त्युत्पादः। यस्य १५ नास्त्युत्पादस्तस्य नास्ति निरोधः॥"०[2]

एवमा चा र्य श्चित्तस्याजातिं दर्शयित्वा पुनरप्येनां द्रढयति—

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः।**
**प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥२६॥**

**यस्मादजातं जायते** न जातम्। यथाह श्रुति"र्जात एव न २० जायत"इति (बृ॰ उ॰ ३. ९. २८)। स्वयं चा चा र्यः प्राक् (३. २०; ४. ६, १३)। **ततस्तस्माद्भावस्याजातिरेव प्रकृतिः** स्वभाव इत्यास्थेयम्। **प्रकृतेश्चान्यथाभावो न कथञ्चित्** कथमपि **भविष्यति।** द्र॰ ३. २१, ४. ७। तदुक्तं ना गा र्जु ने न (म. वृ. १५. ८)— २५

"प्रकृतेरन्यथाभावो न हि जातूपपद्यते।" इति।

---

१। म. वृ, पृ. ४९ (का प = र त्न कू ट सू त्र म्); शि. स., पृ. २३३; बो. अ. प. ९. १०६ (पृ. ३३८)।

२। का. प., पृ. १४२—१५०।

तस्मादजातिरेव तत्त्वम्। अयं भावः। यदि कश्चिज्जायते नूनं स जातेः पूर्वमजातः। अतोऽजातिरेव तस्य प्रकृतिरित्यभ्युपगन्तव्यम्। तदभ्युपगमे च न जातिः कथञ्चिदपि सिध्यति। न हि प्रकृतेरन्यथाभावो भवति। प्रकृतिश्चान्यथाभावश्चेति विप्रतिषिद्धम्। आह च ना गा र्जु नः (म. का. १३. ४. ५)—

"कस्य स्यादन्यथाभावः स्वभावो यदि विद्यते॥
तस्यैव नान्यथाभावो नाप्यन्यस्यैव युज्यते।
युवा न जीर्यते यस्माद्यस्माज्जीर्णो न जीर्यते॥" इति।

अन्यौ च द्वौ दोषौ जातिवादे। जातिवादिनां दृष्टिरनादिरयं संसारः।[१] अस्ति त्वस्यान्त इति। अन्तोऽवसानम्। किञ्च। अस्ति मोक्षस्यादिः न चास्त्यस्यान्त इति। उभयमप्येतन्नोपपद्यत इत्याह—

**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति।**
**अनन्तता चादिमतो मोक्षस्य न भविष्यति॥३०॥**

जातिवादिना संसारस्यापि जातिरभ्युपगन्तव्या। अभ्युपगम्यते चेदिदमभ्युपगन्तव्यं तस्यादिरस्तीति। तथा च सति संसारोऽनादिरिति न वक्तव्यम्। अथ संसारोऽनादिर्न स भवेदन्तवान्। इष्यते तु भवतादिमतः संसारस्यान्तः। आदिमांश्चानन्तश्च न कश्चिद्दृष्टो भावः। तदिदमुक्तम**नादे**रित्यादिना प्रथमार्धेन। **सेत्स्यति** सिद्धो भविष्यति। उपपत्स्यत इत्यर्थः। अस्ति मोक्षस्यादिर्न पुनस्तस्यान्त इतीष्यमाणमपि मोक्षवादिना **न भविष्यति**। न ह्यादिमाननन्तश्च क्वचित्कश्चिद्दृष्टो भावः। तदिदमुक्त**मनन्तते**त्यादिना द्वितीयार्धेन॥

अयं बन्धमोक्षयोः परमार्थतः सद्भाववादिनां भवतां दोषः। अस्माकं तु (२. ३२) सौगतानामिव न तौ स्तः। यथा च न स्तस्तथा प्राक्प्रदर्शितमा चा र्ये ण (२. ३२)। परीक्षितं च सविस्तरं ना गा र्जु ने न

---

१। "इह संसरणं संसृतिर्गतेर्गत्यन्तरगमनं संसार इत्युच्यते।" म. वृ, पृ. २८०। संसारोऽनादिरिति सर्वतन्त्रसिद्धान्तः। सौगतानां तु मते संसारस्य नादिर्नवान्त इति परीक्षितं ना गा र्जु ने न पू र्वा प र को टि प री क्षा यां (म. का. ११) यत्रेयं प्रथमा कारिका—

"पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः।
संसारोऽनवाग्रो हि नास्यादिर्नापि पश्चिमम्॥"

बन्धमोक्षपरीक्षायाम् (म. का. एकादशे प्रकरणे)। न च वयं संसारस्यान्यस्य वा भावस्यादिमन्तं वा पश्यामः। तदुक्तं नागार्जुनेनैव (म. का. ११. १, ८)—

"पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः।
संसारोऽनवराग्रो हि नास्यादिर्नापि पश्चिमं॥"

पूर्वा प्रज्ञायते कोटिः संसारस्य न केवलं।
सर्वेषामपि भावानां पूर्वा कोटी न विद्यते॥" इति

स्यादेतत्। मा भूत्कस्यचिदादिरन्तो वा। मध्यं तु भविष्यति। प्रत्यक्षश्च स भावो लोके। तस्यैव च भविष्यति जातिः। नेत्याह—

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।**[1]
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः॥३१॥**[2]

**यदादौ अन्ते च नास्ति तद्वर्तमाने** प्रत्युपस्थिते तयोर्द्वयोरन्तराले[3] मध्ये**ऽपि तथा** नास्तीति भावः। कथं तर्हि तत्प्रतीतिरित्याह **वितथै**र्मिथ्याभूतैः **सदृशाः** समानाः **सन्तो** भावा **अवितथाः** अमिथ्याभूता **इव लक्षिता** भवन्ति। इदमुक्तं नागार्जुनेन (म. का. ११. २)—

"नैवाग्रं नावरं यस्य मध्यं तस्य कुतो भवेत्।"[4] इति॥

---

१। अयं प्रथमार्धो योगवासिष्ठेऽपि (४. ४९. ४९) दृश्यते।

२। कारिकेयं प्रागपि (२. ६) पठिता।

३। "यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके" इति भाष्यकारः (२. ६)।

४। "अग्रमित्यादिः पूर्वं प्रथममुच्यते। अवरमित्यवसानमन्तो व्यवच्छेद इत्युच्यते। यस्य संसारस्यादिरन्तश्च प्रतिषिद्धस्तस्य मध्यं कुतो भविष्यति। ततश्च संज्ञामात्रकमेव विपर्यासपरवशमानसानां संसार आदिमध्यावसानविरहितत्वादलातचक्रवदिति भावः।" तत्रैव म. वृ., पृ. २२१।

एताश्चैतदर्थका अपरा उक्तयः—

"जस्स नत्थि पुरा पच्छा मज्झं तस्स कुओ सिया।" आ. सू. १. ४. ४. ३।

"आदावन्ते च यन्नास्ति मध्येऽपि च न तत्तथा।" न. उ. १४।

दृश्यन्ते भावा जागरिते स्वप्ने च। तत्र स्वप्न इव जागरितेऽपि सर्वे भावा वितथा इति परीक्षितं प्राग् बह्वीभिर्युक्तिभि र्वै त थ्ये (२)। इहाप्या चा र्य स्ता एव युक्तीः क्वचिच्छब्दतः क्वचिदर्थतः क्वचिदुभयतस्तत उद्धृत्य पठति यथा लीलयैवावगम्येत न किमपि वस्तुसन्नतरां च तस्त्योत्पाद इति—

५

**सप्रयोजनता तेषां स्वप्नेऽपि प्रतिपद्यते।**
**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥३२॥**

सेयं कारिका प्राक्पठिता (२. ७) कृतवृत्तिश्च ॥

जाग्रद्दृश्या भावाः स्वप्नदृश्येभ्यो भावेभ्यो न भिद्यन्ते। अतस्तेऽपि मिथ्याभूता इत्युक्तम्। अथ कथमवगम्यते स्वप्नदृश्या भावा मिथ्याभूता इत्याह—

१०

**सर्वे धर्मा[1] मृषा स्वप्ने कायस्यान्तर्निदर्शनात्।**
**संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥**

अत्र वै त थ्ये प्रथमकारिकाया (२. १) एवार्थः स्तोकमन्यथा कृत्वा संगृहीत इति सा द्रष्टव्या। **स्वप्ने सर्वे धर्मा** भावा **मृषा** मिथ्या। किं कारणम्। **कायस्य** देहस्या**न्त**रभ्यन्तरे **निदर्शना**दवलोकनात्। स्वप्नदृश्या भावा हस्तिपर्वतादयः स्वप्नद्रष्टुः कायस्यान्तर्दृश्यन्ते न बहिः। न पुनस्ते वस्तुतस्तथा भवितुमर्हन्ति। न खलु ते कायमध्ये मायुः। तस्मात् **कुतो नु** खलु **संवृत** आच्छादितेऽ**स्मि**न्ननुभूयमाने **प्रदेशे** कायमध्ये हस्तिपर्वतादीनामतिमहतां **भूतानां** भावानां **दर्शनं** स्यात्। न स्यादिति भावः ॥

१५

२०

"न यत्पुरस्तादुत यन्न पश्चा-
न्मध्ये च तन्न व्यपदेशमात्रम्।
भूतं प्रसिद्धं च परेण यद्यत्
तदेव तत्स्यादिति मे मनीषा ॥" भा. पु. ११. १८. २१।

२५

"आदावेव हि यन्नास्ति कारणासम्भवात्स्वयम्
वर्तमानेऽपि तन्नास्ति नाशः स्यात्तत्र कीदृशः ॥" यो. वा. ३. ११. १३।

१। परीक्षितानां हस्तलिखितानां पुस्तकानां संस्करणानां च केवलमेकस्मिन्नेव (आड्यार-ग्रन्थशाला ९ जि. ५२) सर्वे धर्मा इत्यत्र सर्वधर्मा इति पाठः। बौद्धेषु ग्रन्थेषु प्रायेण सर्वत्रैव एष एव पाठो दृश्यते।

३०

इतश्च स्वप्नदृश्या भावा मिथ्याभूताः—

**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥३४॥**

अत्रापि समासतो वैतथ्यस्य द्वितीयकारिकार्थ (२. २) एव सङ्कलितः । स्वप्नदृक्किल कश्चित्स्वप्ने पाटलिपुत्रान्निष्क्रान्तस्तावतीमतिदवीयसीं माहिष्मतीमेकेनैव निमेषेणोपैति । उपेत्य च पश्यति तत्र राजकुलम् । तदेतत्तस्य स्वप्नदृशस्तत्र **गत्वा** राजकुल**दर्शनं न युक्त**मुपपन्नम् । किं कारणम् । **गतौ** गमने **कालस्यानियमात्** । न हि स्वप्नदृश एकस्मादपरस्मिन्देशे गमने विद्यते कश्चित्कालनियमः । लोके पुनः किञ्चिन्न्यूनेनाधिकेन वैतावता कालेन इयानध्वातिक्रम्यत इति विद्यते नियमः । स्वप्नदृक्तु कदाचिन्निमेषेणातिमहान्तमपि मार्गमश्नुते । कदाचिद्वातिनेदीयांसमपि मार्गमतिमहतापि कालेन नातिक्राम्यतीति न नियमः । अतो वितथाः स्वप्नदृश्या भावाः । यदिह कालस्यानियमादिति तदेवान्यत्र (२. २.) भङ्ग्यन्तरेण अदीर्घत्वाच्च कालस्येत्युक्तम् ॥

अपरश्च हेतुः । स्वप्नदृक्पुरुषः कदाचित्स्वप्ने पश्यति विदर्भेभ्योऽहं गन्धारानागतोऽस्मीति । तथा च पश्यन्नेव स कदाचित्प्रतिबुध्यते । **प्रतिबुद्धो** जागरितश्च **सर्वः** स्वप्नदृङ् **न तस्मिन्** गन्धारादौ **विद्यते ।** अवितथत्वे तु स तत्र विद्येतैव ॥

उक्तं द्वितीयमेव हेतुं प्रपञ्चयन्नाह—

**मित्राद्यैः सह संमन्त्र्य प्रबुद्धो न प्रपद्यते ।**
**गृहीतं चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति ॥३५॥**

इतश्च मिथ्या स्वप्नदृश्या भावाः । न केवलं स्वप्नदृग्देशान्तरं गत्वा प्रतिबुद्धः स्वयमेव तत्र न विद्यते । अपि तु स्वप्ने यैर्मिथः संमन्त्रयते तानपि न पश्यतीत्याह । स्वप्ने कश्चिन्मित्राद्यैः **सह संमन्त्र्य** प्रबुध्यते । **प्रबुद्धो** जागरितस्तु तान्मित्राद्यान्न **प्रपद्यते** प्राप्नोति । तेषामभावात् । **अपि च** स्वप्ने **यत्किञ्चिद्** वस्तु तेन **गृहीतं** लब्धं **प्रतिबुद्धः** स्वप्नदृक्तदपि **न पश्यति** ॥

इतोऽपि मिथ्या स्वप्नदृश्या भावाः। यथा च स्वप्नदृश्या भावा मिथ्या तथा सर्वे जाग्रद्दृश्या अपि भावा इत्याह—

**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात्।**
**यथा कायस्तथा सर्वं चित्तदृश्य[1]मवस्तुकम् ॥३६॥**

५ **स्वप्ने** स्वप्नदृशो यः **कायो** देहो येनायमितश्च ततश्च तेषु तेषु कर्मसु प्रवर्तते तांस्तांश्च देशान् गच्छति सोऽ**वस्तुको** मिथ्याभूतो न वस्तुसन्। किं कारणम्। स्वापदेशस्थित**स्यान्यस्य** कायस्य **पृथग्** भिन्नं यथा स्यात्तथा दर्शनात्। दृश्यतेऽन्य एव हि स कश्चिद्देहो येन स्वप्नक्रिया क्रियते। अन्य एव च स योऽधिष्ठितः पुरुषेण। येन च १० क्रियन्ते तेन जागरिते कृत्यानि। किञ्च। **यथायं** स्वाप्नः **कायस्तथा सर्वमिदं** जगत्केवलं **चित्तदृश्यं** चित्तेन मनसा विज्ञानेन दृश्यं ग्राह्यम्। अत एव **चावस्तुकं** मिथ्याभूतम्। नास्य वस्तुतः सत्त्वमस्ति ॥

अथ स्वप्नजागरितयोः स्वरूपमाह येन तद्दृश्यानां भावानामपि स्वरूपमवगम्येत—

१५ **ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते।**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥३७॥**

**जागरितवज्** जागरित इव **ग्रहणाद्** ग्राह्यग्राहकरूपेण दर्शनात्। यथा जागरिते गवाश्वहस्तिपुरुषादयो गृह्यन्ते स्वप्नेऽपि ते तथैव गृह्यन्ते तस्मात्स्**वप्नस्तद्धेतु**स्तन्निमित्तकः। तच्छब्देनेह पूर्वोक्तं जागरितं परा- २० मृश्यते। ततश्च स्वप्नो जागरितनिमित्तक **इष्यते**। यस्माज्जाग्रद- वस्थायामिव तेषां तेषां विषयाणां ग्रहणात्स्वप्नो भवति। अग्रहणात्तु न भवति। तस्मादवगम्यते जागरितनिमित्तकः स्वप्न इत्यभिप्रायः। एतच्च संस्कारद्वारा। **जागरितं तु तद्धेतुत्वा**त्तस्य स्वप्नस्य निमित्तत्वात् **तस्य** ग्रहीतुरेव। नान्यस्य **सद्** वस्तुसत् सत्य**मिष्यते** ॥

---

[1] ४. २८, ३६, ७७। एतदेवान्यत्र (३. ३१) मनोदृश्यमित्युक्तम्।

२५

यथा स्वप्नद्रष्टुरेव स्वप्नदृश्या भावाः प्रतीयन्ते नान्यस्य ।[1] न स्वप्न-जागरितयोर्विशेषः । उभयत्राप्यसन्त एव भावाः केवलं चित्तेन गृह्यन्ते ॥[2]

किं सर्वथैव नास्ति स्वप्नजागरितयोर्विशेषः । न नास्ति सर्वथा लौकिकानाम् । अतिस्तोकस्त्वेषः । कः पुनरेषः । आह—

**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।**
**असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥३८(३९)**

**जागरिते** वस्तुतो**ऽसद्**विद्यमानमेव कल्पितं किमपि **दृष्ट्वा तन्मय**स्तद्भावभावितः सन्कश्चित्स्वप्ने जागरितदृष्टं तदसत्**पश्यति । स्वप्नेऽपि च असदेव दृष्ट्वा प्रतिबुद्धः** प्रबुद्धः **संस्तन्न** पश्यति ।[3] यद्यपि स्वप्ने जागरिते चोभयत्रासदेव दृश्यते तथापि जागरितदृष्टं स्वप्ने दृश्यते । स्वप्नदृष्टं तु जागरिते न दृश्यत इत्ययं विशेषः ॥

परीक्षकाणां त्वविशेष एवेत्याह—

**विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत्[4] ।**
**तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥३९(४१)**

**यथा जाग्र**ज्जागरिते ( ३. २९; ४. ३०, ६१, ६२; बृ. उ. ४. ३ १४, २० शा. भा. ) **विपर्यासा**दविवेकाद्भ्रमाद्वा **अचिन्त्यां**श्चिन्तयितु-मप्यशक्यान् भावान्मरुमरीचिकादीन् **भूतवत्**परमार्थवत् **स्पृशेद्**नुभवेत्

---

१ । "तज्जागरितं हेतुरस्य स्वप्नस्य स स्वप्नस्तद्धेतुर्जागरितकार्यमिष्यत" इति । "तस्यैव स्वप्नदृश एष सज्जागरितं न त्वन्येषा"मिति च शङ्करः ।

२ । इहोत्तराश्चतस्रः कारिकाः ( ३८-४१ ) प्रचलत्सु संस्करणेषु परीक्षितेषु च बहुषु लिखितेषु पुस्तकेषु केनापि कारणेन व्युत्क्रमं विन्यस्ता इति प्रतिभाति । तथा हि अङ्कतः ३२-३७, ३९, ४१ कारिकाणामन्यो विषयः ( स्वप्न इव जाग्रत्यपि भावानां मिथ्यात्वम् ) । अन्यश्च ( जातिनिरासः ) अङ्कतः ३८, ४०, कारिकयोः । तयोश्चान्योन्यसम्बन्धो नोपपद्यत इत्युपेक्ष्यापि मया पाठक्रमं यथामत्यर्थक्रमो गृहीतः । पाठक्रमस्तु प्रदर्शितः कोष्ठकान्तर्गतेनाङ्केन ।

३ । "यथैव कामान्स्वपिनान्ति सेविय
प्रतिबुद्धुवन्तः पुरुषो न पश्यति ।" स. रा. सू. ९. १९ ।

४ । स्पृशेरीदृशार्थे प्रयोगोऽन्यत्रापि ( ४. २७ ) द्रष्टव्यः ।

पश्येदिति भावः। **तथा स्वप्ने विपर्यासात्तत्रैव** स्वप्नावस्थायामे**व धर्मान्** स्वप्नदृश्यान्भावान्पश्यति॥

स्वप्न इव जागरितेऽपि न परमार्थत उपपद्यते भाव इति प्रतिपाद्य पुनरपि प्राधान्येन प्रतिपिपादयिषितमजातिवादमाह—

५ **उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्।**
**न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन॥४०(३८)**

कस्यापि वस्तुन उत्पादस्याप्रसिद्धत्वादनिष्पन्नत्वादप्रतिष्ठितत्वात् प्रमाणकोटावनवगाहाद् यथा प्राक्प्रदर्शितं तथा **सर्वमजमुदाहृतम्।** नास्ति किञ्चिद्यज्जायत इत्युक्तम्। जायमानं किल कल्प्यमानं भूतात्सतो १० वा सम्भवेत्। अभूतादसतो वा (४. ३, ४) सम्भवेदिति कल्प्येत। उभयथापि नोपपद्यते। तत्र तावद् **भूतादभूतस्य** सम्भवो **न कथञ्चनास्ति।** न ह्यभूतस्य शशविषाणस्य कथञ्चित्कुतश्चित्सम्भवोऽस्ति॥

यथा चान्यथापि न कथञ्चिदस्त्युत्पादस्तथा हेतुफलभावं वित्रृण्वन्नाह—

**नास्त्यसद्धेतुकमसत् सदसद्धेतुकं तथा।**
१५ **सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः॥४१(४०)**

अत्र चतस्रः कोट्यः। (१) असन्हेतुर्यस्य वस्तुनस्त**दसद्धेतुकम्।** ईदृश**मसन्नास्ति।** असतोऽसन्न सम्भवतीत्यर्थः। **तथा** (२) **असद्धेतुकं सन्नास्ति।** तथा असतः सदपि न सम्भवतीत्यर्थः। (३) **सद्धेतुकं सच्च नास्ति।** सतः सन्न सम्भवतीत्यर्थः। २० (४) **सद्धेतुकमसत्कुतः** सम्भवति। सतोऽप्यसन्न भवतीत्यर्थः। तदेतदुक्तं नागार्जुनेन (म. का. २१. २२)

"(३) नाभावाज्जायते भावो (२) भावोऽभावान्न जायते।
[(१) नाभावाज्जायतेऽभावो(४)ऽभावो भावान्न जायते॥" ][१]

अयं चार्थो विवृतो विस्पष्टं तत्र मध्यमकवृत्तौ चन्द्रकीर्तिना। २५ द्रष्टव्याश्चात्रैता मध्यमककारिकाः—

१। द्वितीयार्धस्य मूलं नष्टम्। भोटपाठो लभ्यते। तस्यैवेयं पोषणपण्डितकृता संस्कृतच्छाया। इयं च कारिका चतुःशतके (३६४=१९. १४) आर्यदेवेन गृहीता।

"सद्भूतः कारकः कर्म सद्भूतं न करोत्ययं।
कारको नाप्यसद्भूतः कर्मासद्भूतमीहते ॥" ८. १॥
"सता च क्रियते नासन्नासतः क्रियते च सत्।
कर्त्रा सर्वे प्रसज्यन्ते दोषास्तत्र त एव हि ॥" ८. ८॥
"नासद्भूतोऽपि सद्भूतं सदसद्भूतमेव वा। ५
करोति कारकः कर्म पूर्वोक्तैरेव हेतुभिः ॥" ८. १०॥

अथैवं निरस्तेऽपि जातिवादे पुनरप्येष आशङ्क्य निरस्यते। सन्त्युक्तयो युक्तयश्च बह्व्यो यतः स्पष्टमेव प्रतीयत उत्पादः। तत्र तावत्सुप्रथितो भगवतां बुद्धानां तद्विनेयानां च प्रतीत्यसमुत्पादः। हेतुप्रत्ययापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादः। अस्मिंश्चाभ्युपगते १० नन्वभ्युपगत एवोत्पादः। किञ्च "बुद्धा भगवन्त उत्पन्ना" इति। (प. प्र. पा., पृ. ६)। "पञ्चेन्द्रियाण्युत्पत्स्यन्त" इति (पृ. ७६)। "अर्हन्तः सम्यक्सम्बुद्धा लोक उत्पत्स्यन्त" इति (पृ. ६१)। अपि च। "त्रीणीमानि भिक्षवः संस्कृतस्य संस्कृतलक्षणानि। संस्कृतस्य भिक्षव उत्पादोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यथात्वमपीति। न चाविद्यमानस्य १५ खरविषाणस्येव जात्यादिलक्षणम्" (म. वृ., पृ. १४५; अ. नि. १, पृ. १६२) इत्यादिभिर्वचनैरतिविस्पष्टं प्रतीयत उत्पादः। तस्मादस्ति जातिः।

अत्राह। सत्यं भोः। न खलु न प्रतीयते जातिः। अभिप्रायं तु भवांस्तेषां तथागतवचनानां नावगच्छति। नीतार्थानि हि सूत्राणि भवान्नेयार्थानि नेयार्थानि च नीतार्थानि करोति। न तु तदुपपद्यते। २० तद्भवान्भूतार्थं श्रोतुमर्हति—

**उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम्।**
**जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥४२॥**

अस्त्येषां गवाश्वादीनां वस्तुत्वमिति। अस्ति वस्त्विति वा ये वदन्ति **तेऽस्तिवस्तुत्ववादिनः।** गवाश्वादयो न केवलं स्वाप्नप्रपञ्चा इव २५ प्रज्ञप्तिमात्रम्। अपि तु वस्तुसन्त एव त इति येषां लब्धिस्ते**ऽस्तिवस्तुत्ववादिनः।** तेषाम्। ते च हीनमध्यमोत्कृष्टेषु त्रिविधेषु तथागतशिष्येषु हीनाः। किं कारणं तेऽस्तिवस्तुत्ववादिनः। **उपलम्भादु**पलब्धेरनुभवात्। गौरयमश्वोऽयमित्यादिप्रत्ययत्वात्। **समाचाराद्**

व्यवहाराच्च। गौर्नीयते। उदकमाह्रियते। अश्वो वाह्यत इत्यादि-व्यवहाराच्च वस्तुत एवैतत्सर्वं विद्यत इति प्रतियन्ति लौकिकाः। मन्यन्ते च तदुत्पद्यत इति। न शक्नुवन्ति ते सोढुमतिगम्भीरस्यानुत्पादतत्त्वस्य[1] नामाप्याकर्णयितुम्। तस्मादेवानुत्पादात्त्रसतां[2] कम्पमानानां बिभ्यतां पुंसां सम्बन्धे बुद्धैस्तथागतैर्जातिर्देशितोपदिष्टा। महाकारुणिका हि बुद्धाः। ते खलु विनेयानां करुणावशंवदा ये यथा प्रतिपद्यन्ते तांस्तथैव बोधयन्तस्तत्त्वमवतारयन्ति। स एषामवतारणसन्धिरित्युच्यते। सन्धिरिहाभिसन्धिः। तदुक्तं बो धि चि त्त वि व र णे (भोटपाठे ६७-६८)—

"देशना लोकनाथानां सत्त्वाशयवशानुगा।
भिद्यते बहुधा लोके उपायैर्बहुभिः किल॥"[3]

तदिदं बुद्धानामुपायकौशल्यमित्युच्यते। इदं चोक्तमन्यत्र (ल. सू., पृ. ४८-४९)—

"कृत्वा धर्मेष्ववस्थानं तत्त्वं देशेमि योगिनां।
तत्त्वं प्रत्यात्मगतिकं कल्प्यकल्पेन वर्जितं॥
देशेमि जिनपुत्राणां नेयं बालान देशना॥
विचित्रा हि यथा माया दृश्यते न च विद्यते।
देशनापि तथा चित्रा देश्यते व्यभिचारिणी॥
देशना हि यदेकस्य तदन्यस्याप्यदेशना।
आतुरे आतुरे यद्वद्भिषग्द्रव्यं प्रयच्छति॥"

---

१। यथानुत्पादस्यैवं नैरात्म्यस्य शून्यतायाश्च। तदुक्तं च न्द्र की र्ति ना—

"अद्वितीयं शिवद्वारं कुदृष्टीनां भयङ्करं।
विषयः सर्वबुद्धानामिति नैरात्म्यमुच्यते॥
अस्य धर्मस्य नाम्नोऽपि भयमुत्पद्यतेऽसतः।
बलवान्नाम को दृष्टः परस्य न भयङ्करः॥"

च. श. २८८—२८९।

२। उपः—"अपवर्गे भीष्मः खल्वयं सर्वकार्योपरमः। सर्वविप्रयोगेऽपवर्गे बहुभद्रकं लुप्यत इति कथं बुद्धिमान्सर्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति।" न्या. सू (१. १. २) वा त्स्या य न भाष्यम्।

३। कुत्रचित्किलेत्यत्र पुनरिति पाठः। अयं श्लोको धृतो बौद्धदर्शन विचारणायाम् (स. द. स, पृ. ४९।

द्रः १०. ६११-६१३ ( पृ. ३४०-३४१ ) ; स. पु., पृ. १४-१५। इदं चोक्तमा चा र्य पा दैः ( ना गा र्जु नैः )—

"यथैव वैयाकरणो मातृकामपि पाठयेत् ।
बुद्धोऽवदत्तथा धर्मं विनेयानां यथाक्षमं ॥
केषाञ्चिदवदद्धर्मं पापेभ्यो विनिवृत्तये । ५
केषाञ्चित्पुण्यसिध्यर्थं केषाञ्चिद्द्वयनिश्रितं ॥
द्वयानिश्रितमेकेषां गम्भीरं भीरुभीषणं ।
शून्यताकरुणागर्भं केषाञ्चिद्बोधिसाधनं ॥"

म. वृ., पृ. ३५६-३६०।

द्रष्टव्यं चेदम्— १०

"आह। यदेतदुक्तं भगवता संस्कृता उत्पद्यन्ते निरुध्यन्ते चेत्यस्य तथागतभाषितस्य कोऽभिप्रायः। आह। उत्पादनिरोधाभिनिविष्टः कुलपुत्र लोकसंनिवेशः। तत्र तथागतो महाकारुणिको लोकस्योत्त्रास-परिहारार्थं व्यवहारवशादुक्तवानुत्पद्यन्ते निरुध्यन्ते च। न चात्र कस्यचिद्धर्मस्योत्पादो न निरोध इति।" १५

शि. स., पृ. २६३, बो. अ. प., पृ. ५८६।

द्रः म. नि. १. १३६-१३७ ; स. रा. सू., पृ. ७०-७१।

यथा चोक्तं म हा या न सू त्रा ल ङ्का र सू त्रे ( १२. १६. १७ )—

"तत्रावतारणाभिसन्धिः श्रावकेषु द्रष्टव्यः। शासनावतारणार्थ-मनुत्त्रासाय रूपाद्यस्तित्वदेशनात्।" २०

अन्यच्च—

"नानवधार्य यथार्थं शून्यतां कश्चिच्छक्तः संसारे सङ्गमवधूय निर्वाणस्पृहामुत्पादयितुम्। स च शून्यतार्थो जगतामतीवोत्त्रासकरत्वाद-प्रियावेदननिपुणपुरुषेण राज्ञः प्रियभार्यामरणक्रमावेदनसौमनस्योत्पादनवत् कयापि युक्त्या विदुषावतार्यः।" इति २५

च तुः श ति का यां (पृ. ५१४) च न्द्र की र्तिः।

"अस्तित्वनास्तित्वदृष्टिपतितानां तेषामुत्त्रासः स्यादिति उत्त्रास्यमाना महामते दूरे भवन्ति महायानात्।" ल. सू., पृ. १६७।

"एतानि काश्यप पञ्चभिक्षुशतानि दृष्टिप्रस्कन्धानीमां गम्भीरां धर्मदेशनां नावतरन्ति नावगाहन्ते नाधिमुच्यन्त उत्त्रस्यन्ति संत्रस्यन्ति संत्रासमापद्यन्ते।" ३०

म. वृ. पृ. ३२७-३२८ धृतं का. प. ( = र. कू. ) वचनम्।

"एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। अलं शारिपुत्र एतेनार्थेन भावितेन। तत्कस्य हेतोः। उत्त्रसिष्यति शारिपुत्रायं सदेवको लोकोऽस्मिन्नर्थे व्याक्रियमाणे।" स. प्र. २, पृ. ३६।

अथ तेषां पुरुषाणामजातिदेशनया को गुण इत्याह—

५ **अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये।**
**जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति ॥४३॥**

**येऽजातेस्त्र**सन्ति कम्पन्ते बिभ्यति **तेषां त्रसतां** त्रासापकरणाय बुद्धा जातिं देशयन्ति। श्रुततद्देशना अपि ये ते विनेया **उपलम्भादु**पलब्धे**र्वियन्ति** विरुद्धं गच्छन्ति तत्त्वाद्
१० भ्रश्यन्ति वस्तुतोऽजातावपि जातिरस्तीत्यध्यवस्यन्तः। तेषां **जातिदोषा** अस्ति जातिरित्यध्यवसायकृता अहङ्कारममकारादिरूपाः क्लेशहेतुका **दोषा न सेत्स्यन्ति** सम्पत्स्यन्ते। यद्यजातावपि जात्युपदेशान्मिथ्याप्रतिपत्तिरूपः कश्चन दोषो दुर्निवार एव तथापि नैष स तावानतिगुरुर्भविष्यतीत्युच्यते **दोषोऽप्यल्पो भविष्यतीति।**
१५ अयमभिप्रायः। भवन्नपि तेन कश्चिद्दोषो न स तथा भविष्यति यथाशक्यप्रतीकारो दुष्करप्रतीकारो वा भवेत्। यथा वस्तुतोऽभयेऽपि भयमित्युक्तो बालः कुतश्चिन्निवृत्तः पश्चाद्वेत्ति भयेऽविद्यमानेऽपि केवलं तस्मान्निवर्त्तनायाहं तथोक्तः। तच्च मे कल्याणायाकल्पतेति। एवमिहापि॥

२० उपलम्भात्समाचाराच्चास्ति वस्त्वित्युच्यते (४. ४२)। न पुनरेतदेतावता सिध्यतीत्याह—

**उपलम्भात्समाचारान्मायाहस्ती यथोच्यते।**
**उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥४४॥**

**यथा उपलम्भात्समाचाराच्च मायाहस्ती** मायाकृतो हस्ती
२५ अस्तीति कैश्चिदुच्यते। **तथा उपलम्भात्समाचाराच्च वस्त्वस्तीति** उच्यते। यथा चोपलभ्यमानोऽपि व्यवह्रियमाणोऽपि च

मायाहस्ती वस्तुतो न वर्तत एवमुपलभ्यमानमपि व्यवह्रियमाणामपि च गवाश्वादि न विद्यते। न चोत्पद्यते। शशविषाणवत्॥[1]

अस्तु तावन्मायाहस्तिवदस्ति वस्त्वित्युपलब्धिर्यथा भवान्मन्यते। अथास्ति किञ्चिन्नास्ति वा। न खलु नास्तीत्याह। किं पुनस्तदित्युच्यते— ५

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च।**
**अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥४५॥**

**शान्त**मुपशान्तमप्रवृत्तम्। अत एवा**द्वयं** ग्राह्यग्राहकरहितं **विज्ञानम्** इदमेवास्ति। एतच्च न जायत इत्य**जम्**। न चलति प्रवर्तत इत्य**चलम्**। न चास्ति कश्चिद्वस्तुधर्मोऽस्येत्य**वस्तुत्वम्**। १० किञ्चाजमप्येतज्जायत इवाभासत इति **जात्याभासम्**। अचलमपि चलतीवाभासत इति **चलाभासम्**। तथैव वस्तुधर्मविरहितमपि वस्तुवदाभासत इति **वस्त्वाभासम्**। अत्र विज्ञानं नाम चित्तम्। न वेदान्तिनां ब्रह्म।[2] अत एवेदमुत्तरकारिकायां (४. ४६) चित्तशब्देन परामृश्यते। चित्तं मनो विज्ञानमित्यनर्थान्तरम्। तदुक्तं १५ **वसुबन्धुना**—

---

१। मायाहस्तिदृष्टान्तः सौगतग्रन्थेष्वेवमुक्तः—

"मायाहस्ती यथा चित्रं पत्राणि कनका यथा।
तथा दृश्यं नृणां ख्याति चित्ते अज्ञानवासिते॥"

ल सू. १०. १२६। २०

"मायाकृतं मन्त्रवशात्ख्याति हस्त्यात्मना यथा।
आकारमात्रं तत्रास्ति हस्ती नास्ति तु सर्वथा॥
स्वभावः कल्पितो हस्ती परतन्त्रस्तदाकृतिः।
यस्तत्र हस्त्यभावोऽसौ परिनिष्पन्न इष्यते॥"

त्रि. नि. २७-२८। २५

द्र: म. सू. टी., पृ. ७२।

२। **भाष्यकारो** विज्ञानमिह विज्ञप्तिमाह। उत्तरकारिकायां (४. ४६) तु स एनदात्मत्वेन व्याचष्टे ("एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्त इति")।

"चित्तं मनोऽथ विज्ञानमेकार्थम् ।" इति ।

अ. को. २. ३४ ।

"चित्तं विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च ।
आलयस्त्रिभवश्चेष्टा एते चित्तस्य पर्ययाः ॥"

५ ल. सू. १०. ४४६ ।[1]

अत्र फलितमाह—

**एवं न जायते चित्त[2]मेवं धर्मा अजाः स्मृताः ।**
**एवमेव विजानन्तो न पतन्ति विपर्यये ॥४६॥**

**एवं चित्तं न जायते । एवं सर्वे धर्माः**[3] पदार्था
१० **अजाः स्मृताः ।** धर्मा अपि न जायन्त इति भावः । **एवमेव विजानन्तो**ऽवगच्छन्तो **विपर्यये** भ्रमे **न पतन्ति ॥**

इदमेव तत्त्वमुत्तरासु कासुचित्कारिकासु ( ४. ४७-५२ ) अलातदृष्टान्तेन स्पष्टीक्रियते—

**ऋजुवक्रादिकाभासमलातं स्पन्दितं यथा ।**[4]
१५ **ग्रहणग्राहकाभासं विज्ञानं स्पन्दितं तथा ॥४७॥**

**यथा स्पन्दितं** चलितं चञ्चलमिति भावः । **अलात**मुल्मुकम् **ऋजुवक्रादिकाभासं** सरलरेखावद् वक्ररेखादिवच्चाभासते । **तथा विज्ञानं** चित्तं **स्पन्दितं** वासनया क्षुभितं सद् **ग्रहणग्राहकाभासम्** । ग्रहणशब्दोऽत्र कर्मसाधनो गृह्यत इदमिति । तथा च

---

२० १ । उपः स. नि. २. ९४ ; दी. नि. १. २१ ।

२ । "एवं न जायते किञ्चि"दिति । यो. वा. ३. १३. १५ ।

३ । "धर्मा आत्मान" इति । "धर्मा इति बहुवचनं देहभेदानुविधायित्वाद्-द्वयस्यैवोपचारतः" इति च भाष्यकारः । अन्यत्र तु (४. ५८) "येऽप्यात्मानोऽन्ये च धर्मा" इति स एव ।

४ । अत्रैतासु पञ्चसु कारिकासु ( ४. ४७-५१ ) अलातशब्दस्य स्पन्दितेन
२५ प्रयोगमुपमिमानस्य प्रथमार्धे अलातं स्पन्दितमित्येव पाठः श्रेयान्प्रतिभायाच्च पुनरलातस्पन्दितमिति । उत्तरार्धे च विज्ञानं स्पन्दितमित्यत्र विज्ञानस्पन्दितमिति पाठः केषुचित्पुस्तकेषु दृश्यते । द्रः चित्तस्पन्दितमिति ( ४. ७२ ) ।

ग्राह्यवद्ग्राहकवच्चाभासत इति तदर्थः। विज्ञानमेव ग्राह्यग्राहकभावेनाभासत इति भावः।

अलातस्पन्दितमिति विज्ञानस्पन्दितमिति च पाठे अलातस्य विज्ञानस्य च स्पन्दितं स्पन्दनं चलनमिति भावसाधनतया व्याख्येयम्॥

**अस्पन्दमानमालातमनाभासमजं यथा।**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा॥४८॥**

अलातमेव आलातमिति कोशेषु। **यथालातमुल्मुकमस्पन्दमानमचलमप्यदनाभासम्**[1] ऋजुवक्राद्याकारेण नाभासत **इत्यनाभासम**भासरहितम्। एवं **चाजं** न केनापि रूपेण जायत इति तथोक्तम्। **तथा विज्ञानम**पि अस्पन्दमान**मनाभासं** ग्राह्यग्राहकाभासरहित**मजं** च भवति॥

अपि च—

**अलाते स्पन्दमाने वै नाभासा अन्यतोभुवः।**
**न ततोऽन्यत्र विज्ञानान्नालातं प्रविशन्ति ते॥४९॥**[2]

**अलाते स्पन्दमाने** ऋजुवक्रादिकाकारा **आभासा** अलातादन्यतोऽपरस्मात् कुतश्चिन्न भवन्तीति **नान्यतोभुवः**। न च मन्तव्यं **ते** खल्वाभासा**स्ततो** विज्ञानादन्य**न्यत्रा**न्यस्मिन् क्वाप्युद्भूय तत्रागताः। निस्पन्दे चालाते त आभासास्तस्मान्निस्पन्दादलाता**दन्यत्र** न क्वापि वर्तन्ते। न च तेऽलातमेव **प्रविशन्ति**॥

किञ्च

**न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः।**
**विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः॥५०॥**[3]

**ते** आभासा **अलातान्न निर्गता** भवन्ति। किं कारणम्। **द्रव्यत्वाभावयोगतः** वस्तुत्वाभावसम्बन्धात्। वस्तुभूतं हि

---

१ एतदेवान्यत्र (३. ३६) "अरूपकम्"।
२। ४. ६१।
३। ४. ६२।

किञ्चित्कुतश्चिन्निर्गच्छेत्प्रविशेद्वा कुत्रचित्। न पुनरवस्तुभूतम्। न चाभासा वस्तुभूताः। अतो न तेऽलातान्निर्गताः। यथालाते ऋजुवक्राद्याभासा **विज्ञानेऽपि** जात्याद्याभासा(४. ४५)**स्तथैव स्युः**। कुतः। **आभासस्याविशेषतः** अभेदात्। समाना ह्युभयत्राभासाः॥

५ दृष्टान्तमुपन्यस्य दार्ष्टान्तिकमुपन्यस्यति—

**विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुवः।**
**न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते॥५१॥**[1]

**विज्ञाने स्पन्दमाने वै आभासा** जात्यादिरूपा विज्ञानादन्यतो भवन्तीत्य**न्यतोभुवो न** भवन्ति। **निस्पन्दात्तत**स्तस्मा-
१० द्विज्ञाना**दन्यत्र ते** आभासा **न** वर्तन्त। **न च ते** विज्ञानं विशन्ति॥

अपि च।

**न निर्गतास्ते विज्ञानाद्द्रव्यत्वाभावयोगतः।**
**कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते॥५२॥**[2]

पूर्वार्धः प्राक्(४. ५०) प्रदर्शितेन नयेन व्याख्येयः। नाभासानां
१५ विज्ञानेन सह कार्यकारणतासम्बन्धोऽस्ति येन विज्ञानादाभासा भवेयुः। कथं कृत्वा पुनर्ज्ञायते सा कार्यकारणता नास्तीति। **यतस्त** आभासाः **सदैव अचिन्त्या**श्चिन्तयितुमशक्याः। तेषामशक्यचिन्तनत्वात्तत्कार्यकारणताप्यचिन्त्या॥

तदिदमखिलं विज्ञानवादिनां सौगतानां मतम्। बहु चात्रत्यमधिगम्यते तदीयेषु ग्रन्थेषु। स्तोकमात्रं यथा।
२०
"स महाराज तावानन्धातुरुत्पद्यमानो न कुतश्चिदागच्छति। निरुध्यमानो न क्वचिद्गच्छतीति" शि. स. (पृ. २४७)-धृतं पि ता पु त्र स मा ग म सू त्र म्।

---

१। ४. ५२।
२। ४. ५०।

"एवमेव कुलपुत्र तेषां तथागतानां कायपरिनिष्पत्तिर्न कुतश्चिद्दश दिशि लोकादागता नापि क्वचिद्दश दिशि लोके गच्छति।° तद्यथापि नाम कुलपुत्र वीणायाः शब्द उत्पद्यमानो न कुतश्चिदागच्छति निरुध्यमानोऽपि न क्वचिद्गच्छति न क्वचित्संक्रमति।"

अ. प्र. पा., पृ. ५१५—५१६। ५

"अन्यतो नापि चायातं न तिष्ठति न गच्छति।
मायातः को विशेषोऽस्य यन्मूढैः सत्यतः कृतम्॥
मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितं।
आयाति तत्कुतः कुत्र याति चेति निरूप्यतां॥"

बो. अ. ६. १४३-१४४। १०

"आगच्छत्यन्यतो नाग्निरिन्धनेऽग्निर्न विद्यते। म. का. १०. १३।

"अथ पण्डितु कश्चि मार्गते
कुतऽयमागतु कुत्र याति वा।
विदिशा दिश सर्वि मार्गतो
नागतिर्नास्य गतिश्च लभ्यति॥" १५

शि. स., पृ. २४०; म. वृ., पृ. २१६ ; बो. अ. प., पृ. ५३२।

"उत्पन्नस्यागतिर्नास्ति निरुद्धस्य गतिस्तथा।
एवं सति कथं नैव भवो मायोपमो भवेत्॥" च. श. ३६०।

इयं छाया भोटपाठस्य।

पूर्वं (४. १४-१८, ५२) हेतुफलभावश्चिन्तितः। प्रसङ्गात्पुनरिहापि स २० चिन्त्यते सिषाधयिषितस्य सिद्धये सर्वत्रायमपेक्ष्यत इति उपक्रम्यैनमनन्तरातीतायां कारिकायां (४. ५२) कार्यकारणताभावादिति—

**द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि।**
**द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते॥५३॥**

हेतुफलभावे कल्प्यमाने **द्रव्यं** खलु किञ्चित्कस्यापि **द्रव्यस्य** २५ **हेतुः स्यात्**। यथा बीजमङ्कुरस्य। किञ्च। **अन्य**द्द्रव्यमन्यस्य द्रव्यस्य हेतुः स्यात्। न पुनस्तदेव द्रव्यं तस्यैव द्रव्यस्य। न खल्वङ्कुर एवाङ्कुरस्य हेतुः क्वापि केनापि कदाचिद्दृष्टः। तत्त्वपरीक्षायां तु

**धर्माणां** पदार्थानां **न द्रव्यत्वं न वा अन्यभावो**ऽन्यत्वमुपपद्यते। कथं कृत्वा। त्रीणि खलु द्रव्यस्य द्रव्यलक्षणानि। द्रव्यस्योत्पादोऽपि स्यात्। व्ययोऽपि स्यात्। स्थितिरपि स्यात्।[1] न त्वीदृशं द्रव्यं नाम किञ्चित्सिध्यति। यथा च न सिध्यति तथा परीक्षितं नागार्जुनेन मध्यमककारिकायां सप्तमे प्रकरणे व्याख्यातं च चन्द्रकीर्त्तिना तत्रैव महता प्रयासेन। यथा च धर्माणामन्यभावोऽपि न सिध्यति तथोपपादितं ताभ्यां तत्रैवाग्नीन्धनदृष्टान्तेन दशमप्रकरणे। तथा हि—

> "यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्मणोः।
> अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत्॥" १०. १।
> "अग्नीन्धनाभ्यां व्याख्यात आत्मोपादानयोः क्रमः।
> सर्वो निरवशेषेण सार्धं घटपटादिभिः॥" १०. १५। इति॥

एवं न वस्तुतो हेतुफलसिद्धिरिति दर्शयति—

**एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम्।**
**एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः॥५४॥**[2]

**एवं** कार्यकारणताया अभावान्न **धर्मा** भावा**श्चित्तजाश्चित्ततो** विज्ञानतो जायन्ते। **न वापि चित्तं** धर्मजं धर्मेभ्यो जायते। **एव**-

---

१। कश्चित्पुनः स्थितिरित्यत्र स्थित्यन्यथात्वमिति दृश्यते। म. वृ., पृ. १४९; अ. नि., पृ. १९२। यदिह द्रव्यं सौगतैस्तु तत्कचित्संस्कृतमित्युच्यते। हेतुप्रत्ययैः संगत्य क्रियत इति संस्कृतम्। न सौगतानां द्रव्यं नाम कश्चिद्वैशेषिकाणामिव गुणाश्रयः। तन्मते "विद्यमानं द्रव्य"मिति। यस्स्वलक्षणतो विद्यमानं तद्द्रव्यम्। षड् द्रव्याणि श्रामण्यफलानीति रूपस्कन्धादीनि पञ्च संस्कृतानि श्रामण्यफलानि। असंस्कृतं च षष्ठमिति षड् द्रव्याणि भवन्ति। इत्यभिधर्मकोशव्याख्या, ९. २९०। यथार्हतानामपि द्रव्यं न गुणाश्रयस्तथा प्रागेव (४. १) दर्शितम्।

२। ४. ४६।

मित्थं मन्वाना **मनीषिणो हेतुफलाजातिं** हेतुफलयोः कार्यकारणयो-रनुत्पत्तिं **प्रविशन्ति** अवतरन्ति तत्त्वमवगाहन्त इति भावः ॥

यत्पुनः केचिद्धेतुफलयोर्जातिं मन्यन्ते तत्र कारणमाह—

**यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ।**
**क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥५५॥** ५

**याव**त्पर्यन्तं कस्यापि **हेतुफलावेशो** हेतुफलयोरभिनिवेश[1] आग्रह**स्ताव**त्पर्यन्तं **हेतुफलोद्भवः** प्रतीयते । **क्षीणे** नष्टे पुनः **हेतुफलावेशे हेतुफलोद्भवो नास्ति ।** अत्रेदमुक्तम्—

"तद्यथापि नाम पुरुषः सुप्तः स्वप्नान्तरे पिशाचेन परिताप्यमानो भीतः सम्मोहमापद्यते । स शयितविबुद्धस्तं पिशाचं तेन च मोहमनुस्मरेत् । १० तत्किं मन्यसे महाराज संविद्यते स्वप्ने पिशाचः सम्मोहो वा । यावदेवमेव महाराज बालोऽश्रुतवान्पृथग्जन[2]श्चक्षुषा रूपाणि दृष्ट्वा उपेक्षास्थानीयान्यभिनिविशते । अभिनिविष्टः सम्मुह्यति । मूढो मोहजं कर्माभिसंस्करोति ।" शि. स., पृ. २५४ ।

अपि च १५

"बालो मञ्जुश्रीरश्रुतवान्पृथग्जनोऽत्यन्तपरिनिर्वृतान् सर्वधर्मान-प्रजानान आत्मानं परं चोपलभते । उपलभ्य[ाभि]निविशते । अभिनिविष्टः सन् [ रज्यते दुष्यते मुह्यति । स रक्तो दुष्टो मूढः सन् ] त्रिविधं कर्माभिसंस्करोति कायेन वाचा मनसा ।" म. वृ., पृ. २६६ ।

अन्यच्च २०

"यस्तु भावस्वरूपमध्यारोप्य तद्विगमाविगमत एता दृष्टी-रुत्पाद्याभिनिविशते तस्यायमभिनिवेशो निर्वाणपुरगामिनं पन्थानं विरुणद्धि सांसारिकेषु च दुःखेषु नियोजयतीति विज्ञेयम् ॥ म. वृ., पृ. ५३७ ।

---

१ । अस्यामुत्तरस्यां ( ५६ ) च कारिकायां य एव आवेशः स एवोपरिष्टा-दभिनिवेश ( ४. ७५, ७९ ) इत्युक्तः । २५

२ । "यस्य पूर्वाभ्यासवासनानिर्जातोप( निर्जितोप ? )पत्तिर्लौकिकप्रज्ञा नास्ति स बालः । यस्यागमजा नास्ति सोऽश्रुतवान् । यस्याभिसमयजा नास्ति स पृथग्जनः ।" म. वृ. पृ. १३७ ( टिप्पणी ३ )—अ भि ध र्म को श-व्या ख्या तः ।

हेतुफलावेशाद्दोषं तत्क्षयाच्च संसारानुपपत्तिमाह—

**यावद्धेतुफलावेशः संसारस्तावदायतः ।**

**क्षीणे हेतुफलावेशे संसारो नोपपद्यते ॥५६॥**[1]

**यावद्** यावन्तं कालं **हेतुफलावेशस्ताव**त्तावन्तं कालमयं संसार **आयतो** विस्तीर्णः । **क्षीणे** क्षयं प्राप्ते तु **हेतुफलावेशे संसारो नोपपद्यते** न युज्यते । संसारस्य न काचिदुपपत्तिर्विद्यते ॥

हेतुफलभावचिन्ताप्रसङ्गात्सह सौगतैः शाश्वतवादमुच्छेदवादं च निरस्यन्नाह—

**संवृत्या**[2] **जायते सर्वं शाश्वतं तेन नास्ति वै ।**

**स्वभावेन**[3] **ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥५७॥**

इदं **सर्वं संवृत्या**[4] व्यवहारसत्येन **जायते** । **तेन** हेतुना **शाश्वतं** नित्यं किमपि **नास्ति वै** एव । यथा च पूर्वं प्रदर्शितं

---

१ । संसारं न प्रपद्यत इति बहुषु पुस्तकेषु चतुर्थपादपाठः ।

२ । ४. ७३ ।

३ । मया परीक्षितेषु सर्वेषु संस्करणेषु हस्तलिखितेषु च पुस्तकेषु सद्भावेनेत्येव पाठो लभ्यते न पुनः स्वभावेनेति । तथापि श्रेयानित्येष एव पाठो गृहीतः । सदृशेषु हि स्थानेषु ( ३. २२., ४. ८, १०, २३, ८१ ) आ चा र्यः स्वभावशब्दमेव प्रयुङ्क्ते । किञ्च । स आ चा र्य स्तमेवार्थं बोधयितुमन्यत्र ( ३. २१ ; ४. ९, २९, ९२, ९३, ९४ ) प्रकृतिशब्दं पठति । अतोऽत्रापि स तदर्थकमेव कमपि शब्दं पठितुमर्हति । न चात्र स्वभावमन्तरेणापरः कश्चित्साधिष्ठः शब्दो विद्यते । किञ्चान्यत्र ( ४. २९ ) "अजातं जायते यस्मादजातिः प्रकृतिस्तत" इति पठन्नेव आ चा र्यो ऽपि स्वभावेनेत्येव पाठं समर्थयते ।

४ । "द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥
योऽनयोर्न विजानन्ति विभागं सत्ययोर्द्वयोः ।
ते तत्त्वं न विजानन्ति गम्भीरं बुद्धशासने ॥
व्यवहारमनाश्रित्य परमार्थो न देश्यते ।
परमार्थमनागम्य निर्वाणं नाधिगम्यते ॥"

म. का. २४.८—० ।

(४. २१) स्वभावेन हि सर्वमजं न जायत इति। तथा कस्या-

इयं चात्र चन्द्रकीर्त्तेर्वृत्तिः—

"समन्ताद्वरणं संवृतिः। अज्ञानं हि समन्तात्सर्वपदार्थतत्त्वावच्छादनात् संवृतिरुच्यते। परस्परसंभवनं वा संवृतिरन्योन्यसमाश्रयेणेत्यर्थः। अथवा संवृतिः संकेतो लोकव्यवहार इत्यर्थः। स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षण" इति विस्तरः॥ ५

बुद्धघोष आह—

"दुवे सच्चानि अक्खासि सम्बुद्धो वदतं वरो।
सम्मुतिं परमत्थं च ततियं नूपलब्भति॥"

कथावत्थु-अट्ठकथा (पृ ३०); सुमङ्गलविलासिनी (दी नि, पृ. २५१—पोट्ठपादसुत्रम्)। १०

इयमस्य च्छाया—

"द्वे सत्ये आख्यत्सम्बुद्धो वदतां वरः।
सम्मतिं परमार्थं च तृतीयं नोपलभ्यते॥"

"सत्य इमे दुवि लोकविदूनां १५
दिष्ट स्वयं अश्रुणित्व परेषां।
संवृति या च तथा परमार्था
सत्यु न सिध्यति किं च तृतीयु॥"

पितापुत्रसमागमसूत्रम् (बो. च प., पृ. ३६१-३६२)।

"संवृतिः परमार्थश्च सत्यद्वयमिदं मतम्।" बो. अ. ९. २। २०

अत्राह पञ्जिका (पृ ३५२)। "संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृतप्रकाशनाच्चानयेति संवृतिः। अविद्या मोहो विपर्यास इति पर्यायाः।"

इदं चोक्तं मध्यमकावतारे (६. २८)—

"मोहः स्वभावावरणाद्धि संवृतिः २५
सत्यं तया ख्याति यदेव कृत्रिमं।
जगाद तत्संवृतिसत्यमित्यसौ
मुनिः पदार्थं कृतकं च संवृतिं॥"

बो. अ. प., पृ. ३४३ धृता।

शाङ्करवैदान्तिकानां सौगतानां च व्यवहारपरमार्थसत्ये मिथः सम्मते। ३०
आर्हतानां व्यवहारपरमार्थनयौ तादृशावेव। नोपनिषदि क्वापि व्यवहारपरमार्थसत्य-विवेकविचारणा। वेदान्ते स्वसम्प्रदायाद्याचार्यो देवेयं प्रवृत्तेति प्रतिभाति। एतन्मूलं मृग्यम्।

व्युच्छेदो विनाशोऽपि नास्ति वै ॥ एतदुभयं ना गा र्जु ने न वृत्तिकृता च न्द्र की र्त्ति ना चैवं व्याकृतम् ( म. का. १८. १० )—

"प्रतीत्य यद्यद्भवति नहि तावत्तदेव तत् ।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतं ॥"

५ इयं चात्र वृत्तिः—

"यत्कारणं प्रतीत्य [ यत् ] कार्यमुत्पद्यते । तद्यथा शालिबीजं प्रतीत्य पृथिव्यादिसामग्रीं च शाल्यङ्कुर उपजायते । न हि तावत्तदेव तदिति शक्यते वक्तुं । नैव यदेव बीजं स एवाङ्कुरो जन्यजनकयोरेकत्वप्रसङ्गात् । ततश्च पितापुत्रयोरप्येकत्वं स्यात् । अनन्यत्वाच्चाङ्कुरा-
१० वस्थायमङ्कुरवद्बीजग्रहणमपि स्यात् । बीजवच्चाङ्कुरस्यापि ग्रहणं स्यात् । नित्यत्वं चैव बीजस्य स्यादविनाशाभ्युपगमात् । ततश्च शाश्वतवादप्रसङ्गान्महादोषराशिः स्यात्कर्मफलाद्यभावप्रसङ्गात् । एवं तावद्यदेव बीजं स एवाङ्कुर इति न युज्यते । न चान्यदपि तत्तस्मात् । नापि बीजादङ्कुरस्यान्यत्वं बीजमन्तरेणाप्यङ्कुरोदयप्रसङ्गात् ।

१५ 'यद्यन्यदन्यदन्यस्मादन्यस्मादप्यृते भवेत् ।'

( म. का. १४. ६ ) इति वचनादङ्कुरावस्थानेऽपि बीजानुच्छेदप्रसङ्गात् । ततश्च सत्कार्यवाददोषः स्यात् ॥ यतश्चैवं यत्कारणं प्रतीत्य यत्कार्यमुत्पद्यते नैव तत्कारणं कार्यं भवति । न च तस्मात्कारणात्तत्कार्यमन्यत् । तस्मान्न कारणमुच्छिन्नं नापि शाश्वतमिति शक्यते
२० व्यवस्थापयितुमिति ॥"

यथोक्त मा र्य दे वे न ( च. श. १०. ५० )—

"यस्मात्प्रवर्तते भावस्तेनोच्छेदो न जायते ।
यस्मान्निवर्तते भावस्तेन नित्यो न जायते ॥"

अन्यच्च

२५ "बीजस्य सतो यथाङ्कुरो न च यो बीज स चैव अङ्कुरो ।
न च अन्यु ततो न चैव तदेवमनुच्छेद-अशाश्वतधर्मता ॥"

ल. वि., पृ. २१० ।

अपि च ।

"उत्पादभङ्गरहितो लोकः खपुष्पसन्निभः ।
सदसन्नोपलब्धोऽयं प्रज्ञया कृपया च ते ॥
शाश्वतोच्छेदवर्जश्च लोकः स्वप्नसमः सदा ॥"

ल. वि. १०. १-२ । ५

इह च प्रकृतकारिकायां जायमानं किञ्चित्संवृत्यैव जायते नान्यथा । जातेश्चावश्यं केनापि कारणेन भवितव्यम् । एवं च यज्जायमानं तत्किमपि प्रतीत्यैव जायते । एवं यत्कारणं प्रतीत्य यत्कार्यमुत्पद्यते नैव तत्कारणं कार्यं भवति । न च तस्मात्कारणात्तत्कार्यमन्यत् । तस्मान्न कारणमुच्छिन्नं नापि शाश्वतमिति पूर्वोक्तदिशा व्यवस्थापनीयम् । १०

वादिनां केचिदुच्छेदवादमन्ये तु शाश्वतवादमातिष्ठन्ते । सौगतास्तु नान्यतरम् । मध्यकपथपथिकत्वात्तेषाम् । तदेतत् सुप्रसिद्धम् । अयं चोद्घोषो ना गा र्जु न स्य ( म. का. १८. ११ ) —

"अनेकार्थमनानार्थमनुच्छेदमशाश्वतं ।
एतत्तल्लोकनाथानां बुद्धानां शासनामृतं ॥"[1] १५

"संवृत्या जायते सर्व"मित्युक्तम् (४. ५७) । अथ तत्रैव विशेषमाह—

**धर्मा य इति जायन्ते संवृत्या[2] ते न तत्त्वतः ।[3]**
**जन्म मायोपमं तेषां सा च माया न विद्यते ॥५८॥[4]**

---

१ । शाश्वतोच्छेदवादौ तन्निषेधश्च म हा भा र ते ऽपि ( १२. २२२. ५-६ ) दृश्यते । तथा हि— २०

"उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।
एवं सति क उच्छेदः शाश्वतो वा कथं भवेत् ॥"

एवं व्या स भा ष्ये ऽपि ( यो. सू. २. १९ ) ।

२ । केवलमेकस्मिन्नेव पुस्तके ( विश्वभारत्याः १६३२ संख्यके देवनागरवर्णलिखिते ) अयं पाठः । अन्यत्र तु जायन्त इति । भा ष्य का रो ऽपि प्रथममेव समर्थयते । स खल्वाह संवृत्यैव धर्मा जायन्ते न ते तत्त्वतः परमार्थतो जायन्त इति । अयमेव चार्थः सङ्गच्छते च साधीयांश्च । २५

३ । "सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।" इत्युक्तं प्राक् ( ३. १७ ) ।

४ । "यावत्प्रत्ययसामग्री तावन्मायापि वर्तते ।" बो. अ. ९. १० ।
"विचित्रा हि यथा माया दृश्यते न च दृश्यते ।" ल. सू., पृ. ४८ । ३०

ये खलु **धर्मा** भावा **जायन्त** इति मन्यन्ते ते **संवृत्या** लोक-व्यवहारेण जायन्ते। न पुनस्तत्त्वतः परमार्थतः। **तेषां च जन्म मायोपमम्। मायाऽपि च सा न विद्यते।** न खलु माया कदाचिद्वस्तु भवति। भवेदेतत्। तेषां किल जन्म मायोपमं न पुनर्मायैवेति। मैवं मंस्थाः। जन्म च माया चाद्वयमद्वैधीकारमेतत्। नानयोर्मनागपि भेदः ॥[1]

५

यथा न शाश्वतोच्छेदवादौ युज्येते तथा पुनरपि प्रतिपादयन्नाह—

**यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः।**
**नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥**

१० **यथा मायामयाद्बीजात्तन्मयो** मायामयोऽङ्कुरो **जायते। असौ चाङ्कुरो न नित्यो न चोच्छेदी** विनाशी भवति। **धर्मेषु** व्यावहारिकेषु भावेषु **तद्वद्योजना** प्रयोगो भवति। उपमेयोऽत्रायं कारिकार्थ आर्यदेवस्यैतेन वचनेन (च. श. १०. १४)—

"यथा हि कृतकाद्बीजाज्जायते कृतकोऽङ्कुरः॥" इति।

१५ इयं भोटपाठस्य च्छाया॥

स एवार्थः पुनरपि विवियते—

**नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा।**
**यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥६०॥**

धर्मेषु तावदुत्पन्नेषु तत एव च निरुद्धेषु एष धर्मः शाश्वत एषोऽशाश्वत

२० इत्यभिधीयते। यथा तु प्राग्दृष्टं तथा **सर्वधर्मेषु अजेषु** अनुत्पन्नेषु अयं शाश्वतः अयं चाशाश्वत इत्य**भिधा**भिधानं कथनं न भवति। कुतः। **यत्र वर्णाः** शब्दा इति भावः। **न वर्तन्ते।** यच्छब्दपथमतिक्रान्तं तत्रेत्यभिप्रायः। एष शाश्वतः असौ तूच्छेदीति **विवेको** विवेचनं **नोच्यते।** अशक्यत्वात्तस्य। तदाहाचार्यदेवः

२५ शाश्वतोच्छेदवादावधिकृत्य (च. श. ११. २५)—

१। "किं पुनरार्य सुभूते मायोपमास्ते सत्त्वा न ते माया। सुभूतिः० अवोचत्। मायोपमास्ते० सत्त्वा इति माया च सत्त्वाश्चाद्वयमेतदद्वैधीकार-मिति।" अ. प्र. पा., पृ. ३९-४०।

एतन्मते बुद्धो वा निर्वाणं वा ततोऽप्युत्कृष्टतरमेव वा किञ्चिन्मायैव।

"यस्मात्प्रवर्तते भावस्तेनोच्छेदो न जायते।
यस्मान्निवर्तते भाव स्तेन नित्यो न जायते॥" इति।

अथ प्राक् ( ४. ४७-५२ ) परीक्षितेऽपि विज्ञानवादे पुनरप्या चा र्य- स्तत्करोति भूयोवैशद्याय प्रदर्शयति च स्वप्नजाग्रदवस्थयोरभेदं पूर्वमिव ( २. १-१० )— ५

**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया।**
**तथा [१]जाग्रद्द्वयाभासं चित्तं चलति मायया॥६१॥**

कृतवृत्तिरियं कारिकोत्तरा च पूर्वं ( ३. २९, ३० ) ये पठिते तत्र स्तोकेन पाठभेदेन॥

यदिह **द्वयाभासं** ग्राह्यग्राहकाभासमिति भावः। तदेवान्यत्र ( ४. १० ७२ ) "ग्राह्यग्राहकवद्द्वय"मिति। "द्वय"मिति ( ४. ७५ ) च। ताथागतेषु ग्रन्थेषु द्वयशब्दस्याद्वयशब्दस्य चेदृशोऽर्थः प्रसिद्धः। तथा हि। "अद्वयार्थेन पश्यति" ( म. सू. अ. १४. ३२ )। "द्वयग्राहविसंयुक्तं ग्राह्यग्राहकग्राहविसंयोगात्" ( तत्रैव पृ. ६४ )। द्र:—२. १४; ३. २९, ३०; ४. ६२, ७२, ७५, ८७॥ जाग्रदिति सप्तम्यन्ततया व्याख्येयमिति १५ पूर्वमुक्तम् ( ३. ३० )॥

**अद्वयं च द्वयाभासं यथा स्वप्ने न संशयः।**
**अद्वयं च द्वयाभासं चित्तं जाग्रन्न संशयः॥६२॥**

कृतवृत्तिरियं कारिका पुरस्तात् ( ३. ३० )। द्र: ४. ६१।

स्वप्नं पश्यतः स्वचित्तमन्तरेण नान्यत्किमपि वर्तत इत्यनुभावयति २० द्वाभ्याम्—

**स्वप्नदृक्प्रचरन्स्वप्ने दिक्षु वै दशसु स्थितान्।**
**अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा॥६३॥**

[१] ३. ३०; ४. ६२।

स्वप्नदृक्चित्तदृश्यास्ते[1] न विद्यन्ते ततः पृथक्।
तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥६४॥[2]

कश्चित्किल स्वप्नदृक्पुरुषः स्वप्ने प्रचरन् भ्रमन् वै दशसु दिक्षु स्थितान्यानण्डजान् स्वेदजान् वापि जीवान्सदा पश्यति ते स्वप्नदृक्चित्तदृश्याः स्वप्नदृशश्चित्तेन दर्शनीयाः। चित्तेनैवात्मनस्तान् स स्वप्नदृक् पश्यति। नान्यथा। न हि ते जीवाः स्वप्नदृशश्चित्तादन्ये नाम केचन यद्यपि ते तथा प्रतीयन्ते। स्वप्नदृशश्चित्तमेव तु केवलं तत्तज्जीवादिरूपेणाभासते। ततस्तस्मात् स्वप्नदृशश्चित्तात् पृथग् भिन्नास्ते न विद्यन्ते। तथा तेन प्रकारेण च तद्दृश्यं तेन स्वप्नदृशश्चित्तेन दृश्यमेवेदं सत्स्वप्नदृक्चित्तं स्वप्नदृशश्चित्तमेवेष्यतेऽभिप्रेयते। स्वप्ने यत्किमपि दृश्यते तत्स्वप्नदृशश्चित्तेनैव। तच्च तस्य चित्तमन्तरेण नान्यत्किमपीति भावः॥

यथा स्वप्नानुभवः स्वप्नदृशश्चित्तं तथा जागरितानुभवोऽपि जाग्रतः पुरुषस्य चित्तमेव। न ततोऽन्यत्किञ्चिदित्याह—

चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान्।
अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥६५॥

जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक्।
तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥६६॥[3]

---

१। ४. ७७; उपः ४. ६६। अयं च चित्तदृश्यशब्दो लङ्कावतारसूत्रे भूयो भूयो दृश्यते। यथा पृ. ९६ (चतुष्कृत्वः); ७९, ८४ (द्विः), ९३, ९४ (द्विः), ३३८ (द्विः)। एवमन्यत्रापि।

२। ४. ६९, ६६। द्रः—

"स्वचित्ताभिनिवेशेन चित्तं वै सम्प्रवर्तते।
बहिर्धा नास्ति वै दृश्यमतो वै चित्तमात्रकं॥"

ल. सू. १०. १०१।

३। ४. ६३, ६४।

**जागरिते** जागरणावस्थायां **जाग्र**त्प्रबुध्यमानः कश्चित्पुरुष-**श्चरन्पर्यटन् वै दशसु दिक्षु स्थितान् यानण्डजान् स्वेद-जान्वापि जीवान्सदा पश्यति ते जाग्रच्चित्तेक्षणीया** जाग्रतः पुरुषस्य चित्तेन ईक्षणीया दृश्याः। ते **तत**स्तस्माज्जाग्रतश्चित्तात् **पृथग्** भिन्ना **न विद्यन्ते। तथा** तेन प्रकारेण च **तद्दृश्यं** तेन ५ जाग्रतश्चित्तेन **दृश्यमेवेदं जाग्रतश्चित्तमिष्यते।** जागरिते यत्किञ्चिद्दृश्यते तदखिलं जाग्रतः पुरुषस्य चित्तेनैव। तच्च जाग्रतश्चित्तमेव। नान्यत्किञ्चित्॥

यदिदं किञ्चिद्दृश्यते तदखिलं स्वप्न इव चित्तमेवेति प्रदर्शितमासु चतसृषु कारिकासु। इयं च दृष्टिः सुप्रथिता सौगतानाम्। यथाह १० स्वयं सुगत एव लङ्कावतारसूत्रे (१०. ४८३, ४८४, ६६२)—"चित्तमात्रं वदाम्यह"मिति।

किञ्च। तत्रैव

"स्वचित्ताभिनिवेशेन चित्तं वै सम्प्रवर्तते।
बहिर्धा नास्ति वै दृश्यमतो वै चित्तमात्रकं॥" इति। १५

यत्खलु स्वप्ने दृश्यते येन च दृश्यते पुरुषेणोभयमपि तल्लक्षणहीन मित्याह—

**उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति नोच्यते।**
**लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते॥६७॥**

**ते** पूर्वोक्ते **उभे** उभये यत्स्वप्नदृश्यमण्डजजीवादि येन च २० तत्स्वप्नदृश्यं दृश्यते तत्स्वप्नद्रष्टृश्चित्तमित्येते उभये **अन्योन्यदृश्ये** परस्परेक्षणीये। तत्र तावत्स्वप्नदृश्यं स्वप्नद्रष्टृश्चित्तेन दृश्यते गम्यते नान्येनेति स्पष्टम्। एवं स्वप्नद्रष्टृश्चित्तमपि स्वप्नदृश्येनाण्डजजीवादिना दृश्यते गम्यते। एवं ते उभे अन्योन्यदृश्ये इत्यास्थेयम्। न पुनरेत-च्छक्यमास्थातुम्। अन्योन्यापेक्षत्वात्। स्वप्नचित्तमपेक्ष्य स्वप्नदृश्यं २५ स्वप्नदृश्यं चापेक्ष्य स्वप्नचित्तं दृश्यत इति। तस्मादेकस्यासिद्धावन्यस्या-प्यसिद्धिर्दुर्वारा। **न च तयोः** स्वप्नदृश्यस्य स्वप्नद्रष्टृश्चित्तस्य चेति

**किमस्तीति भवतोच्यते।** अशक्यं च तद्वचनम्। **यस्मादुभयं** स्वप्नदृश्यं स्वप्नदृक्चित्तं चेति द्वयं **लक्षणाशून्यम्।** लक्षणं लक्षणा चेत्युभयमपि समार्थम्। तच्छून्यं **तद्रहितम्।** न तयोः किमपि लक्षणमस्ति। यथा च नास्ति तथानुपदमेव वक्ष्यते। एवं लक्षण-
५ शून्यमपि तदुभयं **तन्मतेनैव** तयोः स्वप्नदृश्यस्य स्वप्नदृक्चित्तस्य च यन्मतं मतिर्वासनेति भावः। तेन **गृह्यते** दृश्यते।

यथेदं स्वप्ने तथा जागरितेऽपि प्रतिपत्तव्यम्। लक्षणाशून्यत्वं त्वेवमन्यत्र सौगतेषु तन्त्रेषु विवृतम्—

"यद्धि चित्तं महामते न नित्यं नानित्यं न कार्यं न कारणं न संस्कृतं
१० नासंस्कृतं° न लक्ष्यं न लक्षणं° तद्वाङ्मात्रं° तदनुत्पन्नं। यदनुत्पन्नं तदनिरुद्धं° आकाशसमं। तत्रेदमुच्यते—

प्रमाणेन्द्रियनिर्मुक्तं न कार्यं नापि कारणं।
बुद्धिबोद्धव्यरहितं लक्ष्यलक्षणवर्जितं॥"

ल. सू., पृ. १८६—१६०।

१५ "तस्मान्न विद्यते लक्ष्यं लक्षणं नैव विद्यते।
लक्ष्यलक्षणनिर्मुक्तो भावोऽपि नैव विद्यते॥"

म. का. ५. ५।

"उपायदेशना मह्यं नाहं देशेपि लक्षणं।
बाला गृह्णन्ति भावेन लक्षणं लक्ष्यमेव च॥"

२० ल. सू. १०. २१।

"लक्ष्यलक्षणवर्जितम्"। तदेव, १०. २२४।

स्वप्नादिवन्नैवैते भावा भवन्तीत्याह—

**यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥६८**
**यथा मायामयो जीवो जायते म्रियतेऽपि च।**
२५ **तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥६९**
**यथा निर्मितको जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥७०॥**

**स्वप्नमयः** स्वप्नस्वरूपः स्वप्ने दृष्टः। **मायामयः** मायाविना मायया कृतः। **निर्मितकः** ऋद्ध्या मणिमन्त्रौषधादिभिर्वा निष्पादितः। अन्यत्सर्वमतिरोहितार्थम् ॥[१]

---

१। निर्मितनिर्मितकादयः शब्दा भूयसा बौद्धेषु ग्रन्थेषु पठ्यन्ते। तथा हि। "निर्मितोपमाः प्रतिबिम्बोपमाः सर्वधर्मा ज्ञातव्याः।" स. रा. सू., पृ. २७। ५

"अचिन्तियान्निर्मितनिर्मिणोत्या-
देशेति धर्मं बहुप्राणकोटिकं।" तदेव, पृ. २३।
"यथा निर्मितकं शास्ता निर्मिमीतर्धिसम्पदा।
निर्मितो निर्मिमीतान्यं स च निर्मितकः पुनः॥
तथा निर्मितकाकारः कर्ता यत्कर्म तत्कृतं। १०
तद्यथा निर्मितेनान्यो निर्मितो निर्मितस्तथा॥"
म. का. १७ ३१-३२।

उपः शून्यतासप्ततिः (म वृ, पृ ३३० प्रथमटिप्पण्याम्)—

"ऋद्ध्या यथा निर्मितकं निर्मिमीत तथागतः।
निर्मितो निर्मिमीतान्यं स च निर्मितकः पुनः॥"० १५

"एकस्य भाषमाणस्य सर्वे भाषन्ति निर्मिताः।
एकस्य तूष्णीम्भूतस्य सर्वे तूष्णीं भवन्ति हि॥"
आगम इति म. वृ, पृ ३३१; दि. अ., पृ १६६; अ. को. व्या: (१.) पृ. २७; उपः दी. नि. २. २१२। द्रः आर्यरत्नकूटसूत्रम्, म. वृ, पृ. ३३६; शि. स, पृ २७० (आर्यगगनगञ्जसूत्रम्); २० बो. अ. ९. ९७।

निर्माणनिर्माणकायनिर्माणचित्तादयः शब्दा योगशास्त्रेष्वपि दृश्यन्ते (यो. सू. ४. ४, ५ व्याख्यानानि)। ईदृश एवार्थे निर्मिमीतेर्निमिणोतेर्वा निर्मातेर्वा प्रयोग उपनिषद्यपि लभ्यते। यथा। "स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय० प्रस्वपिति।" बृ उ. ४. २५ ३. ९। "य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषं निर्मिमाणः" (क. उ ५. ८)। अन्यत्र तु "हृदयादिव निर्मितः" (बृ. उ. ३, ९. २२) इत्यादिषु न तथा।

एते खलु जायमाना म्रियमाणाश्च जीवाः स्वप्नमया इव मायामया इव निर्मितका इव वा। न पुनर्वस्तुसन्तः। इति व्याख्यायां वा योऽर्थः ते (३. ४८) प्रकटितं स्वसिद्धान्तं प्रसङ्गात्पुनः प्रदर्शयति—

न कश्चिज्जायते जीवः[1] सम्भवोऽस्य न विद्यते।

एतत्तदुत्तमं सत्यं[2] यत्र किञ्चिन्न जायते[3] ॥७१॥

स्पष्टोऽर्थः ॥

चित्तमेवेदं सर्वं ग्राह्यग्राहकाकारेणाभासत इत्युक्तं पुरस्तादसकृत्।[4] अथ तत्स्मारयित्वा चित्तस्यासङ्गत्वं प्रदर्श्यते। किं कारणम्। असङ्गत्वे हि प्रदर्शित आवरणं च्यवते (४. ९७)। असङ्गं च चित्तं सुतरां विनिवर्तते विषयेभ्यः। विनिवृत्ताप्रवृत्तस्य च चित्तस्य निश्चला स्थितिः पुरुषार्थः (४. ८०)। असङ्गं हि चित्तं ब्रह्म निष्पद्यत इति दृष्टमस्ति ते (३. ४६)। तदिदमुच्यते—

चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम्।

चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्त्तितम् ॥७२॥

येन हेतुना **ग्राह्यग्राहकवद् द्वयं** किञ्चिद्ग्राह्यरूपं किञ्चिद्वा ग्राहकरूपमिति द्विविधमिदं विश्वं **चित्तस्पन्दितमेव** चित्तस्य स्फुरणमात्रम्। चित्तमेव हि केवलं तत्तद्ग्राह्यग्राहकाभासं स्फुरति यथा प्राक्प्रदर्शितम्। **तेन** हेतुना **चित्तं नित्यं** सदा स्वत इति भावः। **निर्विषयं** ग्राह्यग्राहकविरहितमिति भावः। अत एव **चासङ्गं**[5] निःसङ्गं (४. ७१) **कीर्त्तितम्**।

---

१। "नहि कश्चिज्जायति न च म्रियते।" स. रा. सू. (म. वृ., पृ. १०९)।

२। "उक्तं हि भगवता० एतत्तु परमं सत्यम्।" म. वृ., पृ. १२०।

३। "यथा न जायते किञ्चित्।" ३. २।

४। ३. २९-३१ ; ४. ४५, ४७, ४८-५२, ६१-७०।

५। एतदेवान्यत्रानाभासमिति विवृतम् (३. ४६, ४. ४८)।

अत्र "सङ्गो न हि सज्यते" ( बृ. उ. ३. ९. २६ ; ४. २. ४ ) "असङ्गो ह्ययं पुरुषः" ( बृ. उ. ४. ३. १५ ) इत्यादीनि सुप्रसिद्धान्युपनिषद्वचांसि। लङ्कावतारसूत्र वचनानि चैतानि "असङ्गलक्षणं ज्ञानं विषयवैचित्र्यसङ्गलक्षणं विज्ञानम्।" "असङ्गस्वभावलक्षणं ज्ञानं अप्राप्तिलक्षणं ज्ञानम्" ( पृ. १५७ )। ५

एतान्यपि च तत्रैव—

"चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितं॥" ३. ६५।
"ग्राह्यग्राहकभावेन चित्तं नमति देहिनां।
दृश्यस्य लक्षणं नास्ति यथा बालैर्विकल्प्यते॥" इति। १०
१०. ८५।

"तरङ्गा ह्युदधेर्यद्वत्पवनप्रत्ययेरिताः।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते।
आलयौघस्तथा नित्यं विषयपवनेरितः।
चित्रैस्तरङ्गविज्ञानैर्नृत्यमानः प्रवर्तते॥" इति। १५
२. ९९, १०० ; १०. ५६, ५७।

अथैतानि योगवासिष्ठे—

"स्पन्दास्पन्दस्वभावं हि चिन्मात्रमिह विद्यते।
खे वात इव तत्स्पन्दात्सोल्लासं शान्तमन्यथा॥
चित्तं चित्तं भावितं सत्स्पन्द इत्युच्यते बुधैः। २०
दृश्यत्वाभावितं चैतदस्पन्दनमिति स्मृतम्॥
स्पन्दात्स्फुरति चित्सर्गो निःस्पन्दाद्ब्रह्म शाश्वतम्।
जीवकारणकर्माद्याः चित्स्पन्दस्याभिधाः स्मृताः॥"
३. ६७. ६—८।

"स्वभावाद्व्यतिरिक्तं तु न चित्तस्यास्ति चेतनम्। २५
स्पन्दादृते यथा वायोरन्तः किं नाम चेत्यते॥"
तदेव, ३. ६६. १६।

एवं ग्राह्यग्राहकवदिदं द्वयं चित्तस्पन्दितमेवेति दर्शयित्वा विशेषमाह—

**योऽस्ति कल्पिसंवृत्या परमार्थेन नास्त्यसौ।**
**परतन्त्रो[1]ऽभिसंवृत्या स्यान्नास्ति परमार्थतः ॥७३॥**

५ ग्राह्यग्राहकरूपो **यो** भावोऽस्तीति प्रतीयते **असौ कल्पित-संवृत्या** कल्पितया संवृत्या कल्पितेन संवृतिसत्येन व्यवहारसत्या-परनामधेयेनास्ति **न परमार्थेन** पारमार्थिकेन सत्येन। यतः **परतन्त्रो**ऽन्यायत्तो भावः यस्य भावस्योद्भवो वा सद्भावो वान्यापेक्षः स परतन्त्रः। स खलु सन्न**भिसंवृत्या** अभिनिष्पत्तेनिर्वृत्तेहेतु-

१० भूतया **संवृत्यैव स्यात् न तु परमार्थतः**। अङ्कुरो हि जायमानो बीजजलादिहेतुप्रत्ययत एव जायत इति स परतन्त्रः। स चायमङ्कुर-स्तादृश्या कल्पितया संवृत्या कल्पितेन व्यवहारसत्येन भवन् भवेत्। न पुनः स परमार्थतो भवितुमर्हति।[1] न खलु परतन्त्रः कश्चित्पर-मार्थसत्येन भवेत्। अत्र विस्तर उत्तरकारिकावृत्तौ (४. ७४)॥

१५ अजातिरेव तत्त्वमिति प्राक् पुनः पुनरुक्तम्। अथ संवृतिपरमार्थप्रसङ्गादजातिरपि वस्तुतो नोपपद्यत इत्युच्यते। किञ्च या जातिर्नाम सा परतन्त्रस्यैव भावस्य। सापि च संवृतिसत्येनैव। न परमार्थसत्येनेत्याह—

---

१। अत्र परीक्षितेषु सर्वेषु संस्करणेषु पुस्तकेषु च परतन्त्राभि० इत्येव पाठो न पुनः परतन्त्रोऽभि० इति। तथापि द्वितीय एव पाठः साधीयान्यथोत्तर-

२० कारिकायां (४. ७४) तृतीये पादे। अत्रापि केवलं म हे श्व र पा ल संस्करणम् आनन्दाश्रमसंस्करणधृतं क-पुस्तकं चान्तरेण सर्वत्र परतन्त्राभि० इत्येव पाठः। यथा चापेक्ष्यते समर्थ्यते च सौगतशास्त्रेण परतन्त्रोऽभि० इत्येव पठनीयमुभयत्र (४. ७३-७४)। एतच्च पुनरनुपदमेव द्रक्ष्यते।

२५ ७३ तस्यां कारिकायाम् अ भि सं वृ ति शब्दः ७४तस्यां चा भि नि ष्प-त्तिशब्दो भिन्नावप्याकारेण नार्थतो भिद्येते। सा खलु संवृतिः (व्याख्यातपूर्वा ४. ५७) अभिनिष्पत्तिः संवृतिर्यया कस्यापि भावस्याविर्भावो (४ ५७-५८) अभिनिष्पद्यते। अभिनिष्पद्यतेऽनयेति कृत्वा। अस्मादिह (४. ७३, ७४) परतन्त्रोऽभि० इत्येव पठनीयमिति विवेकः॥

**अजः कल्पितसंवृत्या[1] परमार्थेन नाप्यजः।**
**परतन्त्रोऽभिनिष्पत्त्या संवृत्या जायते तु सः ॥७४॥**

**अजो** नाम मन्यमानः कश्चन भावः **कल्पितसंवृत्या** कल्पितया अपरमार्थया संवृत्या संवृतिसत्येन भवन्भवेत्। **परमार्थेन** त्वजोऽपि कश्चिन्न भवति। आर्याणां हि परमार्थस्य तूष्णीम्भावत्वा[2]दयमीदृश इति न शक्यतेऽभिलपितुम्। अत एव केवलं व्यवहारसत्येनैवायमज इत्युच्यते **परमार्थेन त्वजोऽपि न** भवति॥

किञ्च। यथा परमार्थेनाजोऽपि न भवति तथा परमार्थेन जातोऽपि कश्चिन्न भवति। यो जायते स हेतुप्रत्ययाधीनत्वात्परतन्त्र एव। स च परतन्त्रो जायमानो**ऽभिनिष्पत्त्या** तत्तत्स्वरूपसम्पत्तिकारणभूतया संवृत्या व्यवहारसत्येन जायते। अयमज इत्यभिलापमात्रम्। व्यावहारमात्रम्। परमार्थस्तु नायमजोऽपि। यः खलु हेतुप्रत्ययापेक्षोऽत एव च परतन्त्रो भावो जायमानो मन्यते सोऽपि स्वकारणभूतया संवृत्यैव जायते न परमार्थेन इत्यभिप्रायः॥

इह (४. ७३ ७४) संवृतिपरतन्त्रशब्दौ गुर्वर्थौ। तयोराद्यस्तावत् श्लोके व्याख्यातः (४. ५६, ६७)। इदमप्यत्र युक्तं सङ्कलयितुम्। मध्यमकदर्शन इव शङ्कर वेदान्तेऽपि संवृतिसत्यस्यापरं नाम व्यवहारसत्यं व्यावहारिकं वा सत्यम्। उभयोरपि नययोरपरं सत्यं परमार्थसत्यं नाम। एतयोर्द्वयोर्व्यवहारपरमार्थसत्ययोस्तथागतसिद्धान्ते प्रथममुपायभूतं द्वितीयं तूपेयभूतम्। तदुक्तं मध्यमकावतारे (६. ८०)[3]—

> "उपायभूतं व्यवहारसत्य-
> मुपेयभूतं परमार्थसत्यम्।" इति।

उक्तं च नागार्जुनेन (म. का. २४. १०)—

> "व्यवहारमनाश्रित्य परमार्थो न देश्यते।
> परमार्थमनागम्य निर्वाणं नाधिगम्यते॥" इति।

---

१। ४. ७३।

२। म. वृ, पृ. ५७। द्र: ४. ५७, ६०, ९९।

३। बो. अ. प., पृ. ३७२।

यदिह सौगतानां संस्कृतग्रन्थेषु संवृतिसत्यमिति पालिग्रन्थेषु तु तत्सम्मतिसत्यम् (सम्मुतिसच्चं) उच्यते। जनानां मिथः सम्मत्या तत्सत्यं भवतीति तदभिप्रायः। स्वभावावरणादावृतप्रकाशनाच्च संवृतिः।[1] आह चात्र चन्द्रकीर्तिः (म. अ. ६. २३)—

"सम्यग्मृषादर्शनलब्धभावं
रूपद्वयं बिभ्रति सर्वभावाः।
सम्यग्दृशां यो विषयः स तत्त्वं
मृषादृशां संवृतिसत्यमुक्तम्॥"

अथास्त्यर्थविशेषः परतन्त्रशब्दस्य शास्त्रेषु सौगतानाम्। तथाहि। सन्ति तेषां त्रीणि लक्षणानि स्वभावा वा। यथा। परिकल्पितलक्षणं परतन्त्रलक्षणं परिनिष्पन्नलक्षणं च। परिकल्पितस्वभावः परतन्त्रस्वभावः परिनिष्पन्नस्वभावश्च।[2] क्वचिच्च समासेन कल्पिततन्त्रनिष्पन्नशब्दैस्त एव ख्यायन्ते।[3]

माध्यमिकानां योगाचाराणां च सिद्धान्ते सर्वं वस्तु शून्यं चित्तमात्रं वा भवदपि तत्तदाकारेणाभासते। तदिदमस्य स्वरूपं लक्षणं वा परिकल्पितम्। यदिदं कल्पितं स्वरूपं तदात्मनो हेतुं प्रत्ययं चापेक्ष्य जायत इति तत्परतन्त्रं लक्षणं प्रतीत्यसमुत्पन्नमित्यर्थः। यत्पुनस्तत्तद्वस्तु तेन तेन कल्पितेन स्वरूपेण सर्वदा शून्यं तदस्य परिनिष्पन्नं लक्षणम्। एतदेवान्यथोच्येत सर्वदाऽविकारपरिनिष्पत्त्यापि तत्परिनिष्पन्नम्।[4]

---

१। आह प्रज्ञाकरमतिः (बो. अ. प, पृ. ३५२)—
"संव्रियत आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृतप्रकाशनाच्चानयेति संवृतिः। अविद्या मोहो विपर्यास इति पर्यायाः। अविद्या ह्यसत्पदार्थस्वरूपारोपिका स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते॥"

२। म. व्यु (क), ८७ ; त्रि. ३९ ; त्रि. नि. १—
कल्पितः परतन्त्रश्च परिनिष्पन्न एव च।
त्रयः स्वभावा धर्माणां गम्भीरज्ञेयमिष्यते॥
एवमेव म. वि. टी. १. ६।

३। "बुद्ध्या विवेच्यमानं हि न तन्त्रं नापि कल्पितम्।
निष्पन्नो नास्ति वै भावः कथं बुद्ध्या प्रकल्प्यते॥"
ल. अ. १०. ३७४।

४। "अविकारपरिनिष्पत्त्या स परिनिष्पन्नः।" त्रि., पृ. ४०।
"तस्यासंस्कृतत्वान्निर्विकारत्वेन परिनिष्पन्नत्वात्।
म. वि. सू., पृ. १९

एषां च लक्षणानां द्रव्यतोऽसत्त्वेऽपि व्यवहारतो भावात्स्वभावत्वम्।
अत्रोदाहरणमाह व सु ब न्धु स्त्रि स्व भा व नि र्दे शे (२७-२८)—

"मायाकृतं मन्त्रवशात्ख्याति हस्त्यात्मना यथा।
आकारमात्रं तत्रास्ति हस्ती नास्ति तु सर्वथा॥
स्वभावः कल्पितो हस्ती परतन्त्रस्तदाकृतिः। ५
यस्तत्र हस्त्यभावोऽसौ परिनिष्पन्न इष्यते॥"[1]

म हा या न सू त्रा ल ङ्का रे (११. १६) च

"तदाकृतिश्च तत्रास्ति तद्भावश्च न विद्यते।"[2]

---

१। "स पुनर्द्रव्यतोऽसन्नपि व्यवहारतोऽस्तीति स्वभाव उच्यते।" इति स्थि र म तिः। म. वि. सू., पृ १९। १०

२। सुगममिदं भविष्यतीति परिकल्पितादिलक्षणमिहोपन्यस्यते। त्रिं शि-का या म् (पृ. ३९)—

"येन येन विकल्पेन यद्यद्वस्तु विकल्प्यते।
परिकल्पित एवासौ स्वभावो न स विद्यते॥"२०॥

[नूनमिदं ल ङ्का व ता र सू त्र मूलकम्। उक्तं ह्यत्र (पृ. १६१) यत्पुनरुक्तं १५ भगवता येन येन विकल्पेन ये ये भावा विकल्प्यन्ते न हि स तेषां स्वभावो भवति। परिकल्पित एवासौ।०"]

[स्थि र म ति र्व्याचष्टे] "आध्यात्मिकबाह्यविकल्पवस्तुभेदेन विकल्पानामानन्त्यं प्रदर्शयन्नाह ये न ये न वि क ल्पे ने ति। य द्य द्व स्तु वि क ल्प्य ते।० आध्यात्मिकं बाह्यं वान्तशो यावद्बुद्धधर्मा अपि। प रि क ल्पि त ए वा सौ २० स्वभाव इत्यत्र कारणमाह न स वि द्य त इति यद्वस्तु विकल्पविषयस्तद्यस्मात् सत्ताभावान्न विद्यते तस्मात्तद्वस्तु परिकल्पितस्वभावमेव। न हेतुप्रत्ययप्रतिबद्धस्वभावम्।० परिकल्पितानन्तरं परतन्त्रस्वभावो वक्तव्य इत्यत आह—

"प र त न्त्र स्व भा व स्तु वि क ल्पः प्र त्य यो द्भ वः।"

अत्र वि क ल्प इति परतन्त्रस्वरूपमाह। प्र त्य यो द्भ व इत्यनेनापि परतन्त्रा- २५ भिधानप्रवृत्तिनिमित्तमाह।० प रै र्हे तु प्र त्य यै स्त न्त्र्य त उ त्पा द्य त इ ति

अवगतं संवृतिसत्यं परमार्थसत्यं च। तत्र परिकल्पितस्वभावः परतन्त्रस्वभावश्च संवृतिसत्यस्य विषयः। परिनिष्पन्नस्वभावस्तु परमार्थसत्यस्य। अतो युक्तमुक्तं ( ४. ७३ ) परतन्त्रः संवृत्यैव स्यान्नतु परमार्थेन। संवृत्यैव च स जायते न तु परमार्थेन ( ४. ७४ )। तदेतद्विवृतं विस्पष्टं प्रज्ञाकरमतिना ( बो. अ. प., पृ. ३५४-३५५ )—

"सर्वस्य हि प्रतीत्यसमुत्पन्नस्य पदार्थस्य निःस्वभावता पारमार्थिकं रूपम्। यथाप्रतिभासं सांवृतस्यानुपपन्नत्वात्। तथा हि। न तावद्यथा-परिदृश्यमानरूपेण सत्स्वभावो भावः। तस्योत्तरकालमनवस्थानात्। स्वभावस्य च सर्वदाऽनागन्तुकतयाऽविचलितरूपत्वाद् यो हि यस्य

---

परतन्त्र इत्यर्थः।[1] स्वतोऽन्यहेतुप्रत्ययप्रतिबद्धात्मलाभ इति यावदुक्तं भवति। उक्तः परतन्त्रः। परिनिष्पन्नः कथमित्याह—

निष्पन्नस्तस्य पूर्वेण सदा रहितता तु या॥२१॥[2]

[स्थिरमतिर्व्याचष्टे। ] "अविकारपरिनिष्पत्त्या स परिनिष्पन्नः। तस्येति परतन्त्रस्य। पूर्वेणेति परिकल्पितेन। तस्मिन्विकल्पे ग्राह्यग्राहकभावः परिकल्पितः। तथा हि। तस्मिन्विकल्पे ग्राह्यग्राहकत्वमविद्यमानमेव परिकल्प्यत इति परिकल्पितमुच्यते। तेन ग्राह्यग्राहकेण परतन्त्रस्य सदा सर्वकालमत्यन्त-रहितता या स परिनिष्पन्नस्वभावः।"

निरोधाकाशनिर्वाणानि परिनिष्पन्नानि।

एतेषां त्रयाणां स्वभावानां लक्षणानां वा परिकल्पितं नामाद्वैतवेदान्तिनां प्रातिभासिकेन सत्येन। परतन्त्रं व्यावहारिकेण। परिनिष्पन्नं च पारमार्थिकेन कथञ्चित्संवदति। अत्र विविधो विस्तर एषु ग्रन्थेषु लभ्यते। वि. सि., पृ. ५१४-५६१ ; त्रि. नि ; ल. सू., पृ. १२६, १२७, १६९, १७०, १७६ इत्यादिकम् ; म. सू. अ. ६. १ ; ११. १३, १८-४१, १९-५१, ७८, ७९ ; स. नि. ६।

१। अत्र "तन्त्र्यत इति परतंत्र उत्पाद्यत इत्यर्थ" इति मुद्रितपुस्तकपाठः। स च न युक्तः। अत्राह मध्यान्तविभागसूत्रभाष्यटीका (पृ. १९) "ग्राह्यं ग्राहकं च स्वभावशून्यत्वाद-भूतमप्यस्तीति परिकल्प्यत इति परिकल्पित इत्युच्यते। स पुनर्द्रव्यतोऽसन्नपि व्यवहारतोऽस्तीति स्वभाव उच्यते। परतन्त्रः परवशो हेतुप्रत्ययप्रतिबद्धजन्मकत्वात्।" "परैर्हेतुप्रत्ययैस्तन्त्र्यते जन्यते न तु स्वयं भवतीति परतन्त्रः।" पृ २०।

२। इदमुक्तमन्यत्र ( म. सू टी., पृ. १९ )—

"कल्पितेन स्वभावेन तस्य यात्यन्तशून्यता।
स्वभावः परिनिष्पन्नो विकल्पज्ञानगोचरः॥" इति।

वसुबन्धुराह ( तत्रैव, पृ. २० ) 'ग्राह्यग्राहकाभावः परिनिष्पन्न" इति। यन्नाम त्रिंशिकायां (२१) "सदा रहिततेति" यच्च मध्यान्तविभागसूत्रभाष्यटीकायाम् ( पृ. १९ ) "अत्यन्तशून्यतेति" तदेव त्रिस्वभावनिर्देशे (३) "सदाविद्यमानते" त्युक्तम्।

स्वभावः स कथं कदाचिदपि निवर्तेत। अन्यथा तस्य स्वभावताहानि प्रसङ्गान्निस्स्वभावतैव स्यात्। नापि स उत्पद्यमानः सत्स्वरूपेण कुतश्चिदागच्छति निरुध्यमानो वा क्वचित्सन्निचयं गच्छति। अपि तु हेतुप्रत्ययसामग्री प्रतीत्य जातस्य परायत्तात्मलाभस्य प्रतिबिम्बस्येव कुतः सत्स्वभावतेति" विस्तरः॥ ५

इदं चोक्तं शान्तिदेवेन ( बो. अ. ९ १४४—१४५ )—

"मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितं।
आयाति तत्कुतः कुत्र याति चेति निरूप्यतां॥
यदन्यसंनिधानेन दृष्टं न तदभावतः।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कुतः॥" इति। १०

अनवतप्तह्रदापसङ्क्रमणसूत्रे (बो. अ. प, पृ. ३५५; म. वृ., पृ. २३९ ) च—

"यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पादु सभावतोऽस्ति।
यः प्रत्ययाधीनु स शून्य उक्तो १५
यः शून्यतां जानति सोऽप्रमत्तः॥" इति।

"चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम्" ( ४. ७२ ) इत्ययमर्थः प्रागसकृच्चिन्तितः। उपपत्तिमश्च तेनाभूताभिनिवेशः। अथ तस्यैव विशेषश्चिन्त्यते—

**अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते।** २०

**द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते॥७५॥**

**अस्ति** तावल्लोके**ऽभूताभिनिवेशः** अभूतेऽसत्यभूतेऽसति ग्राह्यग्राहकरूपेऽभिनिवेश आग्रह इहायं शुक्तः शाटक इत्यादिरूपः। किं कारणं लोकोऽयमभूतेऽभिनिविशते न पुनर्भूतार्थमेव पश्यतीत्युच्यते यस्मा**त्तत्र द्वयं** ग्राह्यग्राहकरूपं **न विद्यते।** द्वयं २५ नाम चेद्भूतार्थोऽभविष्यन्नाभूताभिनिवेशोऽभविष्यत्। न त्वेतदस्ति। अस्मादभूताभिनिवेश एषः। अतो यदा **सो**ऽभूताभिनिवेशी **द्वयाभावं**

द्वयस्य ग्राह्यग्राहकस्याभावमसत्तां बुद्ध्वा अवगम्य वर्तते[1] तदैव सोऽभूताभिनिवेशो निर्निमित्तो[2] निष्कारणः सन्न जायते। अभूताभिनिवेशस्य कारणाभावात्स न जायते। सति हि द्वये तस्मिन्नभिनिविशेत। यदा तु तदेव नास्ति तदा कुतस्तदभिनिवेश ५ इति भावः। द्वयं खल्वभिनिवेशस्य निमित्तम्। अतो द्वयापगमेऽभूताभिनिवेशस्य निमित्तमप्यपगच्छति। तदपगमाच्चाभूताभिनिवेशो न जायत इत्यभिप्रायः॥

"अभूताभिनिवेशा"दित्यादिरुपरिष्टाद् (४. ७९) वक्ष्यमाणा कारिका प्रकृतकारिकानुरूपेति चिन्तनीयात्रेत्युद्ध्रियते—

१० "अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते।
वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते॥"

अयमस्यार्थः। चित्तं खलु पुरुषस्याभूताभिनिवेशात्सदृशेऽनुरूपे विषये प्रवर्तते। अथ यदा स पुरुषो बुध्यते न तत्र परमार्थतः किमपि वस्तु वर्तते तदैव सक्तेः सर्वथैव कारणाभावात् तस्य तच्चित्तं न तत्र १५ सज्यते। निःसङ्गं च सत् तस्माद्विषयान्निवर्तते॥

पूर्वस्यां कारिकायां द्वयाभाव इति एतस्यां च वस्त्वभाव इति नान्योन्यमर्थतो भिद्येते॥

---

१। शब्दान्वयार्थमुत्तरत्र (४ ७९) वृत्तिर्द्रष्टव्या।

२। "द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न २० जायत" इति भाष्यकारः।

निमित्तशब्दो व्याख्यातः (४. २४, २५, २७)। अस्ति त्वस्यार्थविशेषः सौगतशास्त्रेषु। स च वस्तुनोऽवस्थाविशेषो नीलत्वादिः (म. वृ., पृ. ६९; ध. स., पृ. ४१; त्रि, पृ. २१, प. ३)। "निमित्तं तद्विशेषो (तस्य विषयस्य विशेषो नीलपीताद्यालम्बनव्यवस्थाकारणम्)। एवम् "इत्थिपुरिसनिमित्तं वा २५ सुभासुभनिमित्तादिकं वा किलेशवत्थुभूतं निमित्तं।" अ. सा., पृ. २९१, ३०८। निमित्तग्राही भवतीति साधारणीयमुक्तिर्बौद्धानाम् (अ. सा., §§१३४५-४६) स्त्रीपुरुषादिविशेषाकारग्राही भवतीति तदर्थः। यः पुनरेवं भवति स रागेण द्वेषेण मोहेन वा क्लिश्यते। निमित्तग्रहणं हि कारणं तेषां रागादीनाम्। अ. सा., पृ. ४००। इह तु निमित्तशब्दो हेत्वर्थः। उत्तरश्लोके हेतुशब्दस्यैव ३० प्रयोगात्।

इदमत्रावगन्तव्यम्। उक्तयोरुभयोरपि (४. ७५, ७६) कारिकयो-रुत्तरार्धे "स बुद्ध्वैव न जायते" इति "स बुद्ध्वैव निवर्तते" इति चेह कथमयं शब्दान्वयः। नूनमिह द्वितीयायां कारिकायां बुद्ध्वेति क्रियायाः कर्तृपदमन्यत् (स इति)। अन्यच्च (तदिति) विनिवर्तत इति क्रियायाः। न चेदमुपपद्यते। समानकर्तृकत्वं खल्वत्रापेक्ष्यते। ५ यथानुशास्ति पाणिनिः (३. ४. २१)। द्वितीयकारिकार्थविचारणया स्पष्टं प्रतीयते प्रथमकारिकाया भाष्यकृता व्याख्यानं न साधीय इति। तस्मादेतस्यामपि कारिकायां समेनैव कारणेन न प्राप्नोति शब्दान्वयः।

नैष दोषः। न खलु न प्राप्नोति शब्दान्वयः। न ह्ययमैकान्तेन नियमो द्वयोर्धात्वर्थयोः समानकर्तृकत्व एव पूर्वकाले क्त्वादिप्रत्ययो भवतीति। १० अनियमेन हि समानकर्तृकत्वे चासमानकर्तृकत्वे च स प्रत्ययो भवति।[1]

[1] यथा कालिदासः (र. व., १. ७७)—

"अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥"

मल्लिनाथस्तु स्ववैदुष्यप्रतिभया अनाराध्येत्यसेवयित्वेति कथयन्कथञ्चित्समादधौ। १५

ईदृशा बहवः प्रयोगा भाषायाम्। यथा। मृतं दृष्ट्वा दुःखं भवति। प्रियं दृष्ट्वा सुखं स्यात्। सुखमुत्पद्यते। अर्वाचीनास्तु व्यभिचारमिममपनिनीषव ईदृशेषु स्थानेषु स्थितेत्यादिशब्दमध्याहृत्य कथञ्चित्समादधति। स. सा. (श्री श्या मा-चरण कविरत्न-संस्कृतम्, कलिकाता, ११११८, व. सं), कृदन्तपादः, ४०७; मु. बो. (श्री सुबलचन्द्र मिश्र संस्कृतम्), कलिकाता, ११११६, २० व. स.) सूत्रम् ११११६; का. व्या. (सटीकम् श्री गुरुनाथ विद्यानिधि भट्टाचार्य संस्कृतम्) कलिकाता, १८१९, श. स.), कृद्वृत्तिः, सूत्रम् ४११।

अति प्राचीनायामपि वाचि प्रचुरा ईदृशाः प्रयोगाः। यथा—

ऋग्वेदे (१०. ३४. ११) "स्त्रियं दृष्ट्वाय कितवं ततापः।" आत्मनस्त्रियं दृष्ट्वा कितवस्तप्यत इति तदर्थः। २५

शतपथब्राह्मणे "ते पशव ओषधीर्जग्ध्वा अपः पीत्वा तत एष रसः सम्भवति॥"

श्वेताश्वतरोपनिषदि (१ ११) "ज्ञात्वा देवं सर्वपाशापहानिः।" महाभारते च भगवद्गीतायाम्—

"दृष्ट्वेमान्स्वजनान्कृष्ण० सीदन्ति मम गात्राणि मुखं च परिशुष्यति॥" ३०
१. २८।

"निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन॥" १. १९।

"यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते।" ७. २।

"तच्च संस्मृत्य संस्मृत्य० विस्मयो मे महान् राजन्। हृष्यामि च मुहुर्मुहुः॥" १८. ७७। एवमनेकानि। यथा तत्रैव १. ३४, १९. १६। ३५

अवसितं प्रासङ्गिकम्। अथ प्रकृतमनुसरामः। योऽयमस्मदाचार्यस्याभूताभिनिवेशः स खलु विज्ञानवादिनां ताथागतानामभूतपरिकल्प एव। यथोक्तं लङ्कावतारे (पृ. १४९-१५०)—

"अभूतपरिकल्पोऽभूतपरिकल्प इति भगवन्नुच्यते। कतमस्यैतद्
५ भगवन्धर्मस्याधिवचनं यदुताभूतपरिकल्प इति। किं वा प्रतिविकल्पयन्नभूतपरिकल्पो भवति। भगवानाह। साधु साधु महामते।° नृणां ग्राह्यग्राहकाभिनिवेशाभिनिविष्टानां च° बाह्यविचित्रार्थोपलम्भाभिनिवेशाच्च चित्तचैत्तकलापो विकल्पसंशब्दितः प्रवर्तमानः प्रवर्तत आत्मात्मीयाभिनिवेशात्।"

१० इदं चाह मैत्रेयनाथः स्वकीये मध्यान्तविभङ्गे (१.२)—

"अभूतपरिकल्पोऽस्ति द्वयं तत्र न विद्यते।"[1] इति।

इदं चास्मदाचार्यस्य प्रकृतं वचनम्—

"अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते।" इति।

कियदनयोर्वचनयोः साम्यमित्यतिस्फुटम्। न च न सुगमं कतरन्
१५ नामैतयोः कतरस्याकर इति॥

उक्तं कथं नामाभूताभिनिवेशो निर्निमित्तो न जायत इति। अथ निवृत्ताप्रवृत्तस्य चित्तस्य निश्चला स्थितिरेव बुद्धानां पुरुषार्थ इति वक्ष्यते (४. ८०)। तत्र कथं चित्तं निवर्तते न च पुनः प्रवर्तत इत्युत्तरकारिकायामुच्यते—

२० **यदा न लभते हेतूनुत्तमाधममध्यमान्।**
**तदा न जायते चित्तं हेत्वभावे फलं कुतः॥७६॥**

अस्ति चित्तस्योत्पत्तौ हेतुर्निमित्तं यथा प्रागुक्तम्। स च त्रिविधः। उत्तमो मध्यमोऽधमश्च। उत्तमाद्धेतोरुत्तमं मध्यमान्मध्यममधमाच्चाधमं चित्तं जायते। यदा पुनश्चित्तं त्रयाणामेकमपि हेतुं
२५ न लभते तदा न जायते। कुतो नु खलु हेत्वभावे फलं जायेत। न जातु जायेतेति भावः॥[2]

१। विवृणोति चेदं स्थिरमतिः "स्वात्मन्यविद्यमानेन ग्राह्यग्राहकाकारेण प्रख्याते[न व्यक्तं भ्रान्तरूपत्वम्]" इति।

२। ४. ७७, ७८।

उपदिष्टा चित्तस्याप्रवृत्तिरूपानुत्पत्तिः। सैव परिदीप्यते—

**अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाद्वया।**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥७७॥**

कारिकेयं कुतोऽपि विकलेव प्रतिभाति। तथा हि। प्रथमार्धे वाक्यमपूर्णम्। न ह्यत्र येयमुक्तानुत्पत्तिः सा का कीदृशी किं वा तस्या इति किञ्चिदप्युक्तम्। न च चित्तस्य यानुत्पत्तिः [ सा ] समाद्वया च [ भवतीति ] कथञ्चिद्व्याख्यानेऽपि द्वितीयार्धस्य गम्यते कश्चित्सम्बन्धः। किं नाम वा परामृश्यते तच्छब्देन। कश्च वोपन्यस्तो हेतुर्यत इति पदेन। किं वाभिप्रेयते समन्वितैरप्यपरैर्निखिलैः पदैः। भाष्यकृद्व्याख्यानं च न रमणीयम्। तस्मादेतयोर्द्वयोरर्धयोर्मध्ये अपरमर्धद्वयं कथञ्चित्स्खलितमिति प्रतिभाति। अतः सर्वथा दुरवगमत्वेन द्वितीयार्धं परित्यज्य केवलं कथमपि प्रथमार्धमेव व्याकर्तुं प्रयत्यते—

**अनिमित्तस्य**[१] **चित्तस्य यानुत्पत्ति**रप्रवृत्तिः। सति प्रागुक्ते निमित्ते ग्राह्यग्राहकरूपे द्वये चित्तमुत्पद्यते। असति तु तु नोत्पद्यते। इति यानुत्पत्तिः सा **समा अद्वया** च। साम्यं तावत्पूर्वमेव ( ३. २, ३४ ) व्याख्यातं व्याख्यास्यते च ( ४. ८०, ९५, १०० ।[२] इदं चोक्तं चन्द्रकीर्तिना ( म. वृ., पृ. २७४–२७५ )— "मञ्जुश्रीराह। परमार्थतः सर्वधर्मानुत्पादसमतया परमार्थतः सर्वधर्मात्यत्यन्ताजातिसमतया परमार्थतः समाः सर्वधर्मा" इति ॥

अद्वयत्वं च ग्राह्यग्राहकविरहितत्वेन। द्वितीयार्धे चित्तदृश्यशब्दो विवृतः प्राक् ( ३. ३१ ; ४. २८, ३६ ) ॥

निमित्तापाये चित्तस्यानुत्पत्तिरुक्ता। पुनरपि च वक्तव्या प्रसङ्गात्। तथा च चित्तानुत्पत्त्या अशोकाभयपदप्राप्तिरूपा परमार्थप्राप्तिरित्युत्तरासु चतसृषु कारिकासूच्यते—

१। ४. २४, २६, २७, ७६, ७८।

२। मु. उ. १. १. १ ; भ. गी. ५. १९ ( "निर्दोषं हि समं ब्रह्म" )।

बुद्ध्वानिमित्ततां[1] सत्यां हेतुं पृथगनाप्नुवत्[2] ।
वीतशोकं तदाकाममभयं पदमश्नुते ॥७८॥

यदा कश्चित्सत्यां परमार्थामनिमित्ततां निमित्तहीनतां व्याकृत-पूर्वां बुद्ध्वा ज्ञात्वा वर्तते ।[3] नास्ति चत्तोत्पत्तेर्वस्तुतः किमपि निमित्त मित्यवगच्छतीत्यर्थः । तदा तस्य चित्तं स्वोत्पत्तेः पृथग् भिन्नमपरं कमपि हेतुं कारणं निमित्तमनाप्नुवदलभमानं वीशोकं विगत-सन्तापमकामं न यत्र किञ्चित्कामयितव्यमित्येतत् । तथाभयं पदं स्थितिमश्नुते प्राप्नोतीति भावः ॥

पूर्वार्थस्यैवायं प्रपञ्चः —

अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ।
वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते ॥७६॥

बह्वत्र वक्तव्यं प्रागेवोक्तम् ( ४. ७५ ) । तत्तत्रैव द्रष्टव्यम् । समासेन त्विहाप्युच्यते । अभूताभिनिवेशाद्धेतोश्चित्तं सदृशे यत्राभिनिवेश स्तदनुरूपे विषये प्रवर्तते क्रमते । अथ यदा स पुरुषो वस्त्वभावं वस्तुनश्चित्तोत्पत्तेर्निमित्तभूतस्याभावमसद्भावं बुद्ध्वैव वर्तते ।[3] नास्ति तत्र वस्तुतः किमपीत्यनुभवति । तदैतस्य चित्तं निःसङ्गं निःसंसर्गं निवर्तते प्रत्यावर्तते । द्वयाभावो ( ४. ७५ ) वस्त्वभावश्चानर्था-न्तरभूतौ । द्रः ३. ४५ ; ४. ७२, ७५, ६६, ६६ ॥

---

१ । ४. २९, २७,

२ । परीक्षितेषु संस्करणेषु पुस्तकेषु च केवलमेकमेव पुस्तकम् ( लाहोरनगरे दयानन्दाङ्गलवैदिकविद्यालये ) अनुसृत्य आप्नुवदित्येव पाठो मया गृहीतो न पुनरन्येषु सर्वेष्वपि पठित आप्नुवन्निति । तच्च प्रथमं पदं पूर्वयोः कारिकयोः पठितेन चित्तपदेन सम्बध्यते । ७६—८० कारिकासु हि चित्तस्यैव प्रकरणम् । ७९ तस्यां च कारिकायां तच्छब्देन चित्तमेव परामृश्यत इति भा ष्य का रो ऽ पि स्पष्टमाह । एवं प्रकृतायामपि कारिकायां ( ७८ ) तदेवापेक्ष्यते । "त्यक्त-बाह्यैषण" ( भाष्ये ) इत्यकाण्ड एव कस्यचित्पुरुषस्याध्याहारो नोपपद्यते । अन्यत्रापि ( ४. ७६ ) चित्तमेवोक्तं नान्यत्किञ्चित् । इहापि तद्वदिति ज्ञेयम् ।

३ । अत्र व्याकरणप्रश्नः पूर्ववत् ( ४. ७८ ) समाधेयः ।

एवं निवृत्तस्याप्रवृत्तस्य चित्तस्य निश्चला स्थितिरेवाधिगन्तव्यो विषयो बुद्धानामित्याह—

**निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः।**
**विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥८०॥**

यदा तच्चित्तं विषयान्निवर्तते न च पुनः प्रवर्तते **तदा** ५ **निवृत्तस्यो**पशान्तस्य **अप्रवृत्तस्या**नुत्पन्नस्य च तस्य चित्तस्य **स्थिति**रवस्थितिरवस्था **निश्चला** निःस्पन्दा **हि** एव। स एव **बुद्धानां** सुगतानां **विषयो** भूमिः।[1]

तच्च चित्तं **साम्यं** सममेव साम्यम्। विवृतमेतद् विवरीष्यते च (४. ७७. ९३ ९५)।[2] तच्च चित्त**मजं** यथा व्याकृतं पुरस्तादस- १० कृत्।[3] **अद्वयं** ग्राह्यग्राहकरहितं च।

---

१। तदुक्तं लङ्कावतारे—

"चित्तमात्रं निराभासं विहारो बुद्धभूमि च।
एतद्धि भाषितं बुद्धैर्भाषन्ते भाषयन्ति च।" १०. १०९।
"अर्थाभासे च विज्ञाने ज्ञानं तथतागोचरं। १५
परावृत्तं निराभासमार्याणां गोचरो ह्यसौ॥" १०. १४८।

"विषयः स हि बुद्धाना"मित्ययं तृतीयः पादः कारिकायाः स्फुटमेवैतानि सौगतशास्त्रवचनानि स्मृतिपथं प्रापयति—"विषयः सर्वबुद्धाना"मिति (च. श, पृ. १५९); "विषयः स हि बुद्धाना"मिति (च तुः श ति का, पृ. ४९७); "यो बुद्धानां विषय" इति (वि., पृ ६); "बुद्धगोचर" इति (वि., पृ. ११); २० "स्वप्रमाणो बुद्धविषयः" इति (स. प्र. पा., पृ. १२०, ९ क); "बुद्धानां विषयादपी"ति (म. सू. अ २०—२१, २६); "आर्याणां गोचरो यथा" इति च (ल. सू. ३, ८०)।

२। इदमुक्तं व ज्र च्छे दि का या म् (पृ. ४१)—"अपि तु खलु पुनः सुभूते समः स धर्मो न तत्र कश्चिद्विषमः। तेनोच्यतेऽनुत्तरसम्यक्सम्बोधिः। २५ निरात्मत्वेन निःस्वभावत्वेन निर्जीवत्वेन निष्पुद्गलत्वेन सदा सानुत्तरा सम्यक्-सम्बोधि"रिति।

३। अजशब्दस्य समशब्दस्य च तदर्थकयोरन्ययोर्वा शब्दयोर्युगपत्प्रयोग आगमशास्त्रेऽस्मिन्नसकृत्क्रियते। यथा "अजाति समतां गतम्" (३ १) इति; "अजं साम्यम्" (४. ९३, ९९, १००) इति च। ३०

चित्तस्येयं निश्चला स्थितिरेवान्यत्र ( ३. ४६ ) "अनिङ्गनं" चित्तमित्युक्तम्। उक्तं च तत्रैव तत्खलु ब्रह्मेति। यथा—

"यदा न लीयते चित्तं न च विक्षिप्यते पुनः।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा॥"[1]

इयमेव च चित्तस्य निश्चला स्थिति"र्वीतशोकमकाममभयं पद"मित्यत्या चा र्ये णा न्यत्र ( ४. ७८ ) प्रकटीकृता। सुगतशास्त्रे ( त्रि., पृ. ४३ ) त्वियमेव "विज्ञप्तिमात्रतायां चित्तमवस्थितं भवतीति" वर्ण्यते॥

"विषयः स हि बुद्धाना"मिति ( ४. ८० ) व्याकृतं तच्चित्तं भूयोऽपि व्याक्रियते—

**अजमनिद्रमस्वप्नं[2] प्रभातं भवति स्वयम्।**
**सकृद्विभातो ह्येवैष[3] धर्मधातुः[4] स्वभावतः॥८१॥**

---

१। आह च भा ष्य का रः ( ४. ८० ) "चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थितिर्यैषा ब्रह्मस्वरूपा स्थितिश्चित्तस्य अद्वयविज्ञानैकरसघनलक्षणेति" ( ४. ८० )। "अनिमित्तस्य चित्तस्येति या मोक्षाख्यानुत्पत्ति"रिति च ( ४. ७७ )। इदं चोक्तम् ( ल. सू. १०. १४५ )—

"चित्तं प्रवर्तते चित्रं चित्तमेव विमुच्यते।
चित्तं हि जायते नान्यच्चित्तमेव निरुध्यते॥"

२। अयं प्रथमः पादः प्रागपि द्विरधिगतः ( १. १६, ३. ३६ )।

३। छा. उ. ८. ४. २। "सकृद्विभातं सर्वज्ञ"मिति तु पूर्वमप्यधिगतम् ( ३. ३६ )। द्र :—नृ., उ. उ. ९ ; मुक्ति. उ. २ ७३।

४। आनन्दाश्रमपरिगृहीतेषु मया च परीक्षितेषु कतिपयेषु पुस्तकेषु "धर्मो धातुः स्वभावत" इति पाठः। अन्येषु तु "धर्मो धातुस्वभावत" इति। भा ष्य का र स्य द्वितीय एव पाठः सम्मतः। आ न न्द गि रि स्तु "धातुस्वभावत" इत्येकं पदं गृहीत्वा व्याचष्ट इति ब्रुवन्नेतमेव पाठमनुमन्यते। तथाप्यनयोस्तया "धातुः स्व०" पाठोऽप्यनेनाज्ञायतेति स्पष्टं प्रतीयते। वस्तुतोऽपि "धर्मधातुः स्वभावत" इत्येव पाठ उपपन्न इति स एव मया मूले विन्यस्तः। सौगतशास्त्रेष्वतिसुप्रसिद्धस्यापि धर्मधातुशब्दस्य सर्वथापरिचयाभावादेव "धर्मो धातुः स्वभावत" इति "धर्मो धातुस्वभावत इति च पाठावुद्भूतौ।" यद्यपीह प्रथमोऽसमस्तः पाठः ("धर्मो धातु"रिति) कथञ्चिद्गृह्येतापि, द्वितीयस्तु न शक्यते ग्रहीतुम्। विस्तर उपरिष्टाद्द्रष्टव्यो मूले।

तत्खलु निवृत्ताप्रवृत्तं निश्चलं चित्तं न जायत इत्यजम्। तच्चा निद्रमलीनम्। अस्वप्नमविक्षिप्तं च। तदिदं द्वयमपि प्राग्विवृतम् (१. १४, १६ ; ३. ३६)। किञ्च तत्तादृशं चित्तं स्वयमात्मना प्रभातं प्रभास्वरं भवति स्वयंज्योतिरित्यर्थः। हि यतस्तादृशचित्तरूप एष धर्मधातुः परमार्थः प्रकृत्या सकृद्विभातः सदैव प्रभास्वर एव। कः पुनरेष धर्मधातुः। किं वास्य प्रवृत्तिनिमित्तम्। आह। "आर्यधर्महेतुत्वाद्धर्मधातुः। आर्यधर्माणां तदालम्बनप्रभवत्वात्।" हेत्वर्थोऽत्र धात्वर्थ इति मध्यान्तविभागसूत्रभाष्ये (१. १७ ; पृ. ४२) वसुबन्धुः। विवृतं चैतत्तत्र टीकायां स्थिरमतिना "धर्मशब्देनात्रार्यधर्माः सम्यग्दृष्ट्यादयः सम्यग्विमुक्तिज्ञानपर्यन्ताः। तेषां हेतुरिति धातुः।" स्वलक्षणोपादाय[1]रूपधारणोऽयं धर्मशब्दो वर्तत इत्याह हेत्वर्थो ह्यत्र धात्वर्थः।"[2]

बहवः पर्याया धर्मधातोः। मैत्रेयनाथेन तु प्राधान्येन पञ्चैवोद्दिष्टा मध्यान्तविभागसूत्रे (१. १५= म. सू. टी., पृ. ४१)—

"तथता भूतकोटिश्चा[3] निमित्तः [परमार्थकः]।
धर्मधातुश्च पर्यायाः शून्यतायाः समासतः॥"

अर्थाश्चैषां तत्रैवोत्तरकारिकायां (१. १६) तेनैवोक्ताः समासेन। यथा—

"अनन्यथाऽविपर्यासतन्निरोधार्यगोचरैः।
हेतुत्वाच्चार्यधर्माणां पर्यायार्थो यथाक्रमं॥"

"एवमन्येऽपि पर्याया इहानुक्ताः प्रवचनादुपधार्या" इति चाह तत्र स्थिरमतिः। बोधिचर्यावतारपञ्जिकायां (पृ. ३५४) प्रज्ञाकरमतिश्च तस्मादन्यस्माच्च संगृह्य प्रदर्शयति पर्यायाननेकान्॥

---

१। उपादायरूपं नाम भौतिकं रूपम्।

२। "आर्यधर्महेतुत्वाद्धातु"रिति स्थिरमतिः (त्रि., पृ. ४४)।

३। अयं शब्दः स्थिरमतिनैवं व्याख्यातः। "भूतकोटिरिति भूतं सत्यमविपरीतमित्यर्थः। कोटिः पर्यन्तः। यतः परेणान्यज्ज्ञेयं नास्त्यतो भूतकोटिर्भूतपर्यन्तः" इति। म. सू. टी, पृ. ४१।

अथोक्तधर्मधातुगतमेव किञ्चिद्विमृश्यते। तत्रोत्तरं कारिकाद्वयं सहैव गृह्यते—

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा।**
**यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥८२॥**
**अस्ति नास्त्यस्ति-नास्तीति नास्ति-नास्तीति वा पुनः।**
**चलस्थिरोभयाभावैरावृणोत्येष बालिशः ॥८३॥**

**यस्य कस्य च** ग्राह्यग्राहकरूपस्य **धर्मस्य** पदार्थस्य **ग्रहेण** ग्राहेणाभिनिवेशेन पूर्वोक्तेन (४. ७५, ७६) यो ग्रहं करोति तस्य **सुखं नित्यं** सदा**व्रियत** आच्छाद्यते। **दुःखं** च सदा **विव्रियते** उद्घियते। ग्राह्यग्राहकाभिनिवेशेन पुरुषस्य सुखं तिरोधत्ते दुखं तु प्रादुर्भवतीति भावः॥

किञ्च। **असौ भगवान्**[1] धर्मधातुः (क) **अस्ति** विद्यत इति। (ख) **नास्ति** न विद्यत इति। एवम् (ग) **अस्ति नास्ति** चेत्युभय**मिति।** (घ) **वा** अथवा **पुनः न अस्ति न च नास्ती**त्यनुभयम्। अत्र द्वितीये पादे प्रथमो नकारो द्विर्ग्रहणीयो यथा गृहीतः। एवमभिनिविशमानो **बालिशो** मूढश्चतुर्भिर्विकल्पै**स्तं** भगवन्त**मावृणो**-

१। यथा वा तथा वा यत्किञ्चिल्लोके विभूतिमच्छ्रीमदूर्जितं वा तदेव भगवदित्युच्यते। यथा भगवती भवितव्यता। अन्यच्च। प्रज्ञापारमितेति धर्मधातोरपरं नामेत्युपरिष्टाद्वक्ष्यते। सा च प्रज्ञापारमिता भगवतीति वर्ण्यते सौगताना म ष्ट सा ह स्रि का प्र ज्ञा पा र मि ता दिषु। अतोऽपि धर्मधातौ भगवच्छब्दप्रयोग उपपन्न एव। आत्मनि प्रभुशब्दप्रयोगोऽपीदृश एव (भ. गी. ५. १४)।

इदं चेहावगन्तव्यम्। अत्रोत्तरत्र च (४. ८२, ८४) भगवच्छब्देनात्मा परामृश्यत इति भा ष्य का र आ न न्द गि रि श्च। न त्वेतदुपपद्यते। तथा हि। निवृत्तादिषु (४. ८०-८४) पञ्चसु कारिकासु निवृत्ताप्रवृत्तस्य चित्तस्य निश्चला स्थितिरेवेह मुख्यो विषयः। उत्तरयोरपि द्वयोः (४. ४५, ४६) स एवाधिकाधिकं विस्यते। तस्मात्कुतोऽत्रावकाश आत्मनः। अतो धर्मधातुरेवात्र ग्रहीतव्यः।

त्याच्छादयत्येव। कथम्। चतुर्भिर्विकल्पैरित्याह **चले**त्यादि। अत्र पाठक्रममपहायार्थक्रम आदरणीयः। तेन च **चलस्थिरोभया-भावै**रिति स्थिरचलोभयाभावैरिति पठनीयम्। ते च स्थिराद्य-श्चत्वारः शब्दा अस्तीत्यादिभिश्चतुर्भिः शब्दैर्यथाक्रमं सम्बध्यन्ते। **स्थिरः** स्थायी नित्य इत्यर्थः। असौ भगवान्नित्य इति विकल्प्य अस्तीति बालिशो मन्यते। एवमन्येष्वपि। **चलो**ऽनित्यः। असावनित्य इति विकल्प्य स नास्तीति मन्यते। **उभयः** स्थिरश्च चलश्च। नित्यानित्य इति भावः। असावीदृश इति विकल्प्यासावस्ति च नास्तिचेति स मन्यते। **अभाव** इत्युभयाभावो नित्यानित्योभयाभाव इत्यभिप्रायः। एवं चासौ न नित्यो नानित्य इति विकल्प्य स बालिशो न अस्ति न च नास्तीति मन्यमानश्च तमावृणोति॥

अस्ति-नास्त्यादिभिश्चतुर्भिर्विकल्पैर्धर्मधातुराव्रियते। वस्तुतस्तु स न तथेति यः पश्यति स पश्यति। स सर्वदृगित्याह—

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः।**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक्॥८४॥**

**एतास्तु** पूर्वकारिकायामुक्ता**श्चतस्रः कोट्यो**ऽन्ता निर्णयाः सिद्धान्ता विकल्परूपा इति भावः। यथा। अस्ति। नास्ति। अस्ति-नास्ति। नास्ति-न-नास्तीति च। अस्ति स इत्येके। नास्ति स इत्यन्ये। अस्ति च नास्ति च स इत्यपरे। न सोऽस्ति न च नास्तीति तदितर इति चतस्रः **कोट्यो** यासां कोटीनां ग्रहैरुपादानैराग्रहैर्निर्बन्धैरसत्याभिनिवेशैर्वा **भगवान्**पूर्वोक्तो धर्मधातुः **सदावृत** आच्छादितः। वस्तुतस्तु स भगवानाभिः प्रागुक्ताभिश्चतसृभिः कोटिभि**रस्पृष्टो**ऽसंसृष्टः। न लेशतोऽपि सम्बद्धः। इत्येवं स **भगवान् येन दृष्टः स सर्वदृक्** सर्वज्ञो (१. १२, ४. ३६) भवति।

सन्ति वादिनां चतस्रो दृष्टयो या इह कोट्योऽन्ता इत्युच्यन्ते अस्तिनास्त्यादिरूपाः। तत्र वेदान्तिनोऽस्तीत्येवातिष्ठन्ते। तथा हि।

"अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते" क. उ. ६. १२।

"अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति।" तदेव, ६. १३।[1]

---

१। मै. उ. २४. ४।

सौगतानां तु तासु नैकापि। तत्त्वं हि तेषां सर्वारोपविनिर्मुक्तम्। तदुक्तम्—

"सर्वारोपविनिर्मुक्तं स्वतस्तत्त्वं चकाशति।
शून्यताद्यभिधानैस्तु तत्रारोपनिराक्रिया॥" त. आ.

५ माध्यमिकानां च ताथागतानां मतं सुस्पष्टमुद्घोषितम्—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥"

सु. स., पृ. १७।[1]

अत्रैतानि सौगतशास्त्रवचनानि—

१० "कारणैः प्रत्ययैश्चापि येषां लोकः प्रवर्तते।
चातुष्कोटिकया युक्त्या न ते मन्मतकोविदाः॥" ल. सू. ३. २०

"पुनरपरं महामते बालपृथग्जना अनादिकालप्रपञ्चदौष्ठुल्यस्वप्रतिविकल्पना नाटके नृत्यन्तः स्वसिद्धान्तनयदेशनायामकुशलाः स्वचित्तदृश्यबाह्यभावलक्षणाभिनिविष्टा उपायदेशनापाठमभिनिविशन्ते। न स्वसिद्धा-
१५ न्तनयं चातुष्कोटिकनयविशुद्धं प्रतिविभावयन्ति।" ल. सू., पृ. १७१।

"यच्च महामते न कार्यं न कारणं तन्न सन्नासत्। यच्च न सन्नासत् तच्चातुष्कोटिकबाह्यं। चातुष्कोटिकं च महामते लोकव्यवहारः।" ल. सू., पृ. २८८।[2]

"पुनरपरं महामते चतुष्टयविनिर्मुक्ता तथागतानां धर्मदेशना
२० यदुतैकत्वान्यत्वोभयानुभयविवर्जिता नास्त्यस्तिसमारोपापवादविनिर्मुक्ता सत्यप्रतीत्यसमुत्पादनिरोधमार्गविमोक्षप्रवृत्तिपूर्वका महामते तथागतानां धर्मदेशना।" तदेव, पृ. ९६।

---

१। अत्र कारिकेयं सरहपादस्येत्युक्तम्। बहुषु च ग्रन्थेषु चतेयम्। यथा। ज्ञा. स २८; ष. द. स. (बौद्धदर्शनम्); स. सि. स. ३. ७
२५ (पाठभेदेन); बो. अ. प, पृ. ३५९; सा. द. २. ४४ (विज्ञानभिक्षुः); उपः—ब्रह्मजालसुत्त, २. २७ (= दी. नि १. २७)।

२। क्वचित्क्वचिच्च चतसृषु कोटिष्वाद्यास्तिस्र एव दृश्यन्ते न पुनरन्त्यापि। यथा। म. का. १. ७, ७. २०; च. श. १६. २५; ल. सू., पृ. १९६। क्वचित्पुनराद्ये द्वे एव। अत्र द्रष्टव्यो विस्तरो वृत्तिकृतः कृतौ चतुष्कोटि-
३० नामके ले खे (आशुतोष स्मारक ग्रन्थे, १९१७ ई. च); पृ. ८९। अत्रानुरूपाणि वेदान्तवचनान्यपि प्रदर्शितानि।

इदमिह चिन्तयितव्यम्। योऽयं धर्मधातुः स एव वेदान्तिनां ब्रह्मेति स्पष्टवाचा विवेचितमाचार्येण (३. ४६)। किञ्च। धर्मधातुः प्रज्ञापारमिता चानर्थान्तरम्। तदुक्तम्। "एतदेव च प्रज्ञापारमिता-शून्यतातथताभूतकोटिधर्मधात्वादिशब्देन संवृतिसत्यमुपादायाभिधीयते" (बो. अ, प, पृ. ४२१)। प्रज्ञापारमिता च सगौरवादरं भगवतीत्युच्यते। धर्मधातुश्च भगवानिति विशिष्यत इति सद्य एव दृष्टम्। किञ्च। प्रज्ञापारमितारूपो धर्मधातुरद्वयं ज्ञानमेव। अद्वयं च ज्ञानं तथागत एव। यथोक्तं दि ङ् ना गे न प्र ज्ञा पा र मि ता पिण्डार्थे[१]—

"प्रज्ञापारमिता ज्ञानमद्वयं स तथागतः।
साध्या तादर्थ्ययोगेन ताच्छाब्द्यं ग्रन्थमार्गयोः॥"

अ. अ. आ., पृ. २८; सु. स., पृ. २४।

ल ङ्का व ता र सू त्रे (पृ. १९०) च

"यत्सर्वप्रपञ्चातीतं स तथागतः।"[२]

---

१। ओ बे र मि ले र रचितः प्र ज्ञा पा र मि ता वा दः (आ क टा ओ रि ए ण्टा लि या, आंग्लभाषायाम्), ९, पृ. ७, ४९।

२। ल. सू, १. पृ. १८७—१९०। इदमपि तत्रैव (पृ. १९१-१९२)—
"नहि महामते अभावस्तथागतो० किन्तु महामते मनोमयधर्मकायस्तस्यैत-दधिवचनं यत्र (? यदुत ?) सर्वतीर्थकरश्रावकप्रत्येकबुद्धसप्तभूमिप्रतिष्ठितानाम-विशेषः। सो (?) ऽनुत्पादस्तथागतस्यैतन्महामते पर्यायवचनं। तद्यथा महामते इन्द्रः शक्रः पुरन्दरः। हस्तः करः पाणिः। तनुर्देहः शरीरं। पृथिवी भूमिर्वसुन्धरा। खमाकाशं गगनमित्येवमाद्यानामेकैकस्य भावस्य बहवः पर्यायवाचकाः शब्दा भवन्ति विकल्पिताः। न चैषां नामबाहुल्याद्भावबहुत्वं विकल्प्यते। न च स्वभावो न भवति। एवं महामते अहमपि सहायां लोकधातौ त्रिभिर्नामासंख्येयशतसहस्रैर्बालानां श्रवणावभासमागच्छामि। तैश्चाभिलपन्ति मां न च प्रजानन्ति तथागतस्यैते नामपर्याया इति। तत्र केचिन्महामते तथागतमिति मां प्रजानन्ति। केचित्स्वयम्भुवमिति नायकं विनायकं परिणायकं बुद्धमृषिं वृषभं ब्रह्माणं (ब्राह्मणमिति पाठभेदः) विष्णुमीश्वरं प्रधानं कपिलं भूतान्तं अरिष्टं नेमिनं (अरिष्टनेमिनं ?) सोमं भास्करं रामं व्यासं शुक्रमिन्द्रं बलिं वरुणमिति चैके संजानन्ति। अपरेऽनिरोधानुत्पादशून्यतां तथतां भूततां भूतकोटिं धर्मधातुं निर्वाणं नित्यं समतामद्वयमनिरोधमनिमित्तं प्रत्ययं बुद्धहेतूपदेशं विमोक्षमार्गसत्यानि सर्वज्ञं ज्ञानं मनोमयमिति चैके संजानन्ति। एवमादिभिर्महामते० मां जनाः संजानन्त उदकचन्द्र इवाप्रविष्टनिर्गतं न च बाला अवबुध्यन्ते द्वयान्तपतितया सन्तत्या।"

धर्मधातुं पश्यतः सर्वज्ञत्वलाभ इत्युक्तम्। तस्मिंश्च लब्धे कृतं कर्तव्यं लब्धं च लब्धव्यम्। न किञ्चिदीहितव्यमवशिष्यत इत्येतदर्थं उत्तरकारिकारम्भः।

**प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम्।**
**अनापन्नादिमध्यान्तं किमतः परमीहते ॥८५॥**

स पुरुषः **कृत्स्नां** समग्रां **सर्वज्ञतां प्राप्य** तेन च **अनापन्नादिमध्यान्तम्** अनापन्ना अनधिगता आदिमध्यान्ता यस्य तत्। यस्य नादिर्न मध्यं नाप्यन्तोऽधिगम्यते तत्। आदिमध्यान्तरहितमित्यर्थः। **अद्वयं** ग्राह्यग्राहकरहितमिति भावः। **ब्राह्मण्यं**[1] ब्राह्मणत्वम्। ब्राह्मणः पुनर्ब्रह्मज्ञो ब्रह्म वेदेति (पा. ४. २. ५६)। ब्रह्म च प्राग् (३. ४६) निरूपितं विवृतं (४. ८४ वृत्तौ) च। **पदं** स्थितिमवस्थां (१. १५; ४. ७८)। ब्राह्मण्यमेव पदम्। तच्च **प्राप्य। अतः** अस्मात्पदात्परमन्यत् **किमीहते** इच्छति। न किञ्चिदिति भावः। ततः परं कस्यचिदपीहितव्यस्याभावात्॥

---

१। सौगतेषु ग्रन्थेषु श्रमण इव ब्राह्मणोऽपि सत्क्रियते। तदेतच्छ्रमण-ब्राह्मणशब्दयोरसकृत्सहप्रयोगादेव स्पष्टम्। कदाचिदन्वर्थो ब्राह्मणो न भिद्यते बुद्धात्। यथा

"उसभं पवरं वीरं महेसिं विजिताविनं।
अनेजं नहातकं बुद्धं तमहं ब्रूमि ब्राह्मणं॥
ध. प. २६. ४०

इदं चावगन्तव्यम्। सौगतैर्ब्राह्मणशब्दस्य विलक्षणैव काचित् व्युत्पत्तिः कल्प्यते। यथा वाहितपापो ब्राह्मण इति (ध. प. २६. ६)। इदं चाह शान्तिरक्षितः (त. स. १५८९-१५९०)—

"ये च वाहितपापत्वाद् ब्राह्मणाः पारमार्थिकाः।
अभ्यस्तामलनैरात्म्यास्ते मुनेरेव शासने॥
इहैव श्रमणस्तेन चतुर्धा परिकीर्त्यते।
शून्याः परप्रवादा हि श्रमणैर्ब्राह्मणैस्तथा॥

अत्राह कमलशीलः पञ्जिकायाम् "अत एव भगवतोक्तमिहैव श्रमण इहैव ब्राह्मणः। शून्याः परप्रवादाः श्रमणैर्ब्राह्मणैरिति।"

अद्वयं ब्राह्मण्यमेव पदं विप्राणां शमदमविनयैरधिगम्यमिति मन्वानो विद्वाञ्छान्तो भवेदित्याह—

**विप्राणां विनयो ह्येष शमः प्राकृत उच्यते।**
**दमः प्रकृतिदान्तत्वादेवं विद्वाञ्शमं व्रजेत् ॥८६॥**

यदेतदद्वयं ब्राह्मण्यं पदमेष हि एव **विप्राणाम्।** ते विप्रा येषां चेतसि कस्यचिद्भावस्य समुद्रेकादन्तश्चित्तं वेपत इव। ततश्च मन्त्रास्तेषां मुखतः प्रादुर्भवन्ति। ते च सामान्येन निघण्टूक्ता (३. १५) मेधाविनो ये खलु तत्र विप इति विपा इति विपश्चित इति चान्वर्थमुच्यन्ते। तेषां **प्राकृतः** स्वाभाविकः **विनयो** विनीयतेऽनेनेति शिक्षा। एष एव विनय इत्यत्र आयुर्वै घृतमित्यादिष्विव कार्ये कारणोपचारः। ईदृशेन प्राकृतेन विनयेन तदद्वयं ब्राह्मण्यं साध्यत इति भावः। एवमन्यत्रापि। एष एव च तेषां विप्राणां **प्राकृतः शमः** उपशमो निवृत्तिरन्तरिन्द्रियनिग्रहो वा। एष च **प्रकृतिदान्तत्वात्** प्रकृत्या स्वभावेन दान्तत्वाद्दमनाद्धेतोः प्राकृतो दम आत्मनिग्रहो बाह्येन्द्रियनिग्रहो वोच्यते। शमदमविनयैस्तदेव पदं साध्यत इत्यभिप्रायः। **एवमनेन** प्रकारेण **विद्वान्** पुरुषः **शमं** व्रजेत् शान्तो भवेत्। न तथा किमपि कुर्यात् येन चित्तं विक्षिप्यत इत्यभिप्रायः। इहेयं श्रुतिरनुसन्धेया (बृ. उ. ४. ४. २३) "तस्मादेवंविच्छान्तो दान्त उपरतः° आत्मानं पश्यति॥"

पूर्वासु सप्तसु कारिकासु (४. ८०-८६) मुख्यतया चित्तं ज्ञानं वा तथा तथा चिन्तितम्। उत्तरास्वपि तिसृषु (४. ८७-८९) तदेव प्रकारान्तरेण चिन्त्यते—

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते।**
**अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥८७॥**
**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम्।**
**ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्त्तितम् ॥८८॥**

यत्**सवस्तु** वस्तु आलम्बनं ज्ञानस्य विषयो ज्ञेयमिति भावः। तेन सहितम्। **सोपलम्भं च** उपलम्भ उपलब्धिस्तस्य वस्तुन इति

भावः। तेन सहितं चेत्येवं **द्वयं** द्वावयववावस्येति द्विविधमिति भावः। यत्र विषयस्तदुपलब्धिश्चेत्युभयमपि वर्तते तदित्यभिप्रायः। **इदं लौकिकं** हालिकादिसकललोकसाधारणमिति भावः। **इष्यते। यद्वस्तु** विषयविरहितं **सोपलम्भं** विषयोपलब्धिसहितं च। यत्र ५ न विषयोऽपितु तदभावेऽपि केवलं तदुपलब्धिरेव विद्यते तत् **शुद्धं लौकिकमिष्यते।** अस्य ज्ञानस्य विषयविरहेण तन्मलसंसर्गाभावाच्छुद्धत्वं पूर्वस्मादुत्कृष्टत्वं च। यत्पुन**रवस्तु** विषयविरहितम् **अनुपलम्भं** विषयोपलब्धिविरहितं च तल्लोकोत्तर"मपरिचितत्वाल्लोके समुदाचाराभावान्निर्विकल्पत्वाच्च लोकादुत्तीर्णमिति **लोकोत्तर**"मिति १० (त्रि., पृ. ४४) **स्मृतं** शास्त्रेषु सौगतेषु। एवं **बुद्धैः** सुगतैः **ज्ञानं ज्ञेयं च सदा विज्ञेय**मवगन्तव्यं **प्रकीर्तितं** प्रख्यापितम्॥

सुप्रसिद्धं तावल्लौकिकानां परीक्षकाणां च यद्यदा कश्चिदधमप्रज्ञः कमप्यश्वं पश्यति तदा तत्र स खल्वश्वस्तस्य चोपलब्धिरितीदमुभयमपि वर्तत इति। इदं ज्ञानं ज्ञेयं च लौकिकम्। यदा पुनः कश्चिन्मध्यमप्रज्ञस्तमे- १५ वाश्वं पश्यति जानाति च तस्यातात्त्विकत्वं। वस्तुतो नायमश्वोऽपितु वासनावशाज्ज्ञानमेव तद्रूपेण परिणतमिति तदा सोऽश्वस्यैवमसद्भावं तत्त्वतो जानन्नपि तमुपलभत एव। तस्येदं ज्ञानं ज्ञेयं च शुद्धं लौकिकम्। यदा तु कश्चिदुत्तमप्रज्ञस्तमेवाश्वं पश्यन्नपि न पश्यति जानाति च नायमश्वस्तत्त्वतः तदा तस्य न स विषयो न च तदुपलम्भ इतीदं २० लोकोत्तरमुच्यते॥

"ज्ञानं ज्ञेयं च विज्ञेय"मित्युक्तम् (४. ८८)। तत्र सिद्धान्ते ज्ञानं ज्ञेयाभिन्नम्। उक्तं चेदं प्रागपि (४. १)। इह ज्ञाने परीक्ष्यमाणे लोकदृष्ट्या ज्ञेयमपि वक्तव्यमिति पृथङ्निर्देशः। वस्तुतस्तु ज्ञानमेव परीक्ष्यते न पुनर्ज्ञेयमपि। तस्याभावात्॥

२५ इह लौकिकशुद्धलौकिकलोकोत्तरेषु त्रिषु ज्ञानेषु प्रथमं सुप्रसिद्धं सर्वत्र। द्वितीयं तृतीयं च पुनर्विज्ञानवादिनां ताथागतानामेव तन्त्रेषु। यथाह मैत्रेयनाथः (म. सू. टी., पृ. १९)—

"परतन्त्रस्वभावो हि शुद्धलौकिकगोचरः।"

स्थिरमतिश्च (त्रि., पृ. ४०)—

"निर्विकल्पलोकोत्तरज्ञानदृश्ये परिनिष्पन्ने स्वभावेऽदृष्टेऽप्रतिविद्धेऽसाक्षात्कृते तत्पृष्ठलब्धशुद्धलौकिकज्ञानगम्यत्वात्परतन्त्रोऽन्येन ज्ञानेन न गृह्यते।"

ल ङ्का व ता र सू त्रे (पृ. १५६) त्वेतेषां त्रयाणां ज्ञानानामन्तिमे द्वे लोकोत्तरं लोकोत्तरतमं चेति मनाग्भिन्नेन नाम्ना यथाक्रममुक्ते। नाममात्रभेदोऽयं न वस्तुभेद इत्यकिञ्चित्करम्। एवं च तानि तत्र (पृ. १५६) व्याख्यातानि—

"तत्र लौकिकं ज्ञानं सदसत्पक्षाभिनिविष्टानां सर्वतीर्थकरबालपृथग्जनानां च। तत्र लोकोत्तरं ज्ञानं सर्वश्रावकप्रत्येकबुद्धानां स्वसामान्यलक्षणपतिताशयाभिनिविष्टानां। तत्र लोकोत्तरतमं ज्ञानं बुद्धबोधिसत्त्वानां निराभासधर्मप्रविचयादनिरोधानुत्पाददर्शनात् सदसत्पक्षविगतं तथागतभूमिनैरात्म्याधिगमात्प्रवर्तते।[1]

एतदेव लोकोत्तरं लोकोत्तरतमं वा ज्ञानमधिकृत्य व सु ब न्धु नैवमुच्यते (त्रि., पृ. २९)—

"अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।"

व्याचष्टे चेदं तत्र (त्रि., पृ. ४४) स्थि र म तिः—

"तदनेन श्लोकद्वयेन दर्शनमार्गमारभ्योत्तरविशेषगत्या फलसम्पत्तिरुद्भाविता विज्ञानमात्रप्रविष्टयोगिनः। तत्र ग्राहकचित्ताभावाद्ग्राह्यार्थानुपलम्भाच्च **अचित्तोऽनुपलम्भोऽसौ**। अपरिचितत्वा[2]ल्लोके समुदाचाराभावान्निर्विकल्पत्वाच्च लोकादुत्तीर्णमिति ज्ञानं लोकोत्तरं च तत्।"

नैष ज्ञानभेद उपनिषत्सु॥

---

१। सामान्येन तु सौगतशास्त्रेषु लौकिकलोकोत्तरभेदेन पदार्था द्विविधाः (म. वृ., पृ. ५०१)। चत्वारो मार्गाः। चत्वारि मार्गफलानि। निर्वाणापरनामकोऽसंस्कृतधातुश्चेति नव धर्माः लोकोत्तराः। अन्ये तु चित्तधर्मा लौकिकाः। ध. स, § १०९३, १०९४।

२। अयमेव पाठः साधीयानिति प्रतीयते यथा समर्थितो भोटपाठेन। मुद्रितपुस्तके त्वनुचितत्वादिति दृश्यते। वचनमिदं प्रागपि सकृदुद्धृतमस्यां प्रकृतकारिकावृत्तौ।

एतदवगमात्सर्वज्ञत्वं लभ्यत इत्याह—

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।**
**सर्वज्ञता हि सर्वत्र भवतीह महाधियः ॥८६॥**

**त्रिविधे** पूर्वोक्ते[1] **ज्ञाने ज्ञेये च क्रमेण विदिते** सति **इह हि महाधियो** महती धीर्यस्य तस्य । महाधीशब्दो बोधिसत्त्ववाचीति बौद्धशास्त्रेषु (म. सू. अ. १६. ७३ ; म. व्यु. ६२७) । **सर्वत्र**[2] **सर्वज्ञता स्वय**मात्मनान्तरेणैव प्रयत्नमिति भावः । **भवति** । सर्वज्ञता च बुद्धत्वमेव ( बो. अ. प., पृ. ४४७-४४८ ; अ. प्र. पा., पृ. ८२-८३ ) । सा च त्रिविधा । सर्वाकारज्ञता मार्गज्ञता वस्तुज्ञानं च ॥

अथ सर्वज्ञतानुकूलाश्चत्वारः पदार्था बौद्धानां महायानतो विज्ञेया इत्याह—

**हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयानतः ।**[3]
**तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥६०॥**

**हेयं** त्याज्यं । **ज्ञेयं** ज्ञातव्यम् । **आप्यं** प्राप्यम् । **पाक्यं** पाकयोग्यं पक्तव्यम् । एतानि चत्वारि **अग्रयानतो** महायानतः सुप्रथितात्सौगतसम्प्रदायाद् **विज्ञेया**न्यवगन्तव्यानि । तान्यनुपदमेव वितन्यन्ते । यत्त्विहा**ग्रयानं** नाम तन्महायानमेव नान्यत्किञ्चिदिति

---

१ । अन्यथापि ज्ञानस्य त्रैविध्यमधिगम्यते । यथा लङ्कावतारसूत्रे ( पृ. १५७ ) । "तत्र त्रिविधं ज्ञानं स्वसामान्यलक्षणावधारकं चोत्पादव्ययावधारकं चानुत्पादानिरोधावधारकं च ।" प्रकृतिश्च ज्ञानस्यैवमुच्यते तत्रैव ( पृ. १५७ ) "असङ्गलक्षणं ज्ञानं ।० असङ्गस्वभावलक्षणं ज्ञानं ।० अप्राप्तिलक्षणं स्वप्रत्यात्मार्यज्ञानगतिगोचरमप्रवेशानिर्गमत्वादुदकचन्द्रवज्जले ।" न पुनरेतत्त्रैविध्यमभिप्रेतमिहेति स्पष्टम् ।

२ । "सर्वत्र सर्वदेति" भाष्यकारः ।

३ । परीक्षितेषु सर्वेषु संस्करणेषु हस्तलिखितपुस्तकेषु च ०याणत इति पाठः ।

सुस्पष्टम्। महायानग्रन्थेषु प्रचुरप्रयोगात्तस्य शब्दस्य तस्मिन्नेवार्थे।[1] कदाचिच्चेदं श्रेष्ठयानमित्यपि कथ्यते।[2] तेषां चतुर्णां मध्ये **विज्ञेयात्** पूर्वोक्तादज्ञेयादित्येत्। छन्दोऽनुरोधात्त्वत्र न व्युपसर्गप्रयोगः। **अन्यत्र** त्रिषु हेयाज्ञयपाक्येषु **उपलम्भ** उपलब्धिः **स्मृत** उक्त इति भावः। अन्यानि त्रीण्युपलभ्यन्ते। न पुनर्ज्ञेयमपीति भावः। तस्य परिकल्पितत्वात्। न हि स्वप्नादिषु परिकल्पितं किञ्चिद्वस्तुत उपलभ्यते। नाममात्रं हि तत्॥

किं पुनरवगन्तव्यं हेयादिभिश्चतुर्भिः शब्दैः। तत्र यथा व्याख्यातम स ङ्गे न (म. सू. अ. ४. ७४, ७५) तथा हेयशब्देन परतन्त्रस्वभावो ज्ञेयशब्देन तु परिकल्पितस्वभावोऽवगन्तव्यः।[3] तदुक्तं म हा या न-सू त्रा ल ङ्का रे (११. १३, पृ. ५८)--

> "तत्त्वं यत्सततं द्वयेन रहितं भ्रान्तेश्च संनिश्रयः
> शक्यं नैव च सर्वथाभिलपितुं यच्चाप्रपञ्चात्मकं।
> ज्ञेयं हेयमथो विशोध्यममलं यच्च प्रकृत्यामलं
> यस्याकाशसुवर्णवारिसदृशी क्लेशाद्विशुद्धिर्मता॥"[4]

---

१। तद्यथा। "पिटकत्रयं सूत्रविनयाभिधर्माः। तदेव त्रयं हीनयानाग्रयानभेदेन द्वयं भवति।" म. सू अ, पृ. ५३। एवं स पु. (क). ३. १. ९. ६१; म. सू. अ., पृ. ८३; स. सू. (राजेन्द्रलालमित्रकृतनेपालानीतबौद्धपुस्तकसूचीपत्रम), पृ २२९; ल वि., पृ ४०८; व. छे., पृ. ३०. ३३। एवमन्यत्रापि।

२। व. छे., पृ ३०।

३। अन्यत्र तु (बो. अ. प, पृ. ४४७) "ज्ञेयं पञ्चविध"मुक्तम्। तद्यथा। लोकधातुः सत्त्वो धर्मो विनय उपायश्चेति (म. सू. टी., पृ. ६)। न त्विदमिहाभिप्रेतमिति प्रतिभाति।

४। अन्तिमपादार्थो मै त्रे य ना थे नै वमुक्तो म ध्या न्त वि भ ङ्ग सू त्रे (१. १७)—

"अब्धातुकनकाकाशशुद्धिवच्छुद्धिरिष्यते।" इति।

तत्त्वं यदित्यादि श्लोकस्त्वेषो ऽस ङ्गे नै वं तत्र व्याख्यातः (पृ. ५८)—
"सततं द्वयेन रहितं तत्त्वं परिकल्पितः स्वभावो ग्राह्यग्राहकलक्षणेनात्यन्तमसत्त्वात्। भ्रान्तेः संनिश्रयः परतन्त्रस्तेन तत्परिकल्पनात्। अनभिलाप्यमप्रपञ्चात्मकं च परिनिष्पन्नः स्वभावः। तत्र प्रथमं तत्त्वं परिज्ञेयम्। द्वितीयं परिहेयम्। तृतीयं विशोध्यं चागन्तुकमलाद्विशुद्धं च प्रकृत्या। यस्य प्रकृत्या विशुद्धस्याकाशसुवर्णवारिसदृशी क्लेशाद्विशुद्धिः। न ह्याकाशादीनि प्रकृत्याऽशुद्धानि न चागन्तुकमलापगमादेषां विशुद्धिर्नेष्यते।"

आप्यं नाम प्राप्यम्। एतेन धर्मधातुरभिप्रेतः। तदुक्तं महायानसूत्रालङ्कारे (१९. ५६) "प्राप्यं धर्मधातु"र्यः खलु परिनिष्पन्नस्वभावः। पाक्यशब्दात्तु सत्त्वपरिपाकचर्याभिप्रेयते। तदर्थश्च विनयेन शिक्षया सत्त्वस्य नाम जीवस्याशयस्य वा परिपाचनं परिपाकावस्थापादनम्। अपरिपक्वाशयो न कथमपि समर्थः परमार्थाधिगम इति करणीया सत्त्वपरिपाकचर्या। सा चात्मनः परस्य चोभयोः।[१]

---

१। "सत्त्वपरिपाकचर्या द्वयोरेव परिपाचनार्थम्। परिपाचनं ह्यत्र विनयनम्।" म. सू. अ. २०-२१. ४२ ; द्र :—२७. ३, २२, ३६ ; १९. ९६ ; दि. अ., पृ १२९ ; बो. भू., पृ. २२।

आत्मपरिपाकस्त्वेवमुक्तः (म. सू. अ. ८. १)—

"रुचिः प्रसादः प्रशमोऽनुकम्पना
क्षमाथ मेधा प्रबलत्वमेव च।
अहार्यताङ्गैः समुपेतता भृशं
जिनात्मजे तत्परिपाकलक्षणम् ॥"

"रुचिर्महायानदेशनाधर्मे। प्रसादस्तद्देशके। प्रशमः क्लेशानाम्। अनुकम्पा सत्त्वेषु। मेधा ग्रहणधारणप्रतिवेधेषु। प्रबलत्वमधिगमे। अहार्यता मारप्रवादिभिः। प्राहाणिकाङ्गैः समन्वागतत्वम्। भृशमिति रुच्यादीनामधिमात्रत्वं दर्शयति। एष समासेन नवप्रकार आत्मपरिपाको वेदितव्यः।"

एतदपि तत्रैव (८. ११)—

"इति नवविधवस्तुपाचितात्मा
परपरिपाचनयोग्यतामुपेतः।
शुभमयशतप्रवर्धितात्मा
भवति सदा जगतोऽग्रबन्धुभूतः ॥"

काश्यपपरिवर्तेऽपि (§ ३१)—

"तद्यथा काश्यप तेजोधातुः सर्वसस्यानि परिपाचयति एवमेव काश्यप बोधिसत्त्वस्य प्रज्ञा सर्वसत्त्वानां सर्वशुक्लधर्मान्परिपाचयति।०"

बोधिसत्त्वभूमौ समग्रे षष्ठे पटले सविस्तरमयमेवार्थश्चिन्तितः।

इदं चानुसन्धेयं महायानसूत्रालङ्कारे (१९—५६)—"पञ्चविधं हि वस्तु बोधिसत्त्वानामप्रमेयम्। परिपाक्यं वस्तु सत्त्वधातुरविशेषेण विशोध्यं लोकधातुर्भाजनलोकसंगृहीता। प्राप्यं धर्मधातुः। परिपाचनयोग्यं विनेयधातुः। सम्यग्देशनावस्तु विनेयोपायधातुः।"

अपः लोकपक्तिः (शत. ब्रा. ११. ९. ७. १)।

अथोत्तरासु तिसृषु कारिकास्वग्रयानस्य काश्चन दृष्टय उच्यन्ते—

**प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः।**
**विद्यते नहि नानात्वं तेषां क्वचन किञ्चन ॥९१॥**

**प्रकृत्या** स्वभावेन **सर्वे धर्मा** भावा **आकाशवत्**। तदेतदागमानुसारेण (अ. सा. प्र., पृ. २९७) "धर्मान्यो गगनोपमान्" इत्यत्र प्राग् (४. १) विस्तरशो व्याख्यातम्। ते च धर्मा **अनादय** आदिरहिताः अजत्वा**ज्ज्ञेयाः**। तेषां धर्माणां **क्वचन** किञ्चन नानात्वं भेदो **नहि** नैव विद्यते। "नेह नानास्ति किञ्चनेति' प्रसिद्ध उपनिषद्वादः (बृ. उ. ४. ४. १९; क. उ. ४. ११; कौ. उ. ३. ८)। विचारितं चैतदन्यत्रापि (न्या. सू. सवात्स्यायनभाष्यम्, ४. १. ३४)। द्र: २. ३४; ४. ९४, १००।

**आदिबुद्धाः प्रकृत्यैव[1] सर्वे धर्माः सुनिश्चिताः।**
**यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥९२॥**

**प्रकृत्या** स्वभावे**नैव सर्वे धर्मा आदिबुद्धा** आदौ आदितो वा[2] प्रथमत इत्यर्थः। बुद्धा बुद्धस्वरूपाः। इह बुद्धशब्दो बोधार्थः। ततश्च बोधरूपा ज्ञानमया इति भावः। एतच्च ज्ञानमद्वयं ज्ञानं यत्पूर्वमसकृद्दृष्टम्। एतदेव च तथागतशब्देनाप्युच्यत इत्यपि प्रदर्शितं प्राक् (४. ८२—८४)। उक्तं च स त श ति का प्र ज्ञा पा र मि ता या म् (पृ. १२८)—

"तथागतं भदन्त शारद्वतीपुत्र पर्येषितुकामेनात्मा पर्येषितव्यः। आत्मेति भदन्त शारद्वतीपुत्र बुद्धस्यैतदधिवचनम्।"

तथागतो बुद्धश्चेति पर्यायौ। अभूताभिनिवेशात्सर्वे धर्मा आरोपितेनैव रूपेण दृश्यन्ते। वस्तुतस्तु ते बुद्धो वा बोधो वा ज्ञानं वा।[3] एवं ते धर्मा आदिबुद्धत्वेन **सुनिश्चिताः** सुनिर्णीता भवन्ति। यस्य पुरुषस्यैवं

---

१। ४. ९३।

२। "आदौ बुद्धा" इत्यन्यत्र (४. ९८)। उप: "आदिशान्ताः" (४. ९३)। भोटपाठाददितः शान्ता इति तदर्थोऽवगम्यते।

३। बुद्धशब्दः श ङ्क रे ण शा री र क भा ष्ये (२. १. १४) आत्मानं ब्रह्मावगमयितुं "नित्यशुद्धबुद्धमुक्त" इत्यसकृत्प्रयुक्तस्तत्र तत्र। द्रष्टव्य स वे दा न्त सा रे ऽपि (पृ. ३८—३९, § २८)। सुविदितं खल्वेतद्वैदान्तिकानाम्।

**क्षान्ति**[1]**रभ्युपगमो दृष्टिर्लब्धी रुचिर्वा भवति सोऽमृतत्वाय कल्पते ॥**

---

१। सन्ति बौद्धानां तिस्रः क्षान्तयः। दुःखाधिवासना क्षान्तिः धर्मनिध्यानक्षान्तिः परापकारमर्षणक्षान्तिश्च। सन्ति च तच्छास्त्रेष्वस्य शब्दस्यान्येऽप्यर्थाः। यथाधिवासनाक्षान्तिः। अभ्युपगम इति तदर्थः। "यथा खमतीति अधिवासनखन्ति" ( अ. नि. १. ९४ म. पू )। अन्यच्च ( अ. नि. ३. ११८ ) "इमेसं आवुसो तिण्णं पुग्गलानं कतमो ते पुग्गलो खमति अभिक्कन्तरो च पणीततरो च" (एषामायुष्मंस्त्रयाणां पुद्गलानां कतमस्ते पुद्गलः क्षमते अभिकान्ततरश्च प्रणीततरश्चेतिच्छाया )। अत्रार्थ क था का रः "खमतीति रुचतीति" ( क्षमत इति रोचत इति च्छाया ) आह। अत्र क्षान्तिर्नाम रुचिरिति स्पष्टम्।

किञ्च सु त्त नि पा ते (८९७) गाथायां म हा नि द्दे स का रे ण क्षान्तिशब्दस्य प्रेम च्छन्दो रागश्चेति त्रयोऽर्था दर्शिताः। ते च रुचेरेव भेदाः। विवृतश्चा र्थ क था-का रे ण (चु. नि, पृ. १६४) क्षान्तिशब्द एतः शब्दैर्यथार्हंष्टीरुचिर्लब्धिरध्याशयोऽभिप्रायश्चेति। द्रः विभ., पृ २४९।

"यथा ते खमेय्य (क्षमेत)" इत्यत्र (ध. प. अ. १. ४०) "खमेय्येति रोचेते"त्यर्थः। अपिच सं यु त्त नि का ये ( ४. ३४८ ) "भूतपुब्बं भन्ते चत्तारो सत्थारो नानादिट्ठिका नानाखन्तिका नानारुचिका।" द्रः म. नि १. ४८७; २. ४३; स. पु., पृ. १३६; म. सू. अ. ११. ९२; स. रा. सू. ७; ध. स., पृ. ६३; म. वृ, पृ. ३६२, अ. को. ६. १६९; ल. सू. पाठः, पृ. ३९०।

एवं सौगतसंस्कृतेऽपि। यथा "यथा ते क्षमते तथैतं व्याकुरु", वी. व, पृ. ७४। "यावत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघ" इति। पा. लो व., पृ. ३०। "न क्षमन्ते भाषन्ताम्।" तदेव पृ. ३१। "तस्माद्यस्येयं शून्यता युज्यते रोचते क्षमते तस्य प्रतीत्यसमुत्पादो युज्यते।" एवमनेकम्। म. वृ., पृ. ५००।

संस्कृतेऽपि क्षमतिर्न सर्वत्र सहनार्थः। यथा "तत्ते यदुक्तमशिवं नहि तत्क्षमं ते" ( उ. च. १. १४ ) इत्यत्र क्षमं युक्तमित्यर्थः। "क्षितिक्षान्त्योः क्षमा युक्ते क्षम"मित्यमरः ( ३. ३. १४२ )। "युक्ते मान्तमव्यय"मिति केषाञ्चिदतिकौशलं व्याख्याने॥ "क्षान्तिर्बोधकर्तव्यतानिरपेक्षतेति" प्रकृते भा ष्य का रः।

सुप्रसिद्धमिदं प्रज्ञापारमितासु शास्त्रेषु च तन्मूलकेषु सर्वे धर्मा निःस्वभावाः। न तेषां स्वभावो नाम कश्चिदस्तीति। ते चानुत्पन्ना अनिरुद्धाश्च। अत एव त आदित एव प्रकृत्यैव च शान्ता इत्यादिशान्ताः प्रकृतिनिर्वृताश्चेति। अस्यार्थस्य कथनायायमारम्भः—

**आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः।** ५

**सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम् ॥९३॥**[1]

**सर्वे धर्माः** पदार्था **आदिशान्ता** आदित एव शान्ता अप्रवृत्ताः। तस्मादेव च **अनुत्पन्ना** अजा हि एव। अजत्वं चैषां प्राग्बहुशो व्याख्यातम्। किञ्च। **प्रकृत्या** स्वभावेनैव ते **सुनिर्वृताः** परिनिर्वृताः शान्ता इति भावः। किञ्च ते **समाभिन्नाश्च** समाः समाना १० अनुत्पादसमतया तत एव चाभिन्ना अपृथग्भूता अन्योन्यं यथा विवृतमनेकशः पुरस्तात् (२. ५; ३. १, ३८; ४. ७७, ८०, ९५)। तच्च परमार्थतत्त्वम**जम**नुत्पन्नं **साम्यं** सममित्येतद् यथा पुनः पुनर्व्याकृतम्। **विशारदं** निर्भयं च (१. १५, ३. ३५; अभयम् ४. ७८)। ये तांस्तादृशान्धर्मानवबुध्यन्ते ते तं परमार्थं लभन्ते भवति च तेन तेषां १५ निर्भयत्वम्। विशारदशब्द उपरिष्टाद् (४. ९४) व्याख्यास्यते।

अत्रोक्तं महायानसूत्रालङ्कारे (११. ५१)—

"निःस्वभावतया सिद्धा उत्तरोत्तरनिश्रयात्।

अनुत्पन्नानिरुद्धादिशान्तप्रकृतिनिर्वृताः॥"[2]

इयं चासङ्गस्य तत्रत्या वृत्तिः। "निःस्वभावतयानुत्पादादयः। २० यो हि निःस्वभावः सोऽनुत्पन्नः। योऽनुत्पन्नः सोऽनिरुद्धः। योऽनिरुद्धः स आदिशान्तः। य आदिशान्तः स प्रकृतिनिर्वृत" इति।

---

१। ४. १००।

२। नष्टोऽस्य मूलपाठः। अस्मत्सुहृदा इलीवनलाविना तु चीनपाठमनुसृत्यायं पाठः संस्कृतः। लिपिकरेण पुनरेष आत्मन एवापभ्रष्टः पाठो २५ विन्यस्तः—

"निःस्वभावतया सिद्धा उत्तरोत्तरनिःश्रयाः।

अनुत्पादोऽनिरोधश्चादिशान्तिः परिनिर्वृतिः॥"

म. सू. अ., द्वितीयखण्डे, पृ. १२२।

प्रकृते आदिशान्त इत्यनेन सम्बद्धा शान्तिः सुनिर्वृतत्वेन परिनिर्वृतत्वेन वा सम्बद्धा निर्वृतिर्निर्वाणं वा वस्तुतोऽप्रवृत्तिः। सा चानुत्पत्तिः। धर्माः खल्वादिशान्ताः सुनिर्वृताः परिनिर्वृता वा। अयमस्याभिप्रायः। प्रथमत एव ते न जायन्ते। अत एव ते शान्ताश्च निर्वृताश्चेति।
५ तदुक्तं मध्यमकवृत्तौ (पृ. ५२६) "याऽप्रवृत्तिस्तन्निर्वाणमिति व्यवस्थाप्यत" इति। "य उपशमोऽप्रवृत्तिस्तन्निर्वाण"मिति च (पृ. ५३८) परमार्थतो न नानाभावो धर्माणाम्।[1] शून्याः सर्वधर्मा वन्ध्यापुत्रा इव। निःस्वभावाश्चानुत्पादाश्च। अनुत्पादाश्चानिरोधाः। अत एव नित्यमभूताः। न च भेदः संसारनिर्वाणयोः। अनुत्पन्ना अनिरुद्धाश्च
१० भावा आदितः शान्ता इत्यादिशान्ताः। अतएव च प्रकृत्यैव सुनिर्वृताः परिनिर्वृता इति॥

अत्रानुरूपाः शब्दाश्चार्थाश्च द्रष्टव्याः—

(१) "आदिशान्ता ह्यनुत्पन्ना प्रकृत्यैव च निर्वृताः।
धर्मास्ते विदिता नाथ धर्मचक्रप्रवर्तने॥"[2]

१५ (२) "अतः सत्त्वाः प्रकृत्या परिनिर्वृताः।"
बो. अ. ६. १०४।

(३) "तस्मात्सर्वधर्मा अनुत्पन्नानिरुद्धस्वभावतया आदिशान्ताः प्रकृतिनिर्वृताः।" बो. अ. प., पृ. ५८६।

(४) "परमार्थसत्यतः प्रकृतिनिर्वाणतयादिशान्तत्वात्। प्रकृति-
२० निर्वृतत्वात्सर्वधर्माणाम्।" तदेव, पृ. ३८५।

(५) "आदिप्रशान्ता इमि सर्वधर्माः।" स. पु. २. ६८।

---

१। "विद्यते न हि नानात्वं तेषां क्वचन किञ्चन"त्युक्तं पूर्वम् (४. ९१)। द्र: २. ३४; ३. २४; ४. ९३-९४।

२। आर्यरत्नमेघसूत्रात् (म वृ., पृ. २२५); शि स, पृ. २०।
२५ उद्धृतं चेदं पण्डितेन पोषणेन (ज. अ. र. ए. एस., १९२०, पृ. १३८-१३९) उद्धृता च मदीयेन हलीयमलापिना (म. सू. अ. द्वितीयखण्डम्, पृ. १२२)।

समाः सर्वे धर्मा न तेषां मिथो भेदः। तत्त्वमपि परमं समम्। समत्वाच्च न तत्रापि कश्चिद्भेदः। विशारदं च तत्। ततश्च तदधिगमाद्वैशारमधिगम्यत इत्ययमर्थः प्राक् प्रकटितः। भेददृष्टौ तु न वैशारद्यं प्रत्युत दैन्यमेवेति दर्शयितुमुत्तरकारिकारभ्यते—

**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा।** ५

**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः॥९४॥**

**सदा भेदे तु विचरतां** भेददर्शिनां पुंसां **वैशारद्यं**[1] निर्भयत्वं **नास्ति वै** नैव विद्यते। यस्मात्**पृथग्वादा** नानात्वदृष्टिमातिष्ठमानाः पुरुषाः **भेदनिम्ना** भेदप्रवणा भेदानुगमनशीला भवन्ति। **तस्मात्ते कृपणा** दीनाः **स्मृताः** (३.१)॥ १०

---

१। किमिदं वैशारद्यमिति विमर्शनीयम्। विशुद्धिरिति भाष्यकारः। नैर्मल्यमिति योगसूत्रवृत्तौ (१.४७) भोजराजः। अत्र व्यासभाष्यम् "अशुद्ध्यावरणमलापेतस्य प्रकाशात्मना बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यमिति।" व्युत्पत्तिस्तु विशारदशब्दस्य सांशयिकी। पाणिने र्दृढादिष्वेष शब्दः पठ्यते (५.१.१२३)। उपाध्यायो वर्धमान १५ स्त्वस्य प्रवीणमर्थं मन्यमान इत्थं व्याचष्टे "शारदशब्दः प्रत्यग्रवाची। यथा रज्जुशारदमुदकम्। दृषच्छारदाः शक्तवः। सद्यो हि रज्ज्वोद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते। सद्यश्च दृषदा पिष्टाः शक्तवो दृषच्छारदाः। शारदत्वं प्रत्यग्रत्वमभिनवत्वम्। तद्विगतमस्य विशारदः प्रवीणः। प्रवीणो लक्षणया।०" न पुनरेष उपाध्याय स्तावता तुष्यति ब्रवीति च "अथवा व्युत्पत्तिशून्यः २० प्रवीणवाची विशारदशब्दः।" प्रत्ययस्त्यप्यस्ति शारदो वत्सरवाचकाच्छरच्छब्दात्। ततः प्रगल्भप्रवीणयोर्वाचको विशारदः। अपेक्ष्यते हि प्रत्ययस्त्वं प्रागल्भ्याय प्रावीण्याय च। पालिसंस्कृतयोरुभयोरपि शारदो (पालौ सारदो) नामाप्रतिभोऽप्रगल्भश्च। विशारदस्तु पण्डितः प्रगल्भश्च। तदुक्तं "द्वौ तु शारदौ। प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदा" विति (अ को. ३. ३. ९९)। २५ "सारदो सरदुब्भूते अप्पगब्भे मतो" इति च (अ.प, ९९५)। किञ्च "वुत्तो विसारदो तीसु सप्पगब्भे च पण्डिते" इति (तदेव ९९९)। बौद्धग्रन्थेषु पुनः शारद्यप्रतिपक्षत्वेन वैशारद्यं व्याख्यातम्। यथा "वेसारज्जानीति एत्थ सारज्जपटिपक्खो वेसारज्ज" मिति अ. नि. २, ८ विवृतौ (म. पू)। वैशारद्यं निर्भयतेति स्पष्टमुक्तमभिधर्मकोशव्याख्यायां (ख), पृ, ६४६। यथा ३०

अथ यत्तद् "अजं साम्यं विशारदं" (४. ९३) तत्र ये कृतसुनिश्चयास्तेषां भेददर्शिभ्यो भेदं फलं च तदीयं महदित्याह—

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः।**
**ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥९५॥**

५ **ये तु** भेददर्शिभ्योऽन्ये केचित्प्राक्तथा पुनः पुनरुक्ते **अजे साम्ये**[1] च परमार्थतत्त्वे धर्मधातुत्वेन वर्णिते निःसङ्गे चित्ते **सुनिश्चिता भविष्यन्ति ते हि** एव लोके **महाज्ञाना** महाधियो[2] भवन्ति। **तच्च**ाजं साम्यं **लोकः** प्राकृतो जनो **न गाहते** प्रविशत्यवगच्छतीत्यर्थः॥[3]

---

"निर्भयता हि वैशारद्य"मिति। भोटपाठतोऽप्ययमेवार्थो लभ्यते। प्रसिद्धं च
१० सौगतानां चतुर्विधं वैशारद्यम्। यथा सर्वधर्माभिसम्बोधिवैशारद्यं सर्वास्रवक्षयज्ञानवैशारद्यम् अन्तरायिकधर्मानन्यथात्वनिश्चितव्याकरणवैशारद्यं नैर्याणिकप्रतिपत्तथात्ववैशारद्यं च (म. व्युक १३०-१३४)। अत्रैव च (७८१—७८४) चत्वार्यपराणि वैशारद्यानि दर्शितानि। इतोऽप्यन्यानि चत्वार्यपरत्र (महाव., २. २६१)। यथा कायवैशारद्यं वाचा० चित्त० पृथु०। एषु चतुर्थं न स्पष्टम्।
अस्य ग्रन्थस्य संस्कर्ता से ना र्त स्तु मन्यते पृथग्० इति। इदमपि न स्पष्टम्।
१५ शी ला ङ्कः पुनः (सू. सू. १९. १७) विशारदः (प्राकृते विसारओ) प्रतिपादक इत्याह।

पाश्चात्यानां विदुषां मतानि वृत्तिकृत अङ्कलवृत्तौ दर्शितानि विचारितानि च। बुभुत्सुभिस्तत्रैव तानि द्रष्टव्यानि॥

२० १। ४. ७७, ८०, ९३।

२। ४, ९६। टिप्पणी चात्रत्या प्रथमा।

३। अत्र भा ष्य का र स्तत्पदेन महाज्ञानिनो वर्त्म परामृशति न पुनरजं साम्यम्। पठति चेमां (महाभारतीयां ?) तद्वर्णनपरां गाथाम्

"सर्वभूतात्मभूतस्य सर्वभूतहितस्य च।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः।
२५ शकुनीनामिवाकाशे गतिर्नैवोपलभ्यते॥" इति।

इहाद्ये पङ्क्ती सा य णे न (तै. आ. ८. २. पृ ५४७) कैश्चित्पाठभेदैर्धृते। शकुनीनामिवाकाशे० इत्यनेनोपमेयं शा ङ्क र भा ष्यं (बृ. उ., पृ. ६३७) "त उत्सहन्ते खेऽपि शाकुनं पदं द्रष्टुम्।" "आकासेव सकुन्तानं गति तेसं
३० दुरन्नया" ध. प. ९२-९३ (सद्धर्मकथया)।" "अन्तरीक्षे शकुनस्य वा पदम् (आ र्य र त्ना क र सू त्र म्, म. वृ, पृ. ९०);" "तद्यथापि नामाकाशे शकुनिपदम्" स. प्र. पा. पृ. १३७। एवम्—

"यथान्तरिक्षे शकुनेः पदं बुधै-
र्वक्तुं न शक्यं न च दर्शनोपगम्।"

३५ म. अ., पृ. १२ (फरासी भाषान्तरे पृ. २६)।

परमार्थभूतं निःसङ्गं चित्तं ज्ञानं वा पूर्वं बहुश उक्तम्।[1] अथ कथमस्य तन्निःसङ्गत्वमित्युच्यते वक्ष्यते[2] चोपरिष्टादपि—

**अजेष्वजमसङ्क्रान्तं धर्मेषु ज्ञानमिष्यते।**
**यतो न क्रमते ज्ञानमसङ्गं तेन कीर्त्तितम् ॥९६॥**

**अजेष्व**नुत्पन्नेषु **धर्मेषु** भावेषु **ज्ञानम**सङ्क्रान्तमसङ्गतमसम्बद्ध- ५
मित्यर्थः। **इष्यते।** न ज्ञानं स्वविषयत्वेनाभिमतं किमपि गृह्णातीति भावः। तादृशस्य कस्यचिदभावात्। अभूताभिनिवेशो हि केवलं तत्रास्तीति दृष्टं प्राक्। एवं च यतो ज्ञानं न **क्रमते**[3] गच्छति कमपि विषयम्। न केनापि विषयेण संसज्जत इति भावः। तेन हेतुना ज्ञान-
**मसङ्गं** सङ्गरहितं **कीर्त्तितम्** ॥[4] १०

स्तोकेपि धर्माणां वैधर्म्ये प्रतिभासमाने चित्ते न तस्य निःसङ्गत्वम्। नतरां च तस्य आवरणस्येत्याह—

**अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः।**
**असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥९७॥**

**अविपश्चितो**ऽविवेकिनः पुरुषस्या**णुमात्रे**ऽत्यल्पपरिमाणे**ऽपि** १५
धर्माणां **वैधर्म्ये** भेदे **जायमाने** चित्तस्य विवृतपूर्वा **असङ्गता** निःसङ्गत्वं **सदा नास्ति। किमुतावरणच्युति**र्भविष्यति। आवरणयोराच्छादनयोश्च्युतिरपसरणं भविष्यति। न भविष्यति। "सर्वे धर्मा समाभिन्ना" (४. ९२) इत्यादिना न कस्यापि धर्मस्य मनागपि भेद उपलभ्यते। अथोपलभ्येत तदुपलम्भाच्चित्तस्येष्टं निःसङ्गत्वं न स्यात्। २०
तदभावाच्च नावरणद्वयं च्यवेत। ततश्च न परमार्थाधिगमः ॥

---

१। ३. ३२ (अग्रहम्); ४. ७२ (असङ्गम्), ७९ (निःसङ्गम्)।

२। ४. ९९।

३। अत्रा"नुपसर्गाद्वेत्य"नुशासनात् (पा १३. ४३) न पुन"र्वृत्तिसर्ग-तायनेषु क्रम" इत्यनुशासनाद् (पा. १ ३. ३८) आत्मनेपदम्। २५

४। एवमन्यत्रापि (४. १००)। व्याख्यातमसङ्गत्वं ज्ञानस्य प्राग्बहुशः (३. ३३, ४६, ४७)। वचनान्यपि तदनुकूलान्युद्धृतानि (४ १, ४९)।

आवरणद्वयमित्युक्तम्। किं तदावरणद्वयम्। क्लेशावरणं ज्ञेयावरणं च।[1] कः पुनः क्लेशः। वा च स्प ति राह (यो. सू. १. २४) स क्लेशो यः पुरुषं सांसारिकं विविधदुःखप्रहारेण क्लिश्नाति स च योगशास्त्रे (यो. सू. २. ३) "अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा" इत्युक्तरूपः।
५ रागद्वेषमोहा अपि क्लेशाः। अन्यत्र (ध. सङ्गणि. § १५४८) लोभद्वेषमोहमानादिरूपा दशविधाः। द्रः पालिग्रन्थसमितेः पा लि को शे किलेसशब्दः। ज्ञानस्य प्रतिबन्ध इति क्लेशा आवरणम्।[2] क्लेशा एवावरणम् क्लेशावरणम्। एवं ज्ञेयमेवावरणं ज्ञेयावरणम्। ज्ञेयपदेन चेम धर्मा ग्राह्यग्राहकरूपाः। ते च निःस्वभावाः। अत एवाभूताभिनि-
१० वेशभूताः। असन्तोऽप्येत उपलभ्यन्ते। एवं ज्ञेयमपि ज्ञानप्रतिबन्धाय भवतीत्यावरणम्।[3] अतो यावन्न क्लेशप्रहाणं न वा ज्ञेयप्रहाणं न तावत् परमार्थस्य प्रपञ्चोपशमस्याधिगमः। तत्र क्लेशावरणं पुद्गलनैरात्म्यज्ञानेन ज्ञेयावरणं तु धर्मनैरात्म्यज्ञानेन प्रहीयते। अत्र नैरात्म्यं निःस्वभावत्वम्। यथाह च तुः श त क टी का यां (२८८-२८९) च न्द्र की र्तिः।
१५ जीवात्मपुरुषादिप्रसिद्धस्य पुद्गलस्य निःस्वभावत्वं पुद्गलनैरात्म्यम्। धर्माणां पदार्थानां निःस्वभावत्वं धर्मनैरात्म्यम्।[4]

---

१। ध. स. ११९; म. सू. अ. ९. ३, १२; २०-२१. ४४; बो. अ. ९. ५५।

२। "क्लेशा एवावृतिः"। बो. अ. प, पृ, ४४७।

२० ३। "ज्ञेयं चावृतिरावरणम्।० ज्ञेयमेव समारोपितरूपत्वादावृतिः।" बो. अ. प., पृ. ४४७। कदाचित्तु ज्ञेये आवरणमिति ज्ञेयावरणमिति व्याख्यायते। यथा (त्रि., पृ. १९) "ज्ञेयावरणमपि सर्वस्मिन्ज्ञेये ज्ञानप्रतिबन्धमक्लिष्टमज्ञानम्।" द्र: त स प, पृ ८८९—८९०।

कदाचित्तु (अ. नि. ३. ४३४; अ. को. ४. २०१) त्रीण्यावरणानि दृश्यन्ते। यथा क्लेशावरणं कर्मावरणं (पञ्चानन्तर्याणि दश चाकुशलकर्मपथाः) विपाकावरणं
२५ (अष्टाक्षणाः) च।

४। "ज्ञेयावरणं पुनर्महामते धर्मनैरात्म्यदर्शनाद्विशुध्यते। क्लेशावरणं तु पुद्गलनैरात्म्यदर्शनाभ्यासपूर्वकं प्रहीयते।" ल. सू ७, पृ. २४१। द्र:— त्रि., पृ. १४। अथवा द्वयोरप्येतयोः प्रहाणं शून्यताभावनयैव भवति। तदुक्तं बो धि च र्या व ता रे (९. ५५)—
३० "क्लेशज्ञेयावृतितमःप्रतिपक्षो हि शून्यता॥"

उद्दिष्टावरणच्युतिः। वस्तुतस्तु न किञ्चिदावरणमितीदमिदानीं दर्शयितुमयमारम्भः—

**अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः।**
**आदौ बुद्धा[1]स्तथा मुक्ता बुध्यन्त इति नायकाः ॥९८॥**

**सर्वे धर्मा अलब्धावरणा** निरावरणाः। न किञ्चिदस्ति येन तेषामावरणमाच्छादनं स्यात्। ते च **प्रकृतिनिर्मलाः** प्रकृत्या स्वभावेन विगतमला विशुद्धा यथा कनकादयः (४. ९०)। प्रकृतिनिर्मलत्वं च धर्माणां सौगतशास्त्रेष्वतिप्रसिद्धम्। यथा—

"अवाच-नक्षराः सर्वशून्याः शान्तादिनिर्मलाः।
य एवं जानति धर्मान् कुमारो बुद्धः सोच्यते ॥"
म. वृ., पृ. ५३६।

एवं "प्रकृतिप्रभास्वराः सर्वधर्माः" (म. वृ., पृ. ४४४)[2]। ते च **धर्मा आदौ** प्रथमत एव **बुद्धा** बुद्धरूपा बोधरूपा ज्ञानरूपा इति भावो यथा विवृतं प्राक् (४. ९२)।[3] **तथा** ते **मुक्ता** निर्वृताः सुनिर्वृता आदिशान्ताः। इदमपि पूर्वं (४. ९३) विवृतम्। **इति नायका** बुद्धाः सुगताः (म. व्यु.[1] १. १०; अ. प. ४. ७२५; बो. अ. २. ३१, ६६; शि. स., पृ. ५) **बुध्यन्ते** जानन्ति ॥

अ ला त शा न्ता वुपक्रमे (४. १) स किल भगवान्बुद्धो ज्ञानेन धर्मान्संबुद्ध इति व्यक्तम्। तत्र ज्ञेयाभिन्नस्य ज्ञानस्यासङ्गत्वमुपक्रम्य (३. ३३) मध्ये तदभ्यस्तं विशेषेण तु "अजेष्वजमसङ्क्रान्त"मित्यत्र (४. ९६)। अथ प्रकरणार्थोपसंहारेण तदेव ज्ञानस्यासङ्गत्वं परिदीपन्नाह न खलु परमार्थतो बुद्धस्य धर्मा नाम केचन सन्ति न वा किञ्चिज्ज्ञानं नामेति—

---

१। ४. ९२-९३।

२। "प्रकृतिप्रभास्वरं चित्तम्" (ल. सू. १०, ७५०, ७९३, ७९४); "आदिशुद्धत्वादादिपरिशुद्धत्वात्सत्त्वस्येति" (अ प्र. पा., पृ. ४७)। अन्यत्र—

"आदिशुद्धमनुत्पन्नं निःस्वभावमनाविलम्।
जगज्ज्ञावेन सम्पश्यन् न बद्धो न च मुच्यते ॥" चि. वि. प्र. २६।

३। उप: "बोधनात्मको बुद्धः। स्वयं बुद्ध्वा परान्बोधयत" इति ध र्म को शः (मदन्तिके स्थिता प्रतिलिपिः, पृ. ३.)।

क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः।
सर्वधर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥९९॥

**तायिनः**[1] स्वाधिगतमार्गदेशकस्य **बुद्धस्य** सुगतस्य मते **ज्ञानं धर्मेषु न** क्रमते गच्छति असङ्गत्वात् (३. ३२; ४. ७२, ७९, ९६)। न ज्ञानं कमपि विषयं गृह्णातीति भावः। न ज्ञानविषयोर्मिथः संसर्गः। यत्पुनः परमार्थतः प्रतिपत्तव्यं तदिदम्। किम्। **सर्वधर्माः**[2] सर्वे धर्माः पदार्थास्तथा तेषां धर्माणां **ज्ञानमिदं** द्वयमपि **बुद्धेन न भाषितम्**मुक्तम्।

किमवितथमिदं बुद्धेन तन्नोक्तमिति। हन्त भोः। न केवलं तद्द्वयमेव नोक्तम्। अपितु किञ्चिदपि नोक्तम्। किं बहुना। एकमप्यक्षरं तेन नोक्तम्। अत एवाह स स्वयमेव—

"यस्यां च रात्र्यां धिगमो यस्यां च परिनिर्वृतिः।
एतस्मिन्नन्तरे नास्ति मया किञ्चित्प्रकाशितम् ॥"

ल. सू., पृ. १४४।

---

१। शब्दोऽयमेवं व्याख्यातः प्रज्ञाकरमतिना (बो अ. प. पृ., ७९) "तायिनामिति स्वाधिगतमार्गदेशकानाम्।" यदुक्तं 'तायः स्वदृष्टमार्गोक्तिः (प्र. वा. २. १४५)। वाचस्पतिमिश्रस्यन्यायतात्पर्यटीकायां "अक्षपादाय तायिने" इति प्रारम्भश्लोकं व्याचक्षाणेनोद्द्योतकरेण (ता. टी. प) इदमेव व्याख्यानमंशतो गृहीतम्। प्रज्ञाकरमतिना त्वन्यथापि स शब्दो विवृतः (तत्रैव, पृ ७९)। यथा—"अथवा तायः सन्तानार्थः। आसंसारमप्रतिष्ठितनिर्वाणतयावस्थायिनाम्। सौगतानामार्हतानां च ग्रन्थेष्वतिबहुलमेव शब्दः प्रयुज्यते। आद्यानां यथा ल. वि, पृ ४२१; बो. अ. ३. २; स. पु. पृ. २९, ९७, ६७ प्र.। अन्त्यानां च यो. शा १. ४७; द्र. वै. सू., पृ. ११९। अर्थः पुनस्तस्य सर्वत्र न साध्ववगतः। कदाचित्तु तायिन्नित्यत्र त्रायिन्निति पठ्यते। भोटपाठोऽप्येतदनुकूल एव। कदाचिच्च तापिन्नित्यपि दृश्यते। विस्तरो ममाङ्गलवृत्तौ।

२। प्रायेण हि सौगतग्रन्थेष्वेव शब्द समस्त एव दृश्यते, न तु व्यस्तो यथा सर्वे धर्मा इति।

एतानि चैतदर्थप्रतिपादकान्यपराणि वचनानि—

"न मे यानं महायानं न घोषो न च अक्षराः।"[1]

ल. सू., पृ. १३७।

"यां च रात्रिं तथागतोऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धो यां च रात्रिमुपादाय परिनिर्वास्यति अत्रान्तरे तथागतेनैकमप्यक्षरं नोदाहृतं न व्याहृतं नापि प्रव्याहरन्ति नापि प्रव्याहरिष्यति।" ५

तथागतगुह्यसूत्रे (म. वृ., पृ. ५३९)—

"यां च रात्रिं तथागतोऽभिसम्बुद्धो यां च रात्रिं परिनिर्वास्यति अत्रान्तरे एकमप्यक्षरं तथागतेन नोदाहृतं न प्रव्याहरिष्यति। अवचनं बुद्धवचनम्।" ल. सू., पृ. १४२-१४३। १०

"सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।
न क्वचित्कस्यचित्कस्य धर्मो बुद्धेन देशितः॥"

म. का. २५. २४।

"नोदाहृतं त्वया किञ्चिदेकमप्यक्षरं विभो।
कृत्स्नश्च विनेयजनो धर्मवर्षेण तर्पितः॥" नि. स्तो. १७। १५

अनक्षरस्य धर्मस्य श्रुतिः का देशना च का।
श्रूयते देश्यते चापि समारोपादनक्षरः॥"

भगवदुक्तिः (म. वृ., पृ. २०४ ; स्तोकेन पाठभेदेन बो. अ. प., पृ. ३६५)।

"तत्किं मन्यसे सुभूते अस्ति स कश्चिद्धर्मो यस्तथागतेन देशितः। २० एवमुक्ते आयुष्मान्सुभूतिर्भगवन्तमेवमवोचत्। यथाहं भगवन्भगवतो वचनस्यार्थमाजानामि नास्ति स कश्चिद्धर्मो यस्तथागतेनानुत्तरा सम्यक्सम्बोधिरित्यभिसम्बुद्धः। नास्ति धर्मो यस्तथागतेन देशितः।"

व. छे. पृ. २४।

"तत्किं मन्यसे सुभूते अपि चास्ति स कश्चिद्धर्मो यस्तथागतेन २५ भाषितः। सुभूतिराह। नो हीदं भगवन् नास्ति स कश्चिद्धर्मो यस्तथागतेन भाषितः।" तदेव. पृ. २९।

---

१। "यत्र वर्णा न वर्तन्ते।" ४. ६०।

"तत्त्वं ह्यत्तरवर्जितम् ।" ल. सू. ४८।

"निरत्तरत्वाद्धर्मस्य ।" तदेव. पृ. ११४।

कः पुनरभिप्रायो "नैतद्बुद्धेन भाषितम्" (४. ११) इत्येतस्या चा र्य-भाषितस्य यत्खलु तथातिद्रढयन्ति तानि तानि वचनानि। अस्त्यत्र
५ कारणद्वयं येन तत्तथोक्तम्। प्रत्यात्मधर्मता च पौराणस्थितिधर्मता च। तत्र प्रत्यात्मधर्मता नामेत्थं भवति। स्पष्टं लोके न खल्विक्षुक्षीरगुडादीनां माधुर्यं शक्यं वर्षसहस्रेण सरस्वत्यापि पृथक्कृत्य वक्तुमिदमस्य माधुर्यम् इदमेतस्य इदं चामुष्येति। प्रत्यात्मवेद्यं हि तत्। आत्मना हि पुरुषै-रास्वाद्य तद्वेद्यम्। न पुनः कदाचिदन्येभ्यः श्रुत्वा। अतो नेदं दिश्यते
१० न वा श्रूयते। इयमुच्यते प्रत्यात्मधर्मता। एवमेव प्रकृतेऽपि परमार्थो न भाष्यते न वा शक्यते भाषितुम्। अत एवाहुरभियुक्ताः (म. वृ., पृ. ५३) "परमार्थो ह्यार्याणां तुष्णीम्भाव" इति। एतच्च ब्रह्मणो-ऽवाङ्मनसगोचरत्वकथनेन सुस्पष्टं वेदान्तेषु (तै. उ. २. ४. १ ; ब्र. सू. ३. २. १७ शा री र क भा ष्य म्)। वा ष्क लि ना किल वा ध्वः पृष्टः
१५ सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते। सा चेयं कथा "स होवाचाधीहि भगवो ब्रह्मेति। स तुष्णीं बभूव। तं ह द्वितीये तृतीये वा वचन उवाच। ब्रूमः खलु। त्वं तु न विजानासि। उपशान्तोऽयमात्मेति" (ब्र. सू. ३. २. १७ शा री र क भा ष्य म्)। अत एव द क्षि णा मू र्ति स्तो त्रे—

"चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।
२० गुरोस्तु मौनं व्याख्यानं शिष्यस्तु च्छिन्नसंशयः॥"

च न्द्र की र्ति श्चातिस्फुटमाह (म. वृ., पृ. ४९३)—

"सर्व एवायमभिधानाभिधेयज्ञानज्ञेयादिव्यवहारोऽशेषो लोकसंवृति-सत्यमित्युच्यते। न हि परमार्थत एव तत्सम्भवति।० कुतस्तत्र परमार्थे वाचां प्रवृत्तिः कुतो वा ज्ञानस्य। स हि परमार्थोऽपरप्रत्ययः शान्तः
२५ प्रत्यात्मवेद्यः। आर्याणां सर्वप्रपञ्चातीतः। स नोपदिश्येत न चापि ज्ञायेत।"

अन्यच्च। त था ग त गु ह्य सू त्रे (म. वृ., पृ. ५३९)—

"अथ च यथाधिमुक्ताः सर्वसत्त्वा नानाधात्वाशयास्तां तां विविधां तथागतवाचं निश्चरन्तीं संजानन्ति तेषामेवं पृथक् पृथग्भवति अयं
३० भगवानस्मभ्यमिमं धर्मं देशयति। वयं च तथागतस्य धर्मदेशनां शृणुमः।

तत्र तथागतो न कल्पयति न विकल्पयति सर्वकल्पविकल्पजालवासनाप्रपञ्चविगतो हि शान्तमते तथागत इति विस्तरः।°"

अपि च। तत्रैव (म. वृ., पृ. ५३९)—

"यदि तर्ह्येवं [न] क्वचित्कस्यचित्कश्चिद्धर्मो बुद्धेन देशित (म. का. २५. २४) स्तत्कथमिम (?) एते विचित्राः प्रवचनव्यवहाराः प्रज्ञायन्ते॥ ५
उच्यते। अविद्यानिद्रानुगतानां देहिनां स्वप्नायमानानामिव स्वविकल्पाभ्युदय एषः। अयं भगवान् सकलत्रिभुवनसुरासुरनरनाथ इमं धर्ममस्मभ्यं देशयतीति।" यथोक्तं भगवता—

"तथागतो हि प्रतिबिम्बभूतः
कुशलस्य धर्मस्य अनास्रवस्य। १०
नैवात्र तथता न तथागतोऽस्ति
बिम्बं च संदृश्यति सर्वलोके॥"

एतच्च लङ्कावतारसूत्रे (पृ. १९४)—

"न च महामते तथागता अक्षरपतितं धर्मं देशयन्ति। पुनर्महामते योऽक्षरपतितं धर्मं देशयति स प्रलपति। निरक्षरत्वाद्धर्मस्य। अत १५
एतस्मात्कारणान्महामते उक्तं देशनापाठे मयान्यैश्च बुद्धबोधिसत्त्वैर्यथैकमप्यक्षरं तथागता नोदाहरन्ति न व्याहरन्ति। तत्कस्य हेतोः। यदुतानक्षरत्वाद्धर्माणाम्। न च नार्थोपसंहितमुदाहरन्ति। उदाहरन्त्येव विकल्पमुपादाय महामते सर्वधर्माणां शासनलोपः स्यात्।°"

अयं च प्रदर्शितस्तत्र (पृ. १९४-१९५) सिद्धान्तो न व्यञ्जनमनुसर्तव्यमपि त्वर्थ इति। अर्थोऽभिप्रायः। अन्यथा महाननर्थ इति— २०

"अर्थप्रतिसरणेन[१] महामते बोधिसत्त्वेन महासत्त्वेन भवितव्यं न व्यञ्जनसरणेन। व्यञ्जनानुसारी महामते कुलपुत्रो वा कुलदुहिता वा स्वात्मानं च नाशयति परार्थांश्च नावबोधयति।"

अथ वक्तव्या पौराणस्थितिधर्मता यया खलु प्रतिपद्येत किमिदं नाम २५
न किञ्चिद् बुद्धेन भाषितमिति। यत्तावद्बुद्धेनोक्तमित्युच्यते लोके न तत्तेन वस्तुत उक्तम्। यतस्तत्पुराणमेव। पूर्वस्मादेव कालात्तद्विद्यते। उत्पादो वानुत्पादो वा बुद्धानां या वा धर्माणां धर्मता स्थितैवैषा सर्वदा।

---

१। बौद्धसंस्कृतग्रन्थेषु० सरणेति पाठे ०शरणेत्यपि दृश्यते।

नैषा किमप्यपेक्षते। अवचनं बुद्धवचनमित्यनेनेदमेवाभिप्रेतम्। तदुक्तम् (ल. सू., पृ. १४३-१४४)—

"यदिदमुक्तं भगवता यां च रात्रिं तथागतोऽभिसम्बुद्धो यां च रात्रिं परिनिर्वास्यति अत्रान्तर एकमप्यक्षरं तथागतेन नोदाहृतं न प्रव्याहरिष्यति
५ अवचनं बुद्धवचनमिति। किमिदं सन्धायोक्तम्।° भगवानाह। धर्मद्वयं महामते सन्धाय मयैतदुक्तं। कतमद्धर्मद्वयं। यदुत प्रत्यात्मधर्मतां च पौराणस्थितिधर्मतां च।° 'उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवेषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामता पौराणनगरमहापथवन्महामते।° तद्यथा महामते कश्चिदेव पुरुषोऽटव्यां
१० पर्यटन्पौराणं नगरमनुपश्येदविकलपथप्रवेश्यं। स तन्नगरमनुप्रविशेत्। तत्र प्रविश्य प्रतिनिविश्य नगरं नगरक्रियासुखमनुभवेत्। तत्किं मन्यसे महामते अपि नु तेन पुरुषेण स पन्था उत्पादितो येन पथा तन्नगरमनुप्रविष्टो नगरवैचित्र्यं च। आह। नो भगवन्। भगवानाह। एवमेव महामते यन्मया तैश्च तथागतैरधिगतं स्थितैवैषा धर्मता धर्मस्थितिता धर्मनियामता
१५ तथता भूतता सत्यता। अत एतस्मात् कारणान्महामते मयेदमुक्तं यां च रात्रिं तथागतोऽभिसम्बुद्धो यां च रात्रिं परिनिर्वास्यति अत्रान्तर एकमप्यक्षरं तथागतेन नोदाहृतं नोदाहरिष्यतीति।"

"तत्किं मन्यसे सुभूते अस्ति स कश्चिद्धर्म" इत्यादेः पूर्वधृताद् व ज्र च्छे दि का (पृ. २४) वचनादनन्तरमेव तत्र यदुक्तं तदपीह द्रष्टव्यम्—
२० "तत्कस्य हेतोः। योऽसौ तथागतेन धर्मोऽभिसम्बुद्धो देशितो वा अग्राह्यः सोऽनभिलाप्यः। न स धर्मो नाधर्मः। तत्कस्य हेतोः। असंस्कृतप्रभाविता ह्यार्यपुद्गला इति।

एवमेतत्सर्वथोपपन्नं येन खलु ज्ञानेन ज्ञेयेन चोपक्रान्तं प्रकरणमेतदा चा र्ये ण तयोरेव तत्त्वार्थप्रदर्शनेनेदमुपसंहृतमिति।

२५ अथान्तिमायां कारिकायां कृत्स्नप्रकरणप्रतिपादितं तत्त्व मा चा र्यो नमस्करोति। उपक्रमेऽस्य तत्त्वस्य सम्बोद्धा तेन नमस्कृतः। अन्ते तु तेन सम्बुद्धं तत्त्वमेव नमस्कृतम्। तद्द्वारा च स सम्बुद्धोऽपि। सा चेयं कारिका—

---

१। उत्पादाद्वेत्यादिः पङ्क्तिरियं स र्व द र्श न स ङ्ग हे (बौद्धदर्शनने २-३०२)
३० धृता।

दुर्दर्शमतिगम्भीरमजं शान्तं विशारदम् ।[१]
बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥१००॥

इति गौडपादीय
आ ग म शा स्त्रे ऽ ला त शा न्त्या ख्यं
चतुर्थं प्रकरणं समाप्तम् ॥　　५

**अतिगम्भीर**मत्यगाधमतिदुरवगाहम् । अतएव **दुर्दर्शं** दुःखेन द्रष्टुं शक्यम् । **अजं**[२] **साम्यं**[३] सममित्येतत् । **विशारदं**[४] निर्भयम् । **अनानात्वम्**[५] अनानाभूतम् । **पदं**[६] स्थितिं **बुद्ध्वा**ऽवगम्य **यथाबलं** यथाशक्ति नमस्कुर्मः ।

पदशब्दो निर्वाणवाचीति सौगताः ।[७] न पुनस्तेषामेवायं विशेषः । १० अस्मदीया अपि तथैव मन्यन्ते । मोक्षे ब्रह्मणि वा प्रसिद्धस्तत्प्रयोगः ।[८] एवमपि प्रकृतप्रकरणार्थं चिन्तयतः सौगतगृहीतोऽर्थ एव चेतसि समुत्पद्येत । दुर्दर्शमतिगम्भीरमिति पदद्वयं तमर्थमुपोद्बलयति । सुदुर्दृशं (पालौ सुदुद्दसं) निर्वाणपर्यायः (अ. प. ७)। गम्भीरदुर्दृश (पालौ दुद्दस) शब्दावप्यसकृत्प्रयुज्येते तत्प्रसङ्गे ।[९]　　१५

१। ४. ९९।

२। १. १६ ; ३. १. १९. २६. ३३. ४३. ४७ ; ४. ११. १२. १३. ३८, ४६. ४८. ५७. ६०. ७४. ८०. ९३. ९५. ९६।

३। ३. २. ३८ ; ४. ७७. ८०. ९३. ९५।

४। ४ ९३ ; ३. ३५ (निर्भयम्) ४. ७८ (अभयम्)।　　२०

५। ३. १३ ; ४. ९१ ; बृ. उ ४ ४. १९ ; क. उ. ४. १०. ११।

६। १. १५ ; ४. ७८, ८५।

७। "पदं ठाने परित्ताणे निब्बानम्हि च कारणे ।" अ प. ८११।

८। क. उ. २. १५ ; ३. ७—९।

९। "निर्वाणरूपो धर्मो गम्भीरो दुर्दृशश्च" (ल सू., पृ. ५०९, ५१३, ५१५) ; "गम्भीरं दुर्दृशं सूक्ष्मं धर्मचक्रम्" (तदेव, पृ. ४२२, ४२६ "गम्भीरो दुर्दृशो मम") ; "गम्भीरमिति सुभूते शून्यताया एतदधिवचनं विरागस्य निरोधस्य निर्वाणस्य विरामस्यैतदधिवचनं यदुत गम्भीरमिति" (अ. सा. प्र., पृ. ३४१) ; एवं "धम्मो गम्भीरो दुद्दसो" (म. व. १. ५. २. ८) ; उपः "तं दुर्दर्शं गूढमनुप्रविष्टम्" । अत्रात्र परामृशन्ति इति भा ष्य का रः ।　　२५　　३०

बलशब्देन सुगतशास्त्रेषु सुप्रसिद्धानि पञ्च बलानि श्रद्धावीर्यस्मृति-समाधिरूपाणि।[1] सुविदितानि चैतानि योगशास्त्रेऽपि (यो. सू. १. २०)। न पुनरेतानीह बलत्वेन गणितानि। तत्र श्रद्धा चेतसः सम्प्रसादः (यो. सू. १. २० व्यासभाष्यम्)। वसुबन्धुरपि तथैव मन्यते (अ. को. ८. ६; द्र:—२. २५)। परमार्थो हि पञ्चविधेन बलेनाधिगम्यत इति व्यज्यते **यथाबल**शब्देन॥

अलातशान्तिरित्यस्य प्रकरणस्य नाम। अलातं नाम ज्वलदङ्गारः। तस्य शान्तिरुपशमोऽप्रवृत्तिरित्यर्थः। यथाऽभूताभिनिवेशादलातमृजुवक्रादिकाभासं दृश्यत एवं विज्ञानस्पन्दितमप्यभूताभिनिवेशाद् ग्राह्यग्राहकाभासं भवतीति प्राक् (४ ४७-५०) प्रतिपादितम्। किञ्च "दिमध्यावसानविरहितत्वात्" (म. वृ., पृ. २२१) "पूर्वापरकोट्यनुपलम्भा"च्च (म. वृ., पृ. २१६) सर्वमिदं ग्राह्यग्राहकरूपं द्वयमलातचक्रमिव। प्रदर्शिता तस्य शान्तिरस्मिन्प्रकरण इति सूपपन्नमस्य नामालातशान्तिरिति।

अलातचक्रोपमा [2]मैत्र्युपनिषद्यपि (६. २४) लभ्यते।[3] न पुनः सा भ्रान्तेर्निदर्शनाय। अपितु भासुरत्वस्य। इह पुनः प्रकृते ग्रन्थे सौगते च शास्त्रे सर्वत्रैव बहुषूपमासु[4] सापि भ्रान्तिमेव बोधयति। अत्रायं श्लोक आर्यदेवस्य (च. श ३२५)—

"अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः।
धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैः समो भवः॥"

अथायमलातशान्तिरिति शब्दो न दृश्यते सौगतेषु ग्रन्थेष्विति न तन्नाम तन्मूलकमिति कश्चिन्मन्वीत। न पुनर्युक्तं तन्मन्तुम्।

---

१। अ. नि. ३-१२; दी. नि. २. १२० प्र.; ध. स. ४९।

२। मैत्रायणब्राह्मणोपनिषदित्यस्यापरं नाम। सर्वथापीयमनतिप्राचीनेति स्पष्टम्।

३। "अलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म तमसः पर्यपश्यन्।"

४। यथा मरुमरीचिका गन्धर्वनगरं च। म. व्यु. (क) १३९. २१।

नेद मा ग म शा स्त्रा त्प्राचीनेष्वस्मदीयेष्वपि ग्रन्थेषु दृश्यत इत्यस्मदीयमपि तन्न भवतीति समं प्रतिवचनम्।[1] मा भूदलातशान्तिस्तेषां ग्रन्थेषु। प्रभूतास्तु तेष्वलातप्रयोगाः।[2] स्वयमेव चा चा र्य श्चतुष्कृत्वोऽलातशब्दं प्रयुनक्ति (४. ४७-५०) प्रदर्शयति च तेन बौद्धदृष्ट्या प्रपञ्चस्य मिथ्यात्वम्। तस्माद् ला त शा न्ति रिति न सौगतं नामेति दुष्करं वक्तुमिति॥ ५

नमस्तस्मै।

नम ऋषिभ्यः। नम आचार्येभ्यः।

प्रेरितः केनचित्स्वान्ते यथाशक्ति यथामति।
इमामभिनवां वृत्तिमकारोद् वि धु शे ख रः॥

॥ कृतिरियं ब्रह्मविहारावस्थितस्य भ ट्टा चा र्य वि धु शे ख र स्य॥ १०



शकाब्दाः १८७०।३।२६।

१। सदृशं तु किञ्चिद्दृश्यते यो ग वा सि ष्ठे (३. ६. २)। यथा "मृगतृष्णाजलभ्रान्तिशान्ति०।"

२। यथा ल. सू, पृ. ९. ९६ प्र.।

१

# माण्डूक्योपनिषत्

## मूलम्

१। ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं[1] भूतं भवद्भविष्यदिति सर्वं[2]मोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव॥

२। सर्वं ह्येतद्[3] ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्॥

३। जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः॥

४। स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो[4] द्वितीयः पादः॥

५। यत्र सुप्तो[5] न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति[6] तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः[7] प्रज्ञानघन एवा[8]नन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः॥

---

१। "ओमित्यक्षरं॰ तस्योपव्याख्यानम्", छा. उ. १. १. १। तुल. "ओमितीदं सर्वम्", तै. उ. १. ८. १।

२। तुल. "यद्भूतं च भव्यं च भविष्यच्च", बृ. उ. ३. ८. ३, ४. ६. ७।

३। एतदित्यत्र क्वचित्तदिति पाठः।

४। अत्र हिरण्यगर्भ इति क्वचिदधिकः पाठः।

५। क्वचित्तु सुषुप्तो इति पाठः।

६। बृ. उ. ४. ३. १९।

७। तुल. "एकीभवति", प्र. उ. ४. २; बृ. उ. ४. ४. २।

८। "आत्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव।" बृ. उ. ४. ४. २२।

६। एष सर्वेश्वर[1] एष सर्वज्ञ[2] एषोऽन्तर्याम्येष योनिः सर्वस्य[3] प्रभवाप्ययौ[4] हि भूतानाम् ॥

७। नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म-प्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः ॥

८। सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकार उकारो मकार इति ॥

९। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वाद्वा-प्नोति हि वै सर्वान् कामानादिश्च भवति य एवं वेद ॥

१०। स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वो-त्कर्षतीह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥

११। सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥

१२। अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव। संविशत्यात्मनात्मानं[5] य एवं वेद ॥

———

१। "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते० एष सर्वेश्वरः," बृ. उ. ४. ४. २२।

२। "यः सर्वज्ञः," मु उ १. १. ९ ; "स सर्वज्ञः," प्र. उ. ४ १०।

३। तुल भूतयोनिः 'यद्भूतयोनिं परिपश्यन्ति धीराः," मु. उ १. १. ६।

४। क. उ २ ३. ११।

५। 'आत्मनात्मानमभि सं विवेश" वाजसनेयिसंहिता, ३२. ११।

२

# कारिकासूची

संख्ययोराद्या प्रकरणं सूचयति अन्त्या तु कारिकाम्

---

## ३

# माण्डूक्योपनिषद्वाक्यसूची

संख्या उपनिषद्वाक्यानाम्



---

## ४

# कारिकाणां विशेषशब्दसूची

संख्ययोराद्या प्रकरणम् अन्त्या तु कारिकां सूचयति

---

## ५

# कारिकासु धृतानामुद्दिष्टानां वा वादिनां ग्रन्थानां च सूची

संख्ययोराद्या प्रकरणमन्त्या तु कारिकां सूचयति ।

इदमवगन्तव्यम् । येषामिह नाम्नां मध्ये क्षुद्रा रेखा न तानि वस्तुतोऽस्मिन्नागमशास्त्रे विद्यन्ते । अपि स्वर्थानुसरणेन निबद्धानि तानि वृत्तिकृता । बौद्धग्रन्थास्तु विचार्य ग्रहणीयाः ।

———

## ६

# कारिकासु प्रायेण भूयसा वा बौद्धैः प्रयुक्तानां शब्दानां सूची

### ऋते द्वित्रेभ्यः सर्वे शब्दाश्चतुर्थ एव प्रकरणे

संख्ययोराद्या प्रकरणमन्त्या तु कारिकां सूचयति



---

## ७

# वृत्तावुद्धृतानां पुरुषाणां ग्रन्थकाराणां विदुषां वादिनां स्थानप्रभृतीनां च सूची

संख्याः पत्राणि सूचयन्ति

कोष्ठान्तर्गतोऽकारस्त्वसकृदित्यर्थबोधकः

# वृत्तावुद्धानां ग्रन्थानां सूची

संख्ययोराद्या प्रकरणम् अन्त्या तु कारिकां सूचयति



O. P. 81—30

१

# विषयसूची

संख्याः पत्राणि सूचयन्ति

---

* अन्तिमानि त्रीणि सूचीपत्राणि ममान्तेवासिना वत्सेनानन्तलालेन रचितानि।

# संयोजनं संशोधनं च ।

संख्ययोराद्या पत्रमन्त्या तु पङ्क्तिं सूचयति ।

इदमवगन्तव्यम्-यान्यशुद्धान्यतिस्पष्टानि तान्युपेक्षितानि ।

इह केवलं शुद्धा एव पाठाः प्रदर्शिता न पुनरशुद्धा अपि ।

१६. १० °पिटकम् । २६. १९ ग्रन्थः । २८. १० °न्यस्तेति । ७७. २७ °दुपेक्ष्यते । ७१. ११ °चार्यैः । ७४. १ इद° । १४. २६ नास्मिन्नन्य° । १७. ८ प्र° ।

३. १३ °भिप्रे° । ७. ८ °त्तं । १२, १५, °१६ प्प इत्यत्र °प्य । १६. १, ८ °दृष्ट° । २०. ३ ह्लोक° । २३. ५ °पद्येतेति ।

२७. ७ इत्येतदनन्तरमिदं संयोजनीयम्—

"योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स **यथाविद्यो** यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथा-विधैव स्मृतिस्तस्येति **तथास्मृति**र्भवति स इति" भाष्यकारः ।

३२. १६ सूक्ष्म । ४३. ११. चोप° । ४५. ४ °शम° । ४६. २ °ध्या° । ५२. ५ °वावयव २५ ; अन्ते संयोजनीयमिदम्—एवं चैषोऽविलक्षण आकाशेन । आकाशसदृश इत्येतत् । ५३. १५ कोशाः । ४५. २४ °प्यन्यो । ५६. ५ °त्तवं । ५७. १० °ल्लोह । ६१. १८ भू° । ६२. ३० °भुंव° । ६७. १३ °सुद्धि ; २६ °सुत्तं । ११६. २७ पाठस्य । १२८. १६ °त्त्वम् । १३७. ५ स्वप्न ; २३ स्वप्नद° ।

१३६. २ अन्ते संयोजनीयम्—

सत्यमिदमिष्यते भवता । वस्तुतस्तु न तत्तथा भवति । यथा प्राग्व्याकृतमित्यभिप्रायः ।

१४८. ८ विज्ञाने । १५८. १५ चरज्ञा° । १६०. २२ स्वप्नम° । १६१. ५ °बिम्ब° । १६४. ३ कल्पित° । १७४. ६ वीत° । १८८. १ आप्यं । १८६. १३ त्तान्तिः । २०३. १ दुर्दर्श° । २०५—६ मकरोद् ।

———

जरायां सुलभभ्रान्तिप्रमादायां पदे पदे ।
दूरस्थेषु च शिष्येषु सन्तः संशोधयन्त्विदम् ॥

---